श्रीमन्महामहोपाध्यायगङ्गेशोपाध्याय विरचितं

# केवलान्वयिप्रकरणम्

## दीधिति-जागदीशी-नारायणीटीकाभिः समन्वितम्



पं० श्रीकेशवद्विवेदी न्यायाचार्यः

# केवलान्वयिप्रकरणम्

श्रीमन्महामहोपाध्याय-गङ्गेशोपाध्यायविरचितम् ।

तार्किकसार्वभौम—महामहोपाध्याय—श्रीरघुनाथशिरोमणिविरचित—'दीधित्या'
विद्वद्वरेण्य—श्रीजगदीशभट्टाचार्यरचित—'जागदीशी'नामकटीकया
वाराणसीस्थराजकीयसंस्कृतमहाविद्यालयीय-न्यायशास्त्र-
प्रधानाध्यापकेन श्रीकेशवद्विवेदिन्यायाचार्येण
विरचितेन 'नारायणी-शक्ति'नामकटीका-
द्वयेन च समलंकृतम् ।

प्रकाशक

मोतीलाल बनारसीदास

नेपालीखपरा, बनारस

प्रथमं संस्करणम् १००० ] सं० २०१२ [ मूल्यम् ४)

सर्वतन्त्रस्वतन्त्राणां विद्वत्कुलसर्वस्वानां काशीविद्वत्परिषत्संरक्षकाणां परमोदारचरितानां 'पद्मभूषणानां' पितृकल्पानां पूज्यपादानां वैद्यसार्वभौमानाम् पं० श्रीसत्यनारायणशास्त्रि महाभागानां करारविन्दयोः सादरं समर्पणम्—



यस्याशेषकृपाभरः सुखमहं द्वन्द्वैर्विमुक्तः शये
यस्याशीर्वचसा प्रफुल्लिततनुः शान्तिं परां चालभे।
विद्याज्ञानतपोमयस्य भवतस्तस्यैव हस्ताब्जयोः
भक्त्या स्वां कृतिमर्पयन् सुखमुपैम्यल्पीयसीं केशवः॥

ॐ

# भूमिका

स्मृत्वेष्टदेवचरणं शरणं मदीयम्, पित्रोः पदाम्बुजयुगस्मरणं च कृत्वा ।
गौड़ीयगौरवगुरोः करुणां निधाय, प्रारभ्यते लिखनमद्य मया प्रवीणम् ॥

अद्य तावत् विंशतिशताब्द्या अतीतेऽपि अर्द्धसमये नव्यन्यायप्रधानीभूत-केवलान्वयिग्रन्थस्य टीकाद्वयमवलोकयता मया सहर्षं सगर्वञ्च वक्तुं शक्यते जगदिदं सर्वथा न्यायाश्रयमिति—

किं बहुना

धन्यो भारतवर्ष एव जयति न्यायप्रधानाश्रयो,
न्यायस्यापि जयः प्रदीपसदृशी शास्त्रेषु यस्य प्रभा ।
तूर्णं पूर्णफलप्रदं विजयते टीकाद्वयं साम्प्रतम्,
धन्यो धीरवरः सदा विजयतां नैयायिकः केशवः ॥

अपिच

नव्यन्यायसमस्तपुस्तकमहो मत्तः सतत्त्वं पुरा,
येनाधीत्य विनिर्मितन्तु सरलं टीकाद्वयं विस्तृतम् ।
योवाऽद्येष्टविशिष्टतामधिगतो विश्वेश्वरस्यालये,
सोऽयं जीवतु केशवः शतमिति श्रीशान्तिके प्रार्थ्यते ॥

किञ्च

अतुलनगुणधामा केशवख्यातनामा,
चिरमतिधनमानो यातनातो विहीनः ।
कृतगुरुजनभक्तिः पूर्णवैदुष्यशक्तिः,
स भवतु मम चाशीर्लाभतोऽतिप्रकाशी ॥

तदिदानीमपि न्यायशास्त्रस्य प्राधान्यं अनुभविनैवानुभूतं भवेदिति विना न्यायशास्त्रज्ञानं शास्त्रान्तरीयाक्षरज्ञानमात्रं भवति, नतु शास्त्रान्तरज्ञानमपीति तत्राधिकं नास्माकं वक्तव्यमवशिष्यते। अस्य केवलान्वयिसूलग्रन्थस्य प्रणेतारस्तु यादृशा महानैयायिकाः पूर्वं नासन् नवा भविष्यन्ति तादृशा एव महानैयायिकाः श्रीमन्तः प्रभूतविद्याः पण्डितगङ्गेशोपाध्यायाः पृथिवीमण्डलमण्डनायितयशोराशयो मिथिलानगरीयमंगलौनीग्रामवास्तव्याः समासन्। ग्रन्थोऽयमेभिस्त्रयोदशशताब्द्यामेव विरचित इति तेषां पौत्रयज्ञपत्युपाध्यायस्य चतुर्दशशताब्दीपर्यन्तस्थायित्वं विज्ञायास्माभिरवधारितम्। अनन्तविद्यैरनन्तशास्त्रं विदितवद्भिरेभिर्विनिर्मितश्चिन्तामणिनामकग्रन्थः सर्वेषामेव महते समुपकाराय प्रभवतीत्यत्र नास्ति सन्देहावकाशोऽपीति मन्यते।

निरुक्तचिन्तामणिग्रन्थस्य टीकाकृतां बाहुल्यस्य समुपलभ्यमानत्वेऽपि भारताकाशसमुदिता दीधितिकौमुदी तावदन्यान्यटीकाव्याख्यानादरतिमिरमपह्नुत्यैवेदानीं विराजमानेति दृश्यते। तामेव दीधितिमधिचिन्तामणि तन्वानस्तार्किकशिरोमणिः श्रीमान् पण्डितप्रवरो रघुनाथशिरोमणिः स्वजन्मना गौडप्रान्तीयनवद्वीपमेवालञ्चकार। तस्य च सर्वजनविदितं पाण्डित्यमेकेन मुखेन एकया लेखन्या वा वर्णयितुमस्माभिर्न शक्यते सुतरां तन्महत्त्वं महत्त्वमेव वयं वक्ष्यामः। अतएव—

विदुषां निवहैरिहैकमत्या यददुष्टं निरटंकि यच्च दुष्टम्।
मयि जल्पति कल्पनाधिनाथे रघुनाथे मनुतां तदन्यथैव॥

इति दीधितिकृतामिहितमतिसत्यमित्यस्माभिर्बहुषु ग्रन्थेषु समुपलभ्यते। दीधितिकारसमयस्तु पञ्चदशशताब्द्या अन्तिमभागो "बाणैर्वेदयुतैः सशम्भुनयनैः संख्यां गते हायने श्रीमद्गौडमहीभुजा" वित्यादिमहानैयायिकपक्षधरमिश्रस्वहस्तलिखितश्लोकत एवास्माभिरवगम्यते।

दीधितिकारतो द्विशतवर्षानन्तरं नैयायिकप्रवरः श्रीमान् जगदीशतर्कालंकारः प्रादुर्बभूव, यस्य टीकाग्रन्थमधीत्यैवेदानीमपि लोका महानैयायिकत्वं प्राप्नुवन्ति। अनेन तावत् दीधितिमधिकृत्यैव संक्षिप्तटीकाग्रन्थो विरचितः, अयन्तु गौरांगदेवश्वशुरकुले नवद्वीपनगर एव समुत्पन्न इति विज्ञायते। यद्यप्यनेके दीधितिमधि-

कृत्यैव टीकाग्रन्थं रचितवन्तः, तथापि प्राचीनतामावहन्ती विपुलगाम्भीर्यपरिपूर्णा जागदीश्यप्येतद्देशीयैः समाद्रियते । अस्य तर्कालंकारस्य टीकालेखसमयस्तु सप्तदशशताब्द्याः प्रथमभाग इति तु मया अवच्छेदकत्वनिरुक्तिविवृतिभूमिकायां प्रकाशीकृतम् , तर्कालंकारस्वहस्तलिखितश्लोकतः प्रमाणीकृतञ्च । केवलान्वयिदीधितिजागदीश्या विवृतेः काठिन्यमतिप्रसिद्धमिति तामेव विवृतिं सरलीकर्त्तुं श्रीमान् पण्डितप्रवरः केशवद्विवेदी नैयायिकः नारायणीनामिकां टीकां शक्तिनामिकाञ्च टीकामतिप्रयत्नं विरचितवानिति मया ज्ञायते । अयन्तु आजमगरमण्डलनिवासी काशीराजकीयसंस्कृतमहाविद्यालयस्य न्यायप्रधानाध्यापको विदितवेदितव्यो वर्तते, न केवलमस्य नैयायिकत्वमात्रमेव स्वप्राधान्यं सम्पादयति, किन्तु वैदान्तिकत्वादिकमपि । वेदान्तादिशास्त्रेषु तावदस्य विशेषव्युत्पत्तिर्बहुशो मया प्रत्यक्षीकृता । तदयमपि वक्तुं शक्नोति—

धीरा यदीह नवनीतिनिदाघतापैः, श्रान्तास्तदा पिवत शीतलमादरेण ।
दत्तं मया गुरु वचःसरसां प्रभूतम् , नारयणीविवृतिवारि सुखावगाहम् ॥ इति

वस्तुतस्तावदस्य मदीयशिष्यत्वं मामकगौरववृद्धिमेवावहतीति मया मन्यते । निरुक्तपुस्तकस्य मुद्रणविधावस्य प्रधानसहायकः श्रीमान् पण्डितप्रवरः श्रीश्रीकृष्णपन्तः साहित्याचार्यो वेदान्तव्याकरणशास्त्रेषु विशेषनिष्णातः बहूनां वेदान्तग्रन्थानां टीकानुवादकारः प्रकाशकश्च वाराणस्यां विशिष्टपण्डितभावमातनोति । सर्वजनविदितस्य तस्य परोपकारित्वमत्यन्तं प्रशंसनीयं वर्तते । एतस्यातुलनगुणराशीनामल्पाक्षरेण वर्णनमसम्भवीति विरम्यते । द्वितीयसहायकस्तु वृन्दारण्यवास्तव्यः श्रीमान् हरिदासगोस्वामी न्यायशास्त्री । स च काव्यव्याकरणसांख्यवेदान्ततर्कतर्कमीमांसावैष्णवदर्शनतीर्थपदैः समलंकृतो विराजते । अस्यापि श्रीमतः केशवस्यान्तेवासिनो ममापि शिष्यस्य समधिकृतशास्त्रव्युत्पत्तेः सटीककेवलान्वयिग्रन्थमुद्रणविधौ विपुलपरिश्रमः सर्वथा प्रशंसनीयः, तद्विषये नाधिकं वक्तव्यमपेक्षते ।

अन्ते केवलान्वयिग्रन्थस्य संक्षिप्तं किञ्चिद्विवरणं मया प्रदर्शितं सुधीभिरवश्यं प्रथमतो मूलकृतां प्रमेयत्वाभिधेयत्वादौ केवलान्वयित्वव्यवस्थापनं मीमांसकमतदूषणञ्चातीव दुरूहं प्रभूतपाण्डित्यवेद्यम् ,दीधितिकृतामपि केवलान्वय्यनुमाननिराकरणं, केवलव्यतिरेक्यनुमाननिराकरणञ्च विशिष्टवैदुष्यप्रयोजकं विशिष्टन्यायविद्यै-

रेवावगन्तव्यं, जगदीशतर्कालंकारव्याख्यातः सहचारभेदकल्पो व्याप्तिभेदकल्पश्च अभिज्ञसमस्तनैयायिकगणविदितोऽतुलनविद्यैरेव वेदितव्यः। न्यायाचार्य-श्रीकेशवनिर्मितस्य टीकाद्वयस्य प्रकाश्यमानविजातीयजगदीशभावस्यापूर्वताऽपि विद्वद्भिरेव सम्यगवधारणीयेत्यत्यास्तां विस्तरः।

वंगांगविक्रमपुरे जनितः सधीरे,
वाराणसीमधिवसन् कृतनीतिविद्यः।
न्यायाम्बुधेर्विवृतिसेतुमपि प्रकुर्वन्
योऽसौ शिवं स्मरति सोऽद्य सतां समीपे ॥

ऋत्वब्धिनागविधुमानसिते शकाब्दे,
चैत्रीयपूर्णसकलेन्दुकले दिने च।
वारे गुरोः शिवपुरे नयभूमिकायाः,
धीरः समापयति लेखमयं सुदीर्घम् ॥

देवनाथपुरम्
वाराणसी
सं० २०१२

श्रीवामाचरणभट्टाचार्यः

# शुद्धिपत्रम्

| पृष्ठे | पंक्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ६६ | ३ | व्यापक- | स्वव्यापकसाध्य |
| ८६ | २ | ज्ञानत्वेनाहेतुत्वात्- | ज्ञानत्वेनैवाऽहेतुत्वात् |
| ८६ | ४ | विशिष्टस्य- | विशिष्टलिङ्गस्य |
| ८६ | ४ | अभावप्रतियोगि- | अभावप्रतियोगित्व- |
| ६० | १ | कत्वं- | कत्वं-केवलव्यतिरेकित्वं |
| ६० | १ | परामर्शजन्य- | परामर्शाजन्य- |
| १०७ | ८ | गगनादिभ्य इति,- | गगनादीति |

७६ पृष्ठे १८ पंक्तौ 'च्छिन्न'—तः परमधस्तनसन्दर्भोऽनुसन्धेयः—एव प्रकारतया भानादिति भावः। **प्रकृतेति**। वह्न्यभावत्वावच्छिन्नसाध्यकानुमितिजनकतावच्छेदिकेत्यर्थः। वह्न्यभावान्वयव्याप्तिविशिष्टवह्निव्यापकीभूताभावप्रतियोगिमानयमित्याकारकनिश्चयादुत्पन्नाया वह्न्यभावानुमितेर्जनकतावच्छेदकत्वं वह्न्यभावान्वयव्याप्तौ नाङ्गीक्रियते अन्वयव्याप्त्यनवच्छिन्नवह्निव्यापकीभूताभावप्रतियोगिमानयमित्याकारकनिश्चयादपि वह्न्यभावानुमित्युत्पादस्यावश्यकतया तादृशानुमितिं प्रति वह्निव्यापकाभावप्रतियोगित्वरूपवह्न्यभावव्यतिरेकव्याप्तेरेव जनकतावच्छेदकत्वोपगमात्तादृशस्थले केवलान्वयित्वमपि अन्वयव्याप्तिज्ञानादौ न सम्भवति, यत्र हेतुतावच्छेदकावच्छिन्नेऽन्वयव्याप्तिप्रकारितामात्रमेव साध्यानुमितिजनकतावच्छेदकं तत्रैवान्वयव्याप्तिज्ञानादेः केवलान्वयित्वस्वीकारात्। न च वह्निव्यापकीभूताभावप्रतियोगित्वरूपाया व्याप्तेर्ज्ञानस्य निर्धर्मितावच्छेदककतया कथं तस्य वह्न्यभावानुमितिजनकत्वमिति वाच्यम्, दीधितिकृन्मते लाघवात् निर्द्धर्मितावच्छेदककसाध्याभाववदवृत्तित्वत्वावच्छिन्नरूपान्वयव्याप्तिज्ञानस्येव लाघवान्निरुक्तस्थलेऽपि वह्न्यभावानुमितिं प्रति निर्द्धर्मितावच्छेदककवह्निव्यापकीभूताभावप्रतियोगित्वरूपवह्न्यभावव्यतिरेकव्याप्तिज्ञान—

❀ श्रीकृष्णाय नमः । श्रीवनदेव्यै नमः ❀

# केवलान्वयिप्रकरणम्

### चिन्तामणिः

तच्च—(अनुमानं त्रिविधं, केवलान्वयिकेवलव्यतिरेक्यन्वयव्यतिरेकिभेदात् ।)

### दीधितिः

केवलान्वयीत्यादि । केवलान्वयिसाध्यकादीत्यर्थः । तत्र—

### जागदीशी

केवलान्वयिहेतोस्तद्धर्मिकव्याप्तिज्ञानस्य वा विभजने इदं वाच्यं

### नारायणी

समुद्रादुद्भूतं विपुलभयदं भीषणविषम्
निपीय प्रेम्णा यो हरति सुरताभीतिमतुलाम् ।
पुनर्योऽसौ भस्मीकृतमनसिजो देवशरणम्
नमस्ये विश्वेशं तमतिकरुणं शङ्करविभुम् ॥१॥

रमणीयवनान्तरालवासां शुचिहासांशुदिगन्तरालभासाम् ।
कलयामि मनोनिकेतनेऽस्मिन् वनदेवीमखिलार्थकल्पवल्लीम् ॥२॥

अद्वैतोपधिहीनवत्सलतया शश्वत्समुत्साहितो
यत्पादाब्जपरागपूतहृदयः प्राप्तोऽस्मि भव्यां स्थितिम् ।
दिव्यौदार्यदयानयादिमहितं तं शारदाभूषणम्
वन्दे पद्मविभूषणं बुधगुरुं श्रीसत्यनारायणम् ॥३॥

## नारायणी

यत्पादपल्लवस्पर्शात्तर्के कर्कशधीर्भवेत् ।
नमामि तर्कतीर्थं तं श्रीवामाचरणं गुरुम् ॥४॥
केवलान्वयिनो व्याख्यां जगदीशकृतामयम् ।
विवृणोत्युकारार्थं केशवः केशवप्रियः ॥५॥

अनुगतसामान्यलक्षणाधीनसामान्यधर्मप्रकारकज्ञानादनुमानं कतिविधमिति जिज्ञासया प्रथमतोऽनुमानं विभजते मूले तच्चेति-पूर्वं निरूपितमित्यर्थः ।

## शक्तिः

तच्चेति—ननु प्रतिज्ञातस्य निरूपणे विभजने च सङ्गत्यपेक्षा भवतीति सङ्गतिं विना कथं केवलान्वयिनिरूपणमिति चेन्न, अत्रापि प्रसङ्गसङ्गति-सत्त्वात् । तथाचानुमानत्वावच्छिन्नविभाजककेवलान्वयित्ववत्तासम्बन्धेन स्मृतस्य केवलान्वयिनः उपेक्षानर्हत्वात्प्रसङ्गोऽस्त्येव । सामान्यतः सङ्गतिलक्षण-समन्वयस्तु केवलान्वयिपदार्थः कीदृश इति जिज्ञासया भवतीति ध्येयम् ।

त्रिविधमिति—विधप्रत्ययस्य उद्देश्यतावच्छेदकसमनियतवस्तुमदन्यसङ्ख्याव-त्त्वमर्थः, व्याप्यत्वं व्यापकत्वञ्च स्वाश्रयाश्रयत्वसम्बन्धेन । वस्तुमत्त्वञ्च स्ववृत्तित्व-स्वसमानाधिकरणस्वेतरवृत्तित्वोभयसम्बन्धेन । केवलान्वयित्व-केवल-व्यतिरेकित्वान्वयव्यतिरेकित्वगतत्रित्वसंख्यायाः स्वाश्रयाश्रयत्वसम्बन्धेन साध्य-त्वं केवलान्वयित्व-केवलव्यतिरेकित्वान्वयव्यतिरेकित्वघटत्वैतद्गतचतुष्ट्वसं-ख्यामादायानुमानस्य चतुर्विधत्वापत्तिवारणाय समनियतत्वघटकव्याप्यत्वदलो-पादानम् । अनुमानत्वव्याप्यत्वञ्च उद्देश्यतावच्छेदकीभूतानुमानत्वाभावाधिक-रणनिरूपितस्वाश्रयाश्रयत्वसम्बन्धावच्छिन्नवृत्तित्वाभाववत्त्वम् । तथाचोक्त-चतुष्ट्वसङ्ख्याया अनुमानत्वाभाववति घटे स्वाश्रयाश्रयत्वसम्बन्धेन वर्त्तमानतया तस्यानुमानत्वाव्याप्यत्वान्नानुमानस्य चतुर्विधत्वापत्तिरिति भावः ।

नारायणी

अनुमानमिति पक्षनिर्देशः, तत्र त्रिविधत्वस्य साध्यत्वमाह त्रिविधमिति । त्रिविधत्वञ्चात्रानुमानत्वसमनियतवस्तुमदन्यत्रित्वसङ्ख्यावत्त्वम्, उद्देश्यतावच्छेदकसमनियतवस्तुमदन्यसङ्ख्याया एव विधशब्दार्थत्वात् । प्रकृते तादृशी च सङ्ख्या केवलान्वयित्व-केवलव्यतिरेकित्वान्वयव्यतिरेकित्वगतत्रित्वरूपा, तस्याश्च स्वाश्रयाश्रयत्वसम्बन्धेनानुमानत्वसमनियतत्वघटकव्याप्यत्वव्यापकत्वे बोद्धव्ये । अधिकमन्यत्रानुसन्धेयम् ।

शक्तिः

केवलान्वयित्व-केवलव्यतिरेकित्वगतद्वित्वसंख्यामादायानुमानस्य द्विविधत्वापत्तिवारणाय समनियतत्वघटकव्यापकत्वदलम् । अनुमाघत्वव्यापकत्वञ्च अनुमानत्वसमानाधिकरणभेदनिरूपितस्वाश्रयाश्रयत्वसम्बन्धावच्छिन्नप्रतियोगितावच्छेदकताशून्यत्वम् । तथाचोक्तद्वित्वसङ्ख्याया अनुमानत्वाधिकरणेऽन्वयव्यतिरेकिणि स्वाश्रयाश्रयत्वसम्बन्धेन निरुक्तद्वित्ववान्नेत्याकारकभेदसत्त्वात्तत्र-तादृशभेदप्रतियोगितावच्छेदकताया एव सत्त्वेन तस्या अनुमानत्वाव्यापकत्वादितिभावः ।

केवलान्वयित्व-केवलव्यतिरेकित्वान्वयव्यतिरेकित्वानुमानत्वैतद्गतचतुष्ट्वसङ्ख्यामादायानुमानस्य चतुर्विधत्वापत्तिवारणाय वस्तुमदन्यत्वं संख्याविशेषणमभिहितम् । तथाच निरुक्तचतुष्ट्वसंख्यायाः पूर्वोक्तोभयसम्बन्धेनानुमानत्ववृत्तितयाऽनुमानत्वसमानाधिकरणानुमानत्वेतरकेवलान्वयित्वादिवृत्तितया चानुमानत्वरूपवस्तुमत्त्वाद्वस्तुमदन्यत्वस्य तादृशसंख्यायां विरहान्न तामादायानुमानस्य चतुर्विधत्वापत्तिः सम्भवतीति भावः ।

नचैवं गगनस्याश्रयाप्रसिद्ध । केवलान्वयित्व-केवलव्यतिरेकित्वान्वयव्यतिरेकित्वगगनैतद्गतचतुष्ट्वसंख्याया अपि स्वाश्रयाश्रयत्वसम्बन्धेनानुमानत्वसमनियततया तादृशसंख्यामादायानुमानस्य चतुर्विधत्वापत्तिरिति वाच्यम्, अवृत्त्यवृत्तित्वस्य तादृशसंख्याविशेषणत्वोपगमात् निरुक्तचतुष्ट्वसंख्याया अवृत्तिगगना-

नारायणी

**केवलान्वयीति** केवलान्वयिसाध्यकानुमान-केवलव्यतिरेकिसाध्यकानुमानान्वयव्यतिरेकिसाध्यकानुमानभेदादित्यर्थः। अत्र निरुक्तभेदस्य प्रतियोगितासम्बन्धेन हेतुत्वम्। स्वरूपसम्बन्धेन तस्य तथात्वे तादृशभेदस्य स्वरूपसम्बन्धेन घटपटादावपि सत्त्वेन तत्र यथोक्तत्रिविधत्वरूपसाध्यस्य स्वाश्रयाश्रयत्वरूपसाध्यताघटकसम्बन्धेन विरहान्निरुक्तहेतोर्व्यभिचारित्वापत्तिःपक्षे हेतोरसत्त्वेन स्वरूपासिद्धिश्च स्यादिति ध्येयम्। नचैवं निरुक्तभेदरूपहेतोः प्रतियोगितासम्बन्धेन पक्षमात्रवृत्तितया दृष्टान्ताभावादप्रयोजकत्वशङ्काकवलितत्वमितिवाच्यम्। व्यतिरेकिदृष्टान्तस्यैव सौलभ्यात्। तस्याप्यनुमानाङ्गतायाः प्राचीनैरभ्युपगतत्वात्।

अथवा तादृशभेदादित्यत्र ल्यब्लोपे पञ्चमी नतु तस्य हेतुत्वम्। तथाच तादृशानुमानभेदमभ्युपगम्यानुमानस्य त्रिविधत्वम्पर्य्यवसितमित्यपि व्याख्येयमिति तु विभावनीयम्।

विभक्तेषु प्रथमोद्दिष्टं केवलान्वयिनं निरूपयितुमाह **तत्रेति**। केवलान्वयिसाध्यकानुमान-केवलव्यतिरेकिसाध्यकानुमानान्वयव्यतिरेकि-

शक्तिः

दिवृत्तितया न तामादायानुमानस्य चतुर्विधत्वापत्तिः। न च तथापि अनुमानत्वगतैकत्वसंख्याया अपि स्वाश्रयाश्रयत्वसम्बन्धेनानुमानत्वसमनियततया वस्तुमदन्यत्वेन च घत्तु शक्यत्वात्तामादायानुमानस्यैकविधत्वापत्तिरिति वाच्यम्, उद्देश्यतावच्छेदकावृत्तित्वेनापि संख्याया विशेषणीयत्वात् निरुक्तैकत्वस्योद्देश्यतावच्छेदकीभूतानुमानत्ववृत्तितया वारणसम्भवात्। नचैवं वस्तुमदन्यत्वविशेषणं व्यर्थं केवलान्वयित्व-केवलव्यतिरेकित्वान्वयव्यतिरेकित्वानुमानत्वगतचतुष्ट्वसंख्याया अनुमानत्वरूपोद्देश्यतावच्छेदकवृत्तित्वेन वारणसम्भवादिति वाच्यम्, केवलान्वयित्व-केवलव्यतिरेकित्वान्वयव्यतिरेकित्व-प्रमेयत्वैतद्गतचतुष्ट्वसङ्ख्यामादायानुमानस्य चतुर्विधत्वापत्तिवारणायैव वस्तुमदन्यत्वस्यसार्थक्योपपादनसम्भवादिति ध्येयम्।

चिन्तामणिः

तत्र—असद्विपक्षं केवलान्वयि ।

दीधितिः

तेषुमध्ये, असद्विपक्षं—अत्यन्ताभावाप्रतियोगिसाध्यकं केवलान्वयि ।

नारायणी

साध्यकानुमानेषु मध्ये इत्यर्थः। नच तन्निष्ठायाः सङ्गतेस्तन्निरूपप्रयोजकतया केवलान्वयिनि सङ्गत्यनभिधानात्तस्य निरूपणमेव न सम्भवतीति वाच्यम्। तेषु केवलान्वयिपदार्थः कः, इति जिज्ञासया केवलान्वयिनो निरूपणीयतया केवलान्वयिपदार्थत्वरूपप्रसङ्गसङ्गतेस्तत्र सत्त्वेन तन्निरूपणस्यानौचित्यासम्भवात् तदभिधानस्यानपेक्षितत्वात्। इति तु नव्याः।

असद्विपक्षमिति। असन् विपक्षो निश्चितसाध्याभाववान् यस्य यत्साध्यकानुमितिकरणस्य तत् 'तत्साध्यकानुमितिकरणं केवलान्वय्य-

शक्तिः

अथ तत्केवलान्वयित्वतदन्यकेवलान्वयित्वकेवलव्यतिरेकित्वान्वयव्यतिरेकित्वेतद्त्वगतचतुष्ट्वसङ्ख्याया तत्केवलान्वयित्वतदन्यकेवलान्वयित्वतत्केवलव्यतिरेकित्वतदन्यकेवलव्यतिरेकित्वतदन्वयव्यतिरेकित्वतदन्यान्वयव्यतिरेकित्वगतषट्-त्वादिसङ्ख्याया अपि अनुमावत्वसमवियततया वस्तुमदन्यतया च तादृशतादृशसङ्ख्यामादायानुमावस्य चतुर्विधत्वषड्विधत्वाद्यापत्तिवारणं दुःशक्यमेवेति चेन्न, केवलान्वयित्वादिविशिष्टान्यत्वस्यापि उद्देश्यतावच्छेदकसमनियतवस्तुमदन्य-सङ्ख्यायाविशेषणत्वोपगमात्। वै० स्वसमानाधिकरणद्वयवृत्तित्वसम्बन्धेन। उक्तषट्त्वादिसङ्ख्याया केवलान्वयित्वसमावाधिकरणद्वयवृत्तित्वाद् वारणं सम्भवतीति, इति गुरवः श्रीभट्टाचार्य्यचरणा इति ध्येयम्।

**नारायणी**

नुमानमित्यर्थः। यदि च केवलान्वयिसाध्यस्याभावाप्रसिद्ध्या निश्चितसाध्याभाववतो विपक्षस्याप्रसिद्ध्या नेदं लक्षणं युक्तमित्युच्यते तदा स्वाभावप्रकारकनिश्चयविषयीभूतधर्मिकालीनत्वसंसर्गेण प्रकृतसाध्याभाववत्प्रकृतसाध्यानुमितिकरणस्यैव केवलान्वयित्वेन विवक्षिततया नासङ्गतिः। तथाच केवलान्वयिनः साध्यस्य निरुक्तसम्बन्धस्य व्यधिकरणसम्बन्धतया तत्सम्बन्धावच्छिन्नप्रतियोगिताककेवलान्वयिसाध्याभावस्य केवलान्वयितया केवलान्वयिसाध्यकानुमितिकरणेऽप्यक्षततया केवलान्वय्यनुमाने लक्षणसमन्वयो निराबाध इति यथाश्रुतग्रन्थानुरोधिनः।

केवलान्वयीत्यादि मूलस्य केवलान्वयिसाध्यकादीत्यर्थकत्वं दीधितिकृदुक्तं सङ्गमयितुमाह टीकायां **केवलान्वयिहेतोरिति**। केवलान्वयित्वविशिष्टस्यात्यन्ताभावाप्रतियोगिनो हेतोरित्यर्थः। **तद्धर्मिकेति**। केवलान्वयिहेतुधर्मिकव्याप्तिज्ञानस्य हेतुधर्मिकस्य केवलान्वयिव्याप्तिज्ञानस्य वेत्यर्थः। तथाच केवलान्वयित्वं हेतौ तद्धर्मिकव्याप्तिज्ञाने वा विशेषणमित्याशङ्कितुरभिप्रायः इति भावः। विभजते अनुमानत्वरूपसामान्यधर्मावच्छिन्नानामनुमानत्वव्याप्यीभूतानाम्परस्परविरुद्धकेवलान्वयित्वादिधर्मेण धर्मिणां केवलान्वयिप्रभृतीनां प्रतिपादने।

**शक्तिः**

इदमत्रावधेयम्-उच्यते इत्यादिना केवलान्वयित्वं साध्यनिष्ठतयाऽभिहितमित्यत्र न किमपि विनिगमकं तत्र हि वृत्तिमदत्यन्ताभावाप्रतियोगित्वं केवलान्वयित्वमित्येवोक्तं नतु शब्दतः साध्ये केवलान्वयित्वमिति चेत् ? उच्यते वृत्तिमदत्यन्ताभावाप्रतियोगित्वं केवलान्वयित्वमित्यभिधाय अग्रे तथा प्रमेयत्वाभिधेयत्वादि केवलान्वयीत्युक्तम्। ततश्च तथापि केवलान्वयिनि संशयाभावात् कथमनुमितिः इत्युक्तम्। एवञ्च केवलान्वयित्वं साध्यविशेषणमितिसिद्धम्।

जागदीशी

घटत्वात् इत्यादौ घटत्वादिहेतोस्तज्ज्ञानस्य वा असंग्रहापत्तिः, अत आह—केवलान्वयिसाध्यकेति। यद्यपि केवलान्वय्यादि-भेदादित्यत्र केवलान्वयितया परिभाषितत्वरूपं केवलान्वयित्वं वाच्यत्वादिसाध्यकघटत्वादेरपि अक्षतमेवेति केवलान्वयिसाध्यका-दीति व्याख्यानमफलम्; तथापि हेतुनिष्ठस्यैव केवलान्वयित्व-पदार्थस्य प्रक्रान्तत्वे पश्चादुच्यते इत्यादिना साध्यनिष्ठस्य केवला-न्वयित्वस्याभिधानं मूलकृतः सन्दर्भविरुद्धं स्यात्, अतः साध्य-निष्ठस्यैव केवलान्वयित्वस्य उपक्रमार्थमित्थं व्याख्यातमिति ध्येयम्। तत्र केवलान्वयिनि—इति योजनायां सप्तम्यर्थाधेयत्वस्य बाधित-त्वात् सप्तम्या निर्द्धारणार्थकत्वं व्यनक्ति-तेष्विति। असद्विपक्षमि-ति मूलं विपक्षस्य सिद्ध्यसिद्धिभ्यां व्याहतमत आह असदिति। अत्यन्तेति-अत्यन्ताभावाप्रतियोगिसाध्यकानुमितिकरणमित्यर्थः। तेन लिङ्गस्य तज्ज्ञानस्य मनसो वा अनुमितिकरणत्वेऽपि न क्षतिः। केवलान्वयीतिपदन्तु मूलस्थमेव योजितं नतु स्वातन्त्र्येणोक्तम्, मूलस्थस्य तस्य वैयर्थ्यापत्तेः।

यद्यपि तत्र केवलान्वयिसाध्यके असद्विपक्षम्—अत्यन्ताभावा-प्रतियोगि केवलान्वयीति व्याख्यानं सम्भवति निर्द्धारण इवान्तर्ग-तत्वेऽपि सप्तमीप्रयोगात्, तथापि द्वन्द्वस्थानामेकं परित्यज्य अप-रस्य परामर्शकत्वं तदादिशब्दस्य अव्युत्पन्नमित्याशयेनैतत् परि-त्यक्तमितिभावः।

नारायणी

**इत्यादाविति** आदिपदात्प्रमेयत्वादिसाधकपटत्वादिहेतोः परिग्रहः। **असङ्ग्रहापत्तिरिति**। तथाचात्यन्ताभावाप्रतियोगित्वरूपं केवलान्वयित्वं यद्याचार्य्यमतसिद्धे केवलान्वयिसाध्यकानुमितिकरणरूपहेतौ विशेषणं तदा वाच्यत्वसाध्यकघटत्वहेतावव्याप्तिः। अत्यन्ताभावाप्रतियोगित्वरूपकेवलान्वयित्वस्य घटत्वहेतौ विरहात्। यदि च नव्यमतसिद्धे हेतुधर्मिकव्याप्तिज्ञानरूपानुमितिकरणे विशेषणं तदाऽपि वाच्यत्वसाधकघटत्वहेतुधर्मिकव्याप्तिज्ञानेऽव्याप्तिस्तादृशव्याप्तिज्ञानस्याप्यत्यन्ताभावाप्रतियोगित्वरूपकेवलान्वयित्वविरहादितिभावः।

**आहेति** दीधितिकार इति शेषः। तथाच केवलान्वयित्वम् अत्यन्ताभावाप्रतियोगित्वरूपं साध्यस्यैव विशेषणम् एवञ्च न वाच्यत्वसाध्यकघटत्वादिहेतौ तद्धर्मिकव्याप्तिज्ञाने वाऽव्याप्तिः। निरुक्तहेतौ तद्धर्मिकव्याप्तिज्ञाने वा केवलान्वयिसाध्यकानुमितिकरणत्वस्यानपायात् इति फलितम्।

ननु वाच्यत्वसाध्यकघटत्वहेतावपि प्रकृतहेतुप्रकारकनिश्चयोत्तरजायमानप्रकृतसाध्यविधेयकानुमितित्वघटितधर्मावच्छिन्नस्वनिष्ठकार्य्यतानिरूपितकारणतावच्छेदकप्रकारितात्वव्यापकसाध्यान्वयव्याप्तिप्रकारितात्वकानुमितिकरणत्वरूपकेवलान्वयितया परिभाषितत्वस्याक्षततया कथं तत्राव्याप्तिरित्याशङ्कते **यद्यपीति**। तथाच केवलान्वयित्वस्य साध्यविशेषणत्वाभिधानमयुक्तमित्याशयः। **इत्यत्र**=इत्यस्मिन् मूले। केवलान्वयितयेत्यादि=पूर्वोक्तं प्रकृतहेतुप्रकारकेत्यादिलक्षणमेव केवलान्वयितया परिभाषितत्वमवगन्तव्यम्। केवलान्वयित्वस्यात्यन्ताभावाप्रतियोगित्वार्थकतया परिभाषितत्वोक्तिरिति ध्येयम्। उत्तरयति **तथापीति**। अयमभिप्रायः, यदि च निरुक्तकेवलान्वयितया परिभाषितत्वरूपं केवलान्वयित्वं हेत्वादिविशेषणमेवोच्यते तदाऽग्रे उच्यत इत्यादिना वृत्तिमदत्यन्ता-

नारायणी

भावाप्रतियोगित्वरूपकेवलान्वयित्वस्य साध्यविशेषणत्वाभिधानं मूलकृतामसङ्गतं स्यादिति मूलोक्तसाध्यविशेषणमेव केवलान्वयित्वमिति सूचयितुमत्रापि केवलान्वयित्वस्य साध्यविशेणत्वं दीधितिकृताऽभिहितमिति ।

अक्षरार्थस्तु—हेत्वादिनिष्ठस्यैव = हेतौ तद्धर्मिकव्याप्तिज्ञाने वर्त्तमानस्य । **केवलान्वयित्वेति** परिभाषितेत्यादिः । प्रक्रान्तत्वे = प्रथमत एव परिभाषितकेवलान्वयित्वरूपार्थकत्वे । इत्यादिना = इत्यादिग्रन्थेन । साध्यनिष्ठस्य = साध्ये वर्त्तमानस्य । केवलान्वयित्वस्य = वृत्तिमदत्यन्ताभावाप्रतियोगित्वस्य । उपक्रमार्थम् = मूलाभिप्रायसूचनार्थम् । **इत्थम्** = केवलान्वयितायाः साध्यविशेषणत्वम । **व्याख्यातमिति** दीधितिकृतेति-शेषः । एतेन केवलान्वयितायाः प्रथमं साध्यविशेषणत्वं दीधितिकृदुक्तं विलोक्य मूलकृतामुच्यते इत्यादिना साध्यस्यैव केवलान्वयित्वं विशेषणमित्यभिधानमनुचितं टीकाकृतां व्याख्यानस्य स्वसन्दर्भनिविष्टतायाः सर्वथाऽसम्भवात् इति केषाञ्चिदाक्षेपोऽपि निरस्तः । साध्यस्यैव केवलान्वयित्वं विशेषणं मूलकृत्सम्मतमितिसूचयितुम्प्रथममेव केवलान्वयित्वं साध्यस्यैव विशेषणमिति दीधितिकृताऽभिहितमिति तु सुधीभिर्विभावनीयम् इति श्रीभट्टाचार्य्यचरणाः ।

तत्रेतिमूलस्थसप्तम्यन्ततत्पदेन केवलान्वयिनः परामर्शे तदुत्तरसप्तम्यर्थाधेयतायाः कुत्राप्यन्वयासम्भवात् तत्पदस्य दीधितिकृदुक्तमनुमानत्रयपरामर्शकत्वं घटयितुमाह **तत्रेति** । योजनायां परामर्शनीयायां सत्याम् इति शेषः । **सप्तम्यर्थेति** । यद्यपि तत्पदेन केवलान्वयिनः परामर्शेऽपि तत्पदोत्तरसप्तम्याः तादात्म्यसम्बन्धावच्छिन्नवृत्तित्वार्थकत्वे तादृशवृत्तित्वस्याग्रे असद्विपक्षादावन्वयः सम्भवतीत्युच्यते, तथापि तादात्म्यस्य वृत्त्यनियामकतया तत्सम्बन्धावच्छिन्नाधेयत्वाप्रसिद्ध्या वृत्तिनियामक-

नारायणी

सम्बन्धावच्छिन्नाधेयत्वस्यैव सप्तम्यर्थताया आवश्यकतया सप्तम्यर्थाधेयत्वस्य वाधितत्वमभिहितमिति ध्येयम् ।

ननु तर्हि अनुमानत्रयस्य तत्पदात्परामर्शे तदुत्तरं सप्तम्या आधेयत्वातिरिक्तार्थकत्वं कथं सुसङ्गतं स्यादित्यत आह **सप्तम्या** इति। मूलस्थ तत्पदोत्तरसप्तम्या इत्यर्थः। **निर्द्धारणार्थकत्वमिति** । विशेष्यान्यत्वभेदप्रतियोगित्वरूपार्थद्वयात्मकनिर्द्धारणार्थकत्वम् **व्यनक्तीति** । तथाच निर्द्धारणसप्तम्याः प्रथमार्थस्य विशेष्यान्यत्वस्य प्रकृत्यर्थेऽन्वयः, विशेष्यान्यत्वान्वित प्रकृत्यर्थस्य तु तादृशसप्तम्या द्वितीयभेदप्रतियोगित्वरूपार्थैकदेशे भेदे आधेयतयाऽन्वयः, तादृशप्रतियोगित्वस्य च विधेयेऽन्वयः, एवञ्च केवलान्वयिभिन्नानुमानवृत्तिभेदप्रतियोगि असद्विपक्षाभिन्नं केवलान्वयीति वोधः पर्यवस्थितः ।

असद्विपक्षं केवलान्वयीति यथाश्रुतमूलस्य असन् अविद्यमानः अभावप्रतियोगीति यावत्। विपक्षो निश्चितसाध्याभाववान् यस्य प्रकृतसाध्यानुमितिकरणस्य हेत्वादेस्तादृशहेत्वाद्यनुमितिकरणस्यैव केवलान्वयित्वमित्यर्थकताया एवावश्यकतया यदि वाच्यं ज्ञेयत्वादित्यादौ ज्ञेयत्वादिहेतोः विपक्षज्ञानं वर्त्तते तदा ज्ञानविषयतायाः प्रकृतवस्तुनि वर्त्तमानताया एव सिद्धान्तिततया तत्र अभावप्रतियोगित्वासम्भवः। यदि च तादृशज्ञेयत्वादिहेतोर्विपक्षत्वज्ञानमेव नास्ति तदा विपक्षस्य शशविषाणायमानतयाऽलीके ज्ञानविषयताया नैयायिकमतासिद्धत्वेन तदाऽपि तादृशविपक्षे प्रतियोगित्वं दुर्लभं स्यात्। 'अभावविरहात्मत्वं वस्तुनः प्रतियोगितेत्यादिनालीके प्रतियोगिताया अनभ्युपगमादिति- सिद्ध्यसिद्धिभ्यां यथाश्रुतमूलमसङ्गतार्थकं स्यादतो मूलमन्यथा व्याचक्षाणानां दीधितिकृतामसदित्यादिग्रन्थमवतारयति **असद्विपक्षमितीति**- पूर्वोक्तयथाश्रुतार्थकम्। **मूलमिति** यथाश्रुतेत्यादिः। **सिद्ध्यसिद्धिभ्या**-

नारायणी

मिति । यदि विपक्षस्य सिद्धिर्ज्ञानं स्यात् तदा तस्याभावासम्भवादसद्विपक्षमित्यसङ्गतं स्यात् । यदिचासिद्धिः = विपक्षस्य ज्ञानं नास्ति तदा तस्यालीकतयातत्राभावप्रतियोगित्वासम्भवः इति उभयथैव असद्विपक्षमित्यसङ्गतमिति भावः । व्याहतमिति असङ्गतमित्यर्थकम् ।

अत्यन्तेति । तथा चात्यन्ताभावनिरूपितप्रयोगित्वाभाववत्प्रकृतसाध्यकानुमितिकरणत्वं केवलान्वयित्वमितिलक्षणार्थः पर्यवसितः ।

नच वाच्यं ज्ञेयत्वादित्यादौ ज्ञेयत्वादिहेतोः कथमत्यन्ताभावाप्रतियोगित्वं सम्भवति घटत्वविशिष्टवाच्यत्वाभावप्रतियोगितायास्तत्र सत्त्वादिति वाच्यम्, स्वाश्रयानधिकरणवृत्त्यत्यन्ताभावप्रतियोगित्वशून्यत्वस्यैव प्रकृतसाध्यविशेषणत्वोपगमात्, घटत्वविशिष्टवाच्यत्वाभावस्य धर्त्तुमशक्यत्वात् इति ध्येयम् ।

तेनेतिअत्यन्ताभावाप्रतियोगिसाध्यकानुमितिकरणस्य केवलान्वयित्वाभिधानेनेत्यर्थः । लिङ्गस्येतिप्राचीनमताभिप्रायकम् ।

नव्यमतमाह तज्ज्ञानस्येत्यादि । हेतुज्ञानस्य हेतुधर्मिकव्याप्तिज्ञानस्य वेत्यर्थः । न क्षतिरिति । तथाच यदि अत्यन्ताभावाप्रतियोगिसाध्यकहेतुत्वं केवलान्वयित्वमित्युच्यते तदा हेतुधर्मिकव्याप्तिज्ञानादेस्तथात्वं न स्याद्, यदि चात्यन्ताभावाप्रतियोगिसाध्यकप्रकृतहेतुधर्मिकव्याप्तिज्ञानत्वं केवलान्वयित्वमित्युच्यते तदा वाच्यत्वसाध्यकज्ञेयत्वादिहेतोः प्राचीनमतसिद्धानुमितिकरणस्य केवलान्वयित्वं न स्यादिति हेतुहेतुधर्मिकव्याप्तिज्ञानसाधारणमत्यन्ताभावाप्रतियोगिसाध्यकानुमितिकरणत्वरूपमेव केवलान्वयित्वमभिहितम् । अत एकोपादानेऽन्यासंग्रहरूपा क्षतिर्नास्तीत्याशयः ।

ननु अत्यन्ताभावाप्रतियोगिसाध्यकं केवलान्वयीत्यादिदीधितिग्रन्थघटकीभूतं केवलान्वयिपदं यदि स्वातन्त्र्येण दीधितिकृताऽभिहितं

नारायणी

तदा मूलस्थकेवलान्वयीति पदं व्यर्थं स्यादित्याह **केवलान्वयीति** । दीधितिघटकीभूतमित्यादिः । **योजितमिति** केवलान्वयिसाध्यकशब्दोत्तरमेवाभिहितम् ॥ स्वातन्त्र्येण = अन्येच्छानधीनेच्छया । मूलस्थस्य तस्य = मूलस्थकेवलान्वयिपदस्य ।

ननु तत्रेति मूलस्य तेष्वित्याद्यर्थकरणं दीधितिकृतामनुचितमन्तर्गतार्थकत्वेनापि सप्तम्याः प्रयोगदर्शनात् ॥ केवलान्वयिसाध्यकान्तर्गतमसद्विपक्षमित्याद्यर्थकरणेन मूलस्थतत्पदेन केवलान्वयिसाध्यकमात्रस्य परामर्शकत्वस्य सम्भवादित्याशङ्कते **यद्यपीति** । तत्रेत्यादिकं मूलस्थमेव योजितम् ॥ तादृशतत्पदपरामर्शनीयमाह— **केवलान्वयीति** । असद्विपक्षमित्यस्यार्थमाह अत्यन्तेति ।

ननु अन्तर्गतत्वार्थे सप्तमीविभक्तेरदर्शनात्कथमत्र सप्तम्या अन्तर्गतत्वार्थकत्वं सम्भवतीत्यत आह **निर्द्धारण इवेति** । तथाच निर्द्धारणार्थिका यथा सप्तमी तथाऽन्तर्गतत्वार्थिकाऽपि सप्तमीविभक्तिर्भवतीत्यस्य प्राचीनमतसिद्धतया मूलस्थतत्रेत्यत्र तत्पदस्य केवलकेवलान्वय्यनुमानमात्रपरामर्शकत्वं न विरुद्धमितिभावः। **सप्तमीप्रयोगादिति** । अन्तर्गतत्वार्थिकाऽपि सप्तमी सम्भवतीति तदर्थतात्पर्येण सप्तमीप्रयोगो नासमीचीन इति हृदयम् । उत्तरयति **तथापीति** अन्तर्गतत्वार्थकसप्तमी प्रयोगमभिप्रेत्य मूलस्थतत्पदस्य केवलान्वयिमात्रपरामर्शकत्वेऽपीत्यर्थः । द्वन्द्वस्थानाम् = केवलान्वयिकेवलव्यतिरेक्यन्वयव्यतिरेकिरूपद्वन्द्वसमासान्तर्गतानाम् । एकम् = केवलव्यतिरेकिणमन्वव्ययतिरेकिणं वा । अपरस्य = केवलान्वय्यनुमानमात्रस्य । **तदादिशब्दस्येति** । मूलस्थस्येत्यादिः । **अव्युत्पन्नमिति** । तदादिपदजन्यशाब्दबोधस्मृति पूर्वोक्तानुसकलपद-

दीधितिः

एवमगृहीतान्वयव्यतिरेकिसाध्यकं केवलव्यतिरेकि, गृहीतान्वयव्यतिरेकिसाध्यकमन्वयव्यतिरेकि ।

जागदीशी

मूलस्य न्यूनतां परिहरति—एवमिति । प्रकृतहेतुधर्मिकसाध्यसहचारग्रहाजन्याया: प्रकृतहेतुव्यतिरेकिसाध्यकानुमितेः करणत्वं प्रकृतहेतुसाध्यककेवलव्यतिरेकित्वमित्यर्थः । नच साध्यविशेषणस्य व्यतिरेकीत्यस्य वैयर्थ्यम्, अन्वयसहचाराग्रहदशायामिदं वाच्यम् ज्ञेयत्वादित्यादौ अतिव्याप्तेः, तदानीमपि तस्य केवलान्वयित्वात् । व्यतिरेकित्वञ्च अत्र अवच्छिन्नवृत्तिकान्यस्य व्यतिरेकस्य प्रतियोगित्वं भेदप्रतियोगितानवच्छेदकत्वं वा, नातः साध्यसहचाराग्रहदशायां संयोगाभावादिसाध्यकवाच्यत्वादिहेतुककेवलान्वयिनि अतिव्याप्तिः ।

गृहीतेति—प्रकृतहेतुधर्मिकसाध्यसहचारग्रहजन्यव्याप्तिज्ञानजन्यप्रकृतहेतुकव्यतिरेकिसाध्यकानुमितिकरणत्वं, प्रकृतहेतुसाध्यकान्वयव्यतिरेकित्वमित्यर्थः । अत्रापि केवलान्वयिवारणार्थं व्यतिरेकित्वेन साध्यं विशेषितम् ।

नारायणी

जन्योपस्थितिविषयतावच्छेदकधर्मावच्छिन्नविषयकतत्पदजन्योपस्थितेर्हेतुत्वोपगमादिति हृदयम् । एतत्—अन्तर्गतत्वार्थकसप्तमी प्रयोगः । परित्यक्तमिति दीधितिकृतेतिशेषः—इतिदिक् ।

## नारायणी

न्यूनतामिति—मूलनिष्ठेत्यादिः। केवलव्यतिरेक्यादिलक्षणाकथने-नानुमिताबोधवत्पुरुषोच्चरितत्वमित्यर्थः। दीधितौ अग्रहीतान्वयव्यतिरेकिसाध्यकंकेवलव्यतिरेकीति। अग्रहीतः अन्वयो यस्य तादृशं व्यतिरेकि व्यतिरेकप्रतियोगिसाध्यं यस्य तत्केवलव्यतिरेकीत्यर्थः दीधितिकारोक्ता-गृहीतान्वयव्यतिरेकिसाध्यकत्वरूपकेवलव्यतिरेकिलक्षणघटकागृहीता-न्वयेत्यस्यागृहीतस्तदानीमनिश्चितः अन्वयसहचारनिश्चयो यस्य साध्यस्येतिव्युत्पत्त्या ऽन्वयसहचारनिश्चयविषयत्वाभावस्य साध्यविशे-षणत्वोपगमे यन्मते केवलं स्वव्यापकसाध्यसामानाधिकरण्यरूपैव व्या-प्तिरनुमित्यौपयिकी नत्वन्यविधाव्याप्ति स्तन्मते वह्निमान्धूमादित्यादौ धूमधर्मिकवह्निसाध्यकानुमितिकरणे तादृशव्याप्तिज्ञानेऽव्याप्त्यापत्तिः स्यात् तदा साध्यसामानाधिकरण्यरूपसाध्यसहचारनिश्चयविषयत्वा-भावस्य साध्येऽसत्त्वात् अतः अगृहीतान्वयेत्यस्यान्वयसहचारग्रहा-जन्यत्वरूपस्यव्यतिरेकिसाध्यकानुमितिविशेषणमभिप्रेत्यकेवलव्यतिरे-किलक्षणं व्याचष्टे **प्रकृतहेतुधर्मिकेति** तथाच प्रकृतहेतुतावच्छेद-

## शशिः

प्रकृतहेतुधर्मिकेति-निरुक्तकेवलव्यतिरेकिलक्षणे प्रथमप्रकृतहेतुधर्मिकत्वानुपा-दाने द्रव्यादौ वह्निसामानाधिकरण्यग्रहदशायां वह्निमान् धूमादित्यादौ धूमादेः केवलव्यतिरेक्यनुमानत्वानुपपत्तिः। वह्निधूमव्याप्तिग्रहस्यापि समूहालम्बन-निरुक्तसहचारग्रहात्मकव्यतिरेकसहचारग्रहजन्यतया द्रव्यात्मकहेतुधर्मिकसाध्य-सहचारग्रहजन्यत्वस्यापि तत्र सत्त्वादतः प्रकृतहेतुतावच्छेदकावच्छिन्नधर्मिकसा-ध्यसहचारग्रहाजन्यत्वनिवेशाभिप्रायेण प्रथमप्रकृतहेतुधर्मिकत्वोपादानम्। द्वितीय-प्रकृतहेतुकत्वानुपादाने वह्निधूमव्याप्तिग्रहानन्तरं यत्र वह्न्यनुमितिस्तत्र तादृ-शव्याप्तिज्ञानादेरालोकहेतुककेवलव्यतिरेकित्वापत्तिःस्यादतो द्वितीयप्रकृतहेतुकत्वो-पादानमितिध्येयम्।

## नारायणी

कावच्छिन्नविशेष्यतानिरूपितसाध्यतावच्छेदकावच्छिन्नाधिकरणवृत्ति-त्वरूपसाध्यसहचारप्रकारकनिश्चयाजन्या या व्यतिरेकित्वविशिष्ट-साध्यतावच्छेदकावच्छिन्नप्रकृतसाधयकप्रकृतहेतुकानुमिति स्तत्करण-त्वप्रकृतहेतुतावच्छेदकावच्छिन्नहेतुकप्रकृतसाध्यतावच्छेदकावच्छिन्न-साध्यककेवलव्यतिरेकित्वम् इति समुदितलक्षणार्थः। यन्मते स्वव्यापकसाध्यसामानाधिकरण्यमात्रं व्याप्तिस्तन्मतेऽखण्डसाधय-सामानाधिकरण्यज्ञानं विनाऽपि प्रत्येकपदार्थोपस्थित्या यदाताद्द-शव्याप्तिग्रहस्तदैव तादृशव्याप्तिग्रहे तन्मते लक्षणसमन्वयः करणीयः। भवति हि वह्निमान् धूमादित्यादौ अन्वयसहचारा-

## शक्तिः

व्यतिरेकित्वञ्चेति—अत्र कल्पे भेदप्रतियोगितावच्छेदकत्वं व्यतिरेकित्वमि-त्यभिधानमसङ्गतमव्याप्यवृत्तितानियामकावच्छेदकत्वानिरूपितवृत्तितावदभाव-स्यैवावच्छिन्नवृत्तिकान्यव्यतिरेकपदेन विवक्षितत्वात्, गगनाभाववान् वाच्यत्वा-दित्यादौ केवलान्वयिवि तु नातिव्याप्तिः, गगनाभावाभावस्य वृत्तित्वविरहात्। संयोगाभावस्य च गुणादौ तादृशावच्छेदकत्वानिरूपितवृत्तितावत्त्वात् संयोग-साध्यककेवलव्यतिरेकिण्यपि नाव्याप्तिरिति तु सुधीभिर्विभावनीयम्।

ननु भेदप्रतियोगितावच्छेदकत्वरूपं यदि व्यतिरेकित्वं तदा तादृशा-वच्छेदकतायाः साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वमवश्यं वक्तव्यमन्यथा कालि-केन गगनाभाववान्नेत्याकारकभेदस्य प्रसिद्धतया गगनाभावेऽपि भेदप्रतियोगिता-वच्छेदकतायाः सत्त्वेन तस्यापि व्यतिरेकित्वापत्तिर्दुर्वारा स्यादेवञ्चासदनुमा-नस्य लक्ष्यतामते संयोगेन गोत्वादेस्साध्यतायां तत्साध्यकहेत्वादेः केवलव्यतिरे-क्यनुमानत्वानुपपत्तिः, संयोगसम्बन्धेन गोत्ववद्भेदस्याप्रसिद्धतया गोत्वादौ संयोगसम्बन्धावच्छिन्नभेदप्रतियोगितावच्छेदकत्वरूपव्यतिरेकित्वस्य दुरुपपाद-त्वात् एवं गगनसाध्यकहेत्वादेरपि केवलव्यतिरेक्यनुमानत्वानुपपत्तिः संयोग-समवायादिना गगनवद्भेदस्याप्रसिद्धतया तत्रापि साध्यतावच्छेदकसम्बन्धावच्छि-

नारायणी

ग्रहदशाया धूमादिहेतौ तद्धर्मिकव्याप्तिज्ञानादौ वा लक्षणसमन्वयः अन्वयसहचारग्रहाजन्यव्यतिरेकिवह्निसाध्यकानुमितिकरणत्वस्य तत्र तत्रानपायात्। तादृशव्यतिरेकिसाध्यकलिङ्गत्वस्य। केवलव्यतिरेकिलक्षणत्वे लिङ्गधर्मिकव्याप्तिज्ञानादेरसंग्रहः स्यात् अतस्तादृशव्यतिरेकि-

शक्तिः

न्नभेदप्रतियोगितावच्छेदकताया असत्त्वादिति चेदत्र प्राञ्चः, भेदप्रतियोगितावच्छेदकत्वपदेन तादृशभेदप्रतियोगितावच्छेदकत्व-वृत्तिमत्त्वोभयाभाववत्त्वस्य विवक्षितत्वाद् वृत्तिमत्त्वमपि साध्यताघटकसम्बन्धेनैव वक्तव्यमतो न कोऽपि दोषः। गगनादौ भेदप्रतियोगितानवच्छेदकत्वसत्त्वेऽपि वृत्तिमत्त्वविरहेणोभयाभावस्याक्षतत्वादित्याहुस्तन्न ? विषयित्वतादात्म्योभयसम्बन्धेन घटादेः साध्यतायां केवलव्यतिरेक्यनुमानेऽव्याप्त्यापत्तेस्तादृशसम्बन्धेन भेदप्रतियोगितावच्छेदकताया एवाप्रसिद्धेः। अत्राहुः स्वप्रतियोगिवृत्तित्व-स्वानवच्छिन्नत्वोभयाभावविशिष्टभेदप्रतियोगितावच्छेदकताया एव व्यतिरेकित्वपदेव विवक्षितत्वान्न कोऽपि दोषः। उभयत्र स्वपदं व्यतिरेकिताघटकसम्बन्धपरम्। तथाच यत्र गोत्वादेस्संयोगादिना साध्यत्वं तत्र समवायसम्बन्धावच्छिन्नगोत्वनिष्ठभेदप्रतियोगितावच्छेदकतायामेव तादृशोभयाभावसत्त्वान्न तत्साध्यकेऽव्याप्तिः, वृत्त्यवियामकसम्बन्धेन प्रतियोगित्वासत्त्वेऽपि तत्सम्बन्धावच्छिन्नभेदप्रतियोगितावच्छेदकतायाः सर्वसम्मतत्वान्न वृत्त्यनियामकसंसर्गावच्छिन्नसाध्यताककेवलव्यतिरेक्यनुमानेऽव्याप्तिरितिसंक्षेपः।

नव्यास्तु--पूर्वंपूर्वंकल्पेषु गुणीयसंयोगेन वह्नेः साध्यतायां धूमादेः केवलव्यतिरेकित्वानुपपत्तिर्भवत्येव। अतः वस्तुविशिष्टविधेयताकत्वं व्यतिरेकित्वं वक्तव्यम्। वै० स्वनिष्ठाधिकरणतानिरूपितवृत्तितावदन्यत्वसम्बन्धेन वृत्तितावत्त्वञ्च स्वानवच्छेदकानवच्छिन्नत्वस्वावच्छेदकसम्बन्धावच्छिन्नत्व-स्वसामानाधिकरण्य-स्ववृत्तित्व एतच्चतुष्टयसम्बन्धेन वृत्तित्वमपि स्वानवच्छेदकावच्छिन्नत्वसम्बन्धेनेतिप्राहुः।

**नारायणी**

साध्यकानुमितिकरणत्वं केवलव्यतिरेकिलक्षणमभिहितम् । तथाच लिङ्गस्य तद्धर्मिकव्याप्तिज्ञानादेर्वाऽनुमानत्वेऽपि न क्षतिस्तादृशानुमितिकरणत्वेन तेषां संग्रहसम्भवादिति भावः ॥

साध्यविशेषणं व्यतिरेकित्वमिदानीमभावप्रतियोगित्वरूपं तादृशविशेषणानुपादाने वाच्यं ज्ञेयत्वादित्यादौ अन्वयसहचाराग्रहदशायामपि ज्ञेयत्वादिहेतोरत्यन्ताभावाप्रतियोगिसाध्यकानुमितिकरणत्वेन केवलान्वयितया निरुक्तहेत्वादौ केवलव्यतिरेकिलक्षणस्यातिव्याप्तिः । न चान्वयसहचाराज्ञानकाले व्याप्तिग्रहस्यैवानुत्पादेन वाच्यत्वसाध्यकानुमितेरेवानुत्पत्त्या कथमत्यन्ताभावाप्रतियोगिवाच्यत्वसाध्यकानुमितिकरणत्वेन ज्ञेयत्वादिहेतोः केवलान्वयित्वं सम्भवतीति वाच्यम् । वाच्यत्वाधिकरणवृत्तिज्ञेयत्वमित्याकारकाखण्डान्वयसहचाराज्ञानकालेऽपि तद्घटकप्रत्येकपदार्थोपस्थित्या व्याप्तिज्ञानोत्पादसम्भवादित्यस्य पूर्वमभिहितत्वात् । अथवाऽत्यन्ताभावाप्रतियोगिसाध्यकानुमितिकरणत्वं तादृशानुमितिस्वरूपयोग्यत्वरूपं नत्वनुमितिफलोपहितकरणत्वं तथा सति कारणान्तरविरहेण वाच्यत्वसाध्यकानुमित्यनुदयदशायां ज्ञेयत्वादिहेतोः केवलान्वय्यनुमानत्वानुपपत्तिरित्येवं नचेत्यादि नाऽऽशङ्क्य समाधत्ते **अन्वयसहचारेति** । ज्ञेयत्वधर्मिकवाच्यत्वसामानाधिकरण्याग्रहदशायामित्यर्थः ।

इत्यादौ = ज्ञेयत्वहेतौ तद्धर्मिकव्याप्तिज्ञानादौ वा । **अतिव्याप्तेरिति** अन्वयसहचारग्रहाजन्यव्यतिरेकित्वाविशेषितवाच्यत्वसाध्यकानुमिति - करणताया ज्ञेयत्वादिहेतौ सत्त्वादिति हृदयम् । तदानीमपि = अन्वयसहचाराग्रहदशायामपि । तस्य = ज्ञेयत्वादिहेतोः । **केवलान्वयित्वादिति** । अत्यन्ताभावाप्रतियोगिसाध्यकानुमितिकरणत्वस्यान्वयसहचाराग्रहदशायामपि ज्ञेयत्वादिहेतौ अक्षतत्वादिति भावः । तथाच साध्येऽभावप्रतियोगित्वरूपव्यतिरेकित्वविशेषणोपादानात् न वाच्यं ज्ञेयत्वादित्यादौ वाच्यत्वसाध्यकानुमितिकरणे ज्ञेयत्वादावतिव्याप्तिः,

नारायणी

साध्यविशेषणस्याभावप्रतियोगित्वस्य वाच्यत्वसाध्ये विरहात् तस्यात्यन्ताभावाप्रतियोगित्वादिति तात्पर्य्यम्।

ननु व्यतिरेकित्वं यद्यभावप्रतियोगित्वं तदा संयोगाभाववान् वाच्यत्वादित्यादौ साध्यसामानाधिकरण्याग्रहदशायां तादृशवाच्यत्वादिहेतौ केवलान्वय्यनुमानेऽतिव्याप्तिः। नच संयोगाभावस्य संयोगाभावाभावरूपाभावप्रतियोगितयाऽत्यन्ताभावाप्रतियोगिसाध्यकानुमितिकरणत्वरूपकेवलान्वयित्वं वाच्यत्वहेतौ दुर्लभमिति वाच्यम्। प्रतियोगित्वाश्रयानधिकरणवृत्त्यभावाप्रतियोगित्वस्यैव केवलान्वय्यनुमानघटकसाध्यविशेषणत्वोपगमात्। संयोगाभावाभावप्रतियोगित्वाश्रयानधिकरणाप्रसिद्ध्या तादृशाभावस्य धर्तुमशक्यत्वात् घटाभावस्य तादृशत्वेन धर्त्तुं शक्यत्वेऽपि तदप्रतियोगितायाः संयोगाभावेऽक्षतत्वादित्यत आह **व्यतिरेकित्वञ्चेति** साध्यविशेषणमित्यादिः = अत्र निरुक्तकेवलव्यतिरेकिलक्षणे। घटकत्वं व्यतिरेकित्वान्वयिसप्तम्यर्थः।

**अवच्छिन्नेति** अवच्छिन्ना वृत्तिर्यस्य इति व्युत्पत्त्या अवच्छिन्नवृत्तिको यो यस्तत्तद्भेदकूटविशिष्टस्येत्यर्थः। व्यतिरेकस्य = अभावस्य। **प्रतियोगित्वमिति** तथाच अवच्छिन्नवृत्तिकतत्तद्व्यक्तिभेदकूटविशिष्टाभावप्रतियोगित्वमेव साध्यविशेषणं व्यतिरेकित्वं भेदकूटनिवेशाद् यत्किञ्चिदवच्छिन्नवृत्तिकसंयोगाभावाभावभिन्नविभागाभावाभावप्रतियोगित्वस्य विभागे सत्त्वेऽपि न विभागाभावसाध्यकप्रमेयत्वादिकेवलान्वयिन्यतिव्याप्तिः। तथाच संयोगाभावसाध्यकविभागाभावादिसाध्यककेवलान्वयिनि प्रमेयत्वादौ नातिव्याप्तिः, संयोगाभावाभावविभागाभावाभावयोश्चावच्छिन्नवृत्तिकतया तदन्यघटत्वाभावरूपव्यतिरेकप्रतियोगित्वस्य संयोगाभावादावसत्त्वात्।

नन्वेवमपि गगनाभाववान् वाच्यत्वादित्यादौ वाच्यत्वादेः स्वप्रतियोग्यनधिकरणवृत्त्यभावाप्रतियोगि-गगनाभावरूपकेवलान्वयिसाध्यका-

**नारायणी**

नुमितिकरणतया केवलान्वय्यनुमानत्वात्तत्रातिव्याप्तिः। गगनाभावाभावस्य गगनस्यावृत्तितयाऽवच्छिन्नवृत्तिकसंयोगाभावाभावभिन्नत्वेन धर्तुं शक्यतया तादृशगगनाभावाभावप्रतियोगित्वस्य गगनाभावे सत्त्वाद् गगनाभावरूपव्यतिरेकिसाध्यकानुमितिकरणताया वाच्यत्वादावनपायात्। संयोगसाध्यककेवलव्यतिरेकिणि द्रव्यत्वादावव्याप्तिश्च। संयोगाभावस्यावच्छिन्नवृत्तिकतयाऽवच्छिन्नवृत्तिकान्यघटत्वाद्यभाव-प्रतियोगितायास्संयोगे विरहात् व्यतिरेकिसाध्यपदेन संयोगस्य धर्तुमशक्यत्वात्।

नचावच्छिन्नवृत्तिकान्यत्वं निरवच्छिन्नवृत्तिकत्वमेव तथाच न कोऽपि दोषः, गगनाभावाभावस्य निरवच्छिन्नवृत्तिकत्वविरहात्संयोगाभावादेश्च गुणादौ निरवच्छिन्नवृत्तिकत्वादिति वाच्यम्। तथासत्यन्वयसहचारग्रहदशायां संयोगाभावसाध्यकप्रमेयत्वादौ केवलान्वय्यनुमानेऽतिव्याप्त्यापत्तेः। संयोगाभावभावास्य संयोगस्याप्यवच्छेदकतासम्बन्धेन निरवच्छिन्नवृत्तिकत्वात् वृत्तिनियामकसम्बन्धेन निरवच्छिन्नवृत्तिकत्वाभिधानेऽपि समवायेन ज्ञानाभावसाध्यककेवलव्यतिरेकिणि अव्याप्त्यापत्तेः—इत्यत आह **भेदप्रतियोगितेति**। तथा च भेदनिरूपितसाध्यतावच्छेदकसम्बन्धावच्छिन्ना या प्रतियोगितावच्छेदकता तद्वत्त्वमेवात्र व्यतिरेकित्वं साध्यविशेषणं वक्तव्यम्। गगनाभावस्य केवलान्वयितया सर्वस्यैव तद्वत्तया स्वरूपेण गगनाभाववान्नेत्याकारकभेदाप्रसिद्ध्या गगनाभावस्य तादृशभेदप्रतियोगितावच्छेदकत्वाविरहान्न तस्य व्यतिरेकित्वम्, समवायेन संयोगवान्नेत्याकारकभेदस्य गुणादौ प्रसिद्ध्या संयोगस्य व्यतिरेकित्वसम्भवात् न गगनाभावसाध्यककेवलान्वय्यनुमानेऽतिव्याप्तिः नवा संयोगसाध्यककेवलव्यतिरेक्यनुमानेऽव्याप्तिरिति भावः।

अतः=निरुक्तरीत्या व्यतिरेकित्वस्य निवेशात् साध्यसहचारग्रहदशायां तादृशसहचारग्रहाजन्यत्वासम्भवेनातिव्याप्त्यसङ्गतिमाशङ्क्याह

नारायणी

साध्येति हेतुधर्मिकसाध्याधिकरणवृत्तित्वज्ञानशून्यतादशायामित्यर्थः, अतिव्याप्तिरिति नेतिपूर्वेण सम्बन्धः। अन्वयसहचाराग्रहकालेऽपि स्वप्रतियोग्यनधिकरणवृत्त्यभावाप्रतियोगिसाध्यकानुमितिकरणत्वरूप-केवलान्वय्यनुमानत्वस्य संयोगाभावसाध्यकवाच्यत्वादिहेतावनपायादिति हृदयम्।

अत्र लक्षणे अजन्यान्तमन्वयव्यतिरेकिण्यतिव्याप्तिवारणायेति दिक्।

अन्वयव्यतिरेक्यनुमानलक्षणं व्याख्यातुमाह प्रकृतेति। तथाच प्रकृत-हेतुतावच्छेदकावच्छिन्नविशेष्यकसाध्यतावच्छेदकावच्छिन्नसामाना-धिकरण्यप्रकारको यो निश्चयस्तज्जन्यव्याप्तिग्रहजन्या या प्रकृतहेतुक-व्यतिरेकिसाध्यकानुमितिस्तत्करणत्वमन्वयव्यतिरेक्यनुमानत्वमिति पर्यवसितोऽर्थः, भवति हि धूमादौ वह्निसामानाधिकरण्यग्रहदशायां वह्निसाध्यकं धूमहेतौ तद्धर्मिकव्याप्तिज्ञाने वा लक्षणसमन्वयः। अन्वयसहचारग्रहजन्यव्याप्तिग्रहजन्याधूमहेतुकानुमितिकरणतायास्तत्र-तत्र विद्यमानत्वात्। एकोपादानेऽन्यस्यासंग्रहभयेन तादृशव्य-तिरेकिसाध्यकलिङ्गत्वमन्वयव्यतिरेकित्वमित्यनभिधाय तादृशव्यति-रेकिसाध्यकानुमितिकरणत्वमन्वयव्यतिरेकित्वमित्यभिहितम्, तथाच लिङ्गादेस्तद्धर्मिकव्याप्तिज्ञानादेर्वाऽन्वयव्यतिरेक्यनुमानत्वेऽपि न क्षति-रिति मन्तव्यम्।

अत्र जन्यान्तं केवलव्यतिरेकिण्यतिव्याप्तिवारणाय बोद्धव्यम्।

ननु अत्र साध्यविशेषणं व्यतिरेकित्वं निरर्थकमित्यत आह अत्रापीति। निरुक्तलक्षणेऽपीत्यर्थः। केवलान्वयीति अन्वयसहचारग्रहदशायां वाच्यत्वादिसाध्यकज्ञेयत्वादिहेत्वादिवारणार्थमित्यर्थः। व्यतिरेकि-त्वेन=भेदप्रतियोगितावच्छेदकत्वेन। तेनान्वयसहचारग्रहदशायां गगनाभावादिसाध्यकवाच्यत्वादिहेतुककेवलान्वय्यनुमाने वाति-व्याप्तिः। साध्यं विशेषितमिति। दीधितिकृतेति शेषः। इत्यास्तां विस्तरः।

दीधितिः

व्याप्तिग्राहकसहचारभेदात् भेदे तु अन्वयसहचारमात्रगृहीतव्याप्तिकत्वं केवलान्वयित्वम् । तच्च प्रकृतव्याप्तिग्राहकज्ञानविषयसहचारत्वव्यापकान्वयसहचारत्वकत्वं तादृशसहचारत्वव्यापकप्रकृतव्याप्तिघटकसहचारत्वकत्वं वा ।

जागदीशी

दशाविशेषे वह्निसाध्यकधूमादिहेतोरपि केवलान्वयित्वमङ्गीकुर्वतामाचार्य्याणां मतमाह—व्याप्तिग्राहकेति । सहचारभेदादिति । ल्यब्लोपे पञ्चमीति । तेन तादृशसहचारभेदमन्तर्भाव्य भेदे

नारायणी

उदयनाचार्य्याणां मते स्वव्यापकसाध्यकसामानाधिकरण्यज्ञानमेवानुमितिजनकं व्यतिरेकव्याप्तिज्ञानस्य तैरनुमित्यङ्गताया अनभ्युपगमात् एवञ्च तन्मतेऽन्वयसहचारग्रहमात्रात्तादृशव्याप्तिज्ञानं वह्निमान् धूमादित्यत्रापि यदा जनितं तदा तत्र धूमादेः केवलान्वयित्वं यदा केवलव्यतिरेकसहचारज्ञानादेव व्याप्तिग्रहस्तदा वह्निसाध्यकधूमादेः केवलव्यतिरेकित्वम् यदा तूभयसहचारज्ञानात्तादृशव्याप्तिग्रहस्तदा वह्निसाध्यकधूमादेरन्वयव्यतिरेकित्वम् इति यथाश्रुतमूलोक्तात्यन्ताभावाप्रतियोगिसाध्यकत्वरूपलक्षणमन्वयसहचारग्रहमात्राधीनव्याप्तिग्रहविशेष्ये वह्निसाध्यकधूमादौ अव्याप्तमतः सहचारभेदादाचार्य्यमतसिद्धं केवलान्वयीत्यादि लक्षणमन्यथाव्याचक्षाणानां व्याप्तिग्राहकेत्यादिग्रन्थं व्याख्यातुमाह दशाविशेषेति । अन्वयसहचारग्रहमात्राधीन व्याप्ति ग्रहकाले इत्यर्थः । वाच्यत्वसाध्यकज्ञेयत्वादेः केवलान्वय्यनुमानतया निर्विवादतया आह वह्निसाध्यकेति । धूमादित्यत्रादिपदादालोकादिपरिग्रहः । केवलान्वयित्वम् = केवलान्वय्यनुमानत्वम् ।

जागदीशी

विभजने इत्यर्थः । उभयसहचारगृहीतव्याप्तिकस्य अन्वयव्यतिरेकिणो व्युदासाय मात्रपदम् । तथा च साध्याभावगोचरस्वाभा-

नारायणी

मतमाहेति । आचार्य्यमते हेतोरेवानुमितिकरणत्वमित्याशयः।

व्याप्तिग्राहकसहचारभेदादित्यत्र ल्यब्लोपे पञ्चमीविवक्षणे समुदितार्थमाह तेनेति तादृशभेदपदोत्तरपञ्चम्याल्यब्लोपे विधीयमानत्वेनेत्यर्थः । तत्तदिति विभिन्नसाध्यकस्थलीयव्याप्त्यभिप्रायेणेदम्, अन्यथाऽऽचार्यमते एकस्या एव व्याप्तेरनुमितिप्रयोजकतया तत्तदित्यभिधानमसङ्गतं स्यादिति ध्येयम् । व्याप्तिग्रहजनकज्ञानाविषयीभूतान्वयव्यतिरेकसहचारादिभेदमन्तर्भाव्येत्यर्थः पर्यवसितः। भेदे इत्यस्य अनुमानस्य भिन्नत्वे इत्यर्थकत्वम्प्रकृतानुपयोगि स्यात्तच्चेत्यादिमूलग्रन्थस्यासङ्गतिश्च स्यादत आह भेदे विभजने इति तथाच सहचारभेदमन्तर्भाव्यानुमानं यदि त्रिविधं स्यात्तदाऽऽन्यथाप्रकारेणैव केवलान्वयित्वादिलक्षणं वक्तव्यमित्याशयः। अन्वयसहचारमात्रगृहीतेत्यत्र मात्रपदप्रयोजनमाह उभयेति हेतुधर्मिकसाध्यसहचारसाध्याभावधर्मिकहेत्वभावसहचाररूपोभयसहचारग्रहजन्यव्याप्तिग्रहविशेष्यस्य हेतोरित्यर्थः मात्रपदमिति मात्रपदोपादानात्साध्याभावधर्मिकहेत्वभावसहचारग्रहाजन्यत्वलाभस्य वक्ष्यमाणतया नोक्तान्वयव्यतिरेकिण्यतिव्याप्तिरिति हृदयम् । लक्षणार्थं व्याचष्टे तथाचेत्यादि साध्यतावच्छेदकावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नविशेष्यताकस्वाभावत्वावच्छिन्नाधिकरणवृत्तित्वरूपस्वाभावसहचारप्रकारकग्रहनिष्ठजनकतानिरूपितजन्यताशून्यो यः स्वव्यापकसाध्यसामानाधिकरण्यात्मकान्वय-

जागदीशी

बसहचारग्रहाजन्यप्रकृतसाध्यकव्याप्तिग्रहविशेष्यत्वमर्थः । तेन इन्द्रियादेरपि व्याप्तिग्राहकत्वात् नाप्रसिद्धिः, न वा अन्यदीयव्य-

नारायणी

व्याप्तिग्रहस्तद्विशेष्यत्वं स्वस्मिन् हेतौ केवलान्वयित्वमित्यर्थः पर्यवसितः। भवतीति यदा धूमो वह्निसमानाधिकरण इत्याकारकसहचारग्रहादन्वयव्याप्तिग्रहस्तदा वह्निमान् धूमादिति हेतौ लक्षणसमन्वयः, वह्न्यभावधर्मिकधूमाभावसामानाधिकरण्यग्रहाजन्यो यो निरुक्तव्याप्तिग्रहस्तद्विशेष्यताया धूमादौ सत्त्वात्। ननु अन्वयसहचारमात्रगृहीतेत्यादि दीधितिकारोक्तमात्रपदस्य अन्वयसहचारग्रहजन्यतदितराजन्यव्याप्तिग्रहविशेष्यत्वस्यैव यथाश्रुतलक्षणार्थताया पर्यवसिततया मात्रपदस्यान्वयसहचारग्रहेतराजन्यत्वार्थकताया एव सर्ववादिसिद्धतया व्यतिरेकसहचारग्रहाजन्यत्वस्य व्याप्तिग्रहविशेषणत्वाभिधानमनुचितमित्यत आह तेनेति अन्वयसहचारग्रहेतराजन्यत्वम्परि-

शक्तिः

साध्याभावगोचरेति—अत्र साध्याभावत्वावच्छिन्नधर्मिकत्वानिवेशे कपिसंयोगाभाववान् कपिसंयोगादित्यत्र कपिसंयोगः कपिसंयोगाभावसमानाधिकरण इत्याकारकान्वयसहचारज्ञानस्यापि साध्याभावनिष्ठविशेष्यताकहेत्वभावत्वावच्छिन्नसामानाधिकरण्यावगाहिज्ञानात्मकतया तज्जन्यव्याप्तिग्रहविशेष्ये केवलान्वयिनि कपिसंयोगादिहेतौ अव्याप्त्यापत्तिः स्यात्, अतः साध्याभावत्वावच्छिन्नधर्मिकत्वं व्यतिरेकसहचारग्रहे विवक्षितम् । स्वाभावत्वावच्छिन्नसामानाधिकरण्यपर्यन्तानिवेशे कपिसंयोगवान् कपिसंयोगाभावादित्यत्र कपिसंयोगाभावः कपिसंयोगसमानाधिकरण इत्याकारकान्वयसहचारग्रहजन्यव्याप्तिग्रहस्यापि साध्याभावत्वावच्छिन्नधर्मिकस्वाभावरूपकपिसंयोगात्मकसामानाधिकरण्यावगाहिग्रहजन्यतया तद्विशेष्ये हेत्वादौ केवलान्वयित्वव्याप्त्यापत्तिः स्यात् ।

जागदीशी

तिरेकसहचारविषयकप्रकृतसाध्यसाधनान्वयसहचारगृहीतव्याप्तिके- ऽव्याप्तिः। साध्यभावत्वादिकञ्च वैज्ञानिकं ग्राह्यं न तु वास्तवम्, तेन इदं वाच्यं ज्ञेयत्वात् इत्यादौ साध्याभावादेरप्रसिद्धावपि [दशाविशेषे] नाव्याप्तिः। ननु वह्निमान् धूमात् इत्यादौ अन्वयेन

नारायणी

त्यज्य व्यतिरेकसहचारग्रहाजन्यत्वस्य व्याप्तिग्रहविशेषणत्वोपादानेनेत्यर्थः, इन्द्रियादेरपीत्यत्रादिपदात् मनःप्रभृतेः परिग्रहः। व्याप्तिग्राहकत्वात् = व्याप्तिग्रहम्प्रति जनकत्वात्। नाप्रसिद्धिरिति तथाचान्वयसहचारग्रहजन्यतदितराजन्यव्याप्तिग्रहपर्य्यन्तनिवेशे सर्वत्रासम्भवः स्याद् व्याप्तिग्रहस्य केवलान्वयित्वदशायामपि साध्यसहचारग्रहेतरेन्द्रियादिजन्यतया तादृशसहचारग्रहेतराजन्यव्याप्तिग्रहस्यैवाप्रसिद्धत्वादतः मात्रपदेन साध्याभावधर्मिकहेत्वभावसहचारग्रहाजन्यत्वं व्याप्तिग्रहे विवक्षितमिति भावः।

नन्वेवमपि सामान्यतो व्यतिरेकसहचारग्रहाजन्यत्वमात्रमेव व्याप्तिग्रहे विवक्ष्यतां किं साध्याभावधर्मिकहेत्वभावसहचारग्रहाजन्यत्वस्य तत्र निवेशनेनेत्यत आह नवा अन्यदीयेति तथाच व्यतिरेकसहचारग्रहाजन्यत्वमात्रस्य व्याप्तिग्रहविशेषणत्वे यादृशस्थले घटाभावः पटाभावसमानाधिकरणः धूमो वह्निसमानाधिकरणश्चेति समूहालम्बनवह्निधूमव्यतिरेकसहचारातिरिक्तसहचारग्रहस्तज्जन्यान्वयव्याप्तिग्रहविशेष्ये धूमादावव्याप्त्यापत्तिः स्यात्, यदि सामान्यतो व्यतिरेकसहचारग्रहाजन्यत्वमेव व्याप्तिग्रहविशेषणं स्यात निरुक्तस्थले घटाभावधर्मिकपटाभावसामानाधिकरण्यरूपव्यतिरेकसहचारग्रहाजन्यत्वस्य व्याप्तिग्रहेऽसत्त्वेऽपि वह्न्यभावधर्मिकधूमाभावसहचारग्रहाजन्यत्वस्य निरुक्तव्याप्तिग्रहे सत्त्वान्न तादृशस्थले धूमादावव्याप्तिरित्याशयः। अव्याप्तिरिति नवेतिसम्बन्धः।

## नारायणी

ननु इदं वाच्यं ज्ञेयत्वादित्यादौ अन्वयसहचारमात्रगृहीतव्याप्तिके ज्ञेयत्वादिहेतावव्याप्तिः, वाच्यत्वरूपसाध्याभावादेरप्रसिद्ध्या व्याप्तिग्रहे साध्याभावधर्मिकहेत्वभावसहचारग्रहाजन्यत्वस्योपपादयितुमशक्यत्वादत आह **साध्याभावत्वादिकञ्चेति** आदिपदाद्धेत्वभावत्वपरिग्रहः **वैज्ञानिकं ग्राह्यमिति** ज्ञानीयविषयताश्रयत्वरूपमित्यर्थः। तथाच साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगित्वसम्बन्धावच्छिन्नप्रकारतानिरूपिता या अभावत्वावच्छिन्नविशेष्यत्वाभिन्नविशेष्यता तन्निरूपिता या हेतुतावच्छेदकसम्बन्धावच्छिन्नहेतुतावच्छेदकावच्छिन्नप्रतियोगित्वसंबन्धावच्छिन्नप्रकारतानिरूपिताभावत्वावच्छिन्नविशेष्यत्वाभिन्नप्रकारतानिरूपिताधिकरणत्वावच्छिन्नविशेष्यत्वाभिन्ननिरूपितत्वसंसर्गावच्छिन्नप्रकारतानिरूपितवृत्तितात्वावच्छिन्नविशेष्यत्वाभिन्ना प्रकारता तच्छालिग्रहाजन्यत्वमेव व्याप्तिग्रहे विशेषणीयम्, एवञ्च न वाच्यं ज्ञेयत्वादित्यादौ वाच्यत्वहेतावव्याप्तिः, घटाभावांशे तादृशप्रतियोगितासम्बन्धेन वाच्यत्वाद्यवगाहिभ्रमात्मको यो वाच्यत्वाभावः ज्ञेयत्वाभावसमानाधिकरण इत्याकारको ग्रहस्तदजन्यत्वस्य केवलान्वयितादशायामन्वयव्याप्तिग्रहेऽक्षतत्वादिति भावः। ननु वास्तवम् = साध्यतावच्छेदकविशिष्टप्रतियोगितासम्बन्धेन साध्यविशिष्टाभावत्वविशिष्टधर्मिकेत्यादिना वास्तविकव्यतिरेकसहचारग्रहाजन्यत्वमपि विवक्षणीयम्। तेन = वैज्ञानिकसाध्याभावत्वादेः प्रवेशेन। इत्यादौ = इत्यादिस्थलीयकेवलान्वयिहेतौ। आदिपदादभिधेयत्ववान् प्रमेयत्वादित्यादिस्थलपरिग्रहः। साध्याभावादेः = वाच्यत्वाभावादेः। **अप्रसिद्धावपीति** वास्तविकस्येत्यादिः। **नाव्याप्तिरिति** अधिकमन्यत्रानुसन्धेयम्।

जागदीशी

व्याप्तिग्रहस्यापि भागवतेनैव व्यतिरेकसहचारग्रहेण जननात् अव्याप्तिः ( ननु इदानीं फलोपहितजन्यत्वं न निवेशितम्, अन्यथा भागवतज्ञाननिरूपितफलोपहितजन्यत्वाप्रसिद्धया भागवत-

नारायणी

तच्चेत्यादिदीधितिग्रन्थमवतारयितुं शङ्कते नन्विति इत्यादौ = इत्यादि-स्थलीयकेवलान्वयिनि धूमादिहेतौ आदिना द्रव्यत्वादिसाध्यकपृथिवीत्वा-दिहेतोः परिग्रहः। अन्वयेन = अन्वयसहचारग्रहेण । तृतीयार्थो जन्यत्वम्। तस्य व्याप्तिग्रहस्येत्यत्र व्याप्तिग्रहेऽन्वयः। व्याप्तिग्रहस्य = स्वव्यापकसाध्य-सामानाधिकरण्यादिरूपान्वयव्याप्तिग्रहस्य । भागवतेनैव = ईश्वरसम्ब-न्धिनैव व्यतिरेकेति वह्न्यभावादिधर्मिकधूमाभावसामानाधिकरण्यरूपव्य-तिरेकसहचारग्रहेणेत्यर्थः। अत्रापि तृतीयार्थो जननपदार्थान्वयिजन्यत्वम्। अव्याप्तिरिति वाच्यं ज्ञेयत्वादित्यादौ भ्रमात्मकव्यतिरेकसहचारग्रहस्ये-श्वरीयत्वासम्भवाद् वह्निमान् धूमादित्यादौ यदा तत्पुरुषीयान्वयसह-

शक्तिः

भागवतेनैवेत्यादि—अथ साध्याभावधर्मिकस्वाभावसहचारग्रहाजन्यत्वमित्यत्र जन्यत्वं स्वरूपसम्बन्धविशेषात्मकमेव वक्तव्यम् नतु तन्निष्ठान्यथासिद्धयनिरूप-कत्वे सति तदव्यवहितोत्तरत्वरूपम् तथासति अव्यवहितोत्तरत्वस्य ध्वंसघटिततया ईश्वरज्ञानजन्यतामादाय वह्निमान् धूमादित्यभागवतव्यतिरेकसहचारज्ञानमादा-याव्याप्तिदानानुपपत्तेः, एवञ्च कालान्तरीयव्यतिरेकसहचारज्ञानमादाय सर्वत्रा-सम्भवसम्भवेऽव्याप्तिदानमसङ्गतमिति चेन्न, अव्यवहितपूर्वत्वसम्बन्धेन व्यतिरेक-सहचारग्रहावृत्तिफलोपहितजन्यत्वाभावस्य विवक्षितत्वात् तथाच केवलान्वयि-साध्यके यदा व्याप्तिज्ञानाव्यवहितपूर्वं व्यतिरेकसहचारग्रहो नासीत् तदेव लक्षण-गमकान्वासम्भव इति ध्येयम् ।

व्यतिरेकसहचारज्ञानजन्यत्वमादाय अव्याप्तिदानस्य अनौचित्यात्। एवञ्च प्रमेयत्वादिसाध्यकस्थलेऽपि भ्रमात्मकव्यतिरेकसहचारज्ञानजन्यतया असम्भव एव प्रसज्यते कथमव्याप्तिरिति चेन्न, स्वाव्यवहितपूर्ववृत्तिव्यतिरेकसहचारज्ञानजन्यत्वरूपफलोपहितजन्यत्वाभावो विवक्षणीयः। एवञ्च यत्र केवलान्वयिसाध्यके व्यतिरेकसहचारभ्रमोऽप्रसिद्धः तत्र लक्षणगमनात् नासम्भव इति कश्चित्। तन्न ? तादृशस्थलस्य प्रमाणत्वेऽपि व्यतिरेकसहचारत्वस्य अव्यावर्त्तकतया प्रकृतसाध्याभावगोचरत्वाभावसहचारग्रहाजन्यत्वस्यैव निवेशितत्वेन तादृशज्ञानाप्रसिद्ध्या तत्रापि लक्षणसमन्वयासम्भवादव्याप्तिः कथं स्यात्) तादृशसहचारग्रहत्वावच्छिन्नजनकताकत्वाभावस्य प्रवेशे च व्यतिरेकसहचारगृहीतव्याप्तिकेऽतिव्याप्तितादवस्थ्यम्। (व्यभिचारधीविरोधिज्ञानत्वादिनैव आचार्यमते अन्वयव्यतिरेकसहचारज्ञानयोर्व्याप्तिधीजनकत्वात्। एवं तत्पुरुषीयतादृशव्यतिरेकसहचारग्रहाजन्यत्वस्य प्रकृतव्याप्तिज्ञानसमानाधिकरणव्यतिरेकसहचारग्रहाजन्यत्वस्य च प्रवेशे यत्र केवलान्वयिनि साध्याभावादिग्रहोऽप्रसिद्धः सर्वत्र भ्रमे मानाभावात् तत्राव्याप्तिरत आह तच्चेति। प्रकृतत्वं ग्रहविशेषणम्। तथाच स्वजनकज्ञानविषयसहचारत्वव्यापकान्वयसहचारत्वकप्रकृतव्याप्तिज्ञानविशेष्यत्वमित्यर्थः, तेन धूमादिनिष्ठवन्ह्याद्यन्वयव्याप्तेरेव कदाचिदुभयसहचारग्रहेणापि ग्रहात् अन्वयसहचारत्वस्य व्याप्तिग्राहकसह-

नारायणी

चारग्रहमात्रेण वह्निधूमयोरन्वयव्याप्तिग्रहस्तदा कार्य्यमात्रम्प्रति जनकस्य सर्वविषयकेश्वरज्ञानस्य व्यतिरेकसहचारविषयकस्यापि तादृशव्याप्तिग्रहम्प्रतिजनकतया व्यतिरेकसहचारग्रहाजन्यत्वस्य तादृशव्याप्तिग्रहेऽसम्भवाद् धूमादौ केवलान्वयिन्यव्याप्तिरिति तात्पर्य्यम् ।

ननु सर्वविषयकेश्वरज्ञानस्य कार्य्यमात्रम्प्रति उपादानप्रत्यक्षत्वेनैव जनकतया सहचारग्रहत्वेन तस्याजनकत्वात्साध्याभावधर्मिकहेत्वभावसामानाधिकरण्यग्रहत्वावच्छिन्नजनकतानिरूपितजन्यत्वाभाववद्व्याप्तिग्रहविशेष्यत्वविवक्षणे नोक्तस्थले धूमादावव्याप्तिरन्वयसहचारग्रहमात्राधीनान्वयव्याप्तिग्रहस्यैश्वरीयव्यतिरेकसहचारग्रहनिष्ठजनकतानिरूपिजन्यत्वसत्त्वेऽपि निरुक्तसहचारग्रहत्वावच्छिन्नजनकतानिरूपितजन्यत्वाभावस्य तत्राक्षतत्वादित्याह **तादृशेति** साध्याभावधर्मिकहेत्वभावसहचारग्रहत्वावच्छिन्नजनकतानिरूपितजन्यत्वाभावस्येत्यर्थः । **प्रवेशे चेति** लक्षणघटकव्याप्तिज्ञाने इत्यादिः । **व्यतिरेकेति** साध्याभावधर्मिकहेत्वभावसहचारग्रहजन्यव्याप्तिग्रहविशेष्ये इत्यर्थः । अतिव्याप्तौ हेतुमाह **व्यभिचारधीति** हेतुधर्मिकसाध्याभाववद्वृत्तित्वरूपव्यभिचारग्रहप्रतिबन्धकज्ञानत्वादिनैवेत्यर्थः । **अन्वयेति** हेतुधर्मिकसाध्यसामा-

शक्तिः

**व्यभिचारधीति**—अन्वयव्यतिरेकसहचारज्ञानयोर्विभिन्नरूपतामपेक्ष्य लाघवादाह व्यभिचारधीविरोधित्वेनेति । तथाच यदधिकरणान्तर्भावेन व्यभिचारबुद्धिर्जायते तदधिकरणान्तर्भावेण साध्यसामानाधिकरण्यनिश्चयः प्रतिबध्नाति तां व्यभिचारबुद्धिम् एवञ्चैकस्मिन्नधिकरणे न व्यभिचारनिरूपकत्वे सति साध्याभावहेत्वभावयोः सामानाधिकरण्यम् नवा हेतौ तदधिकरणान्तर्भावेण साध्यसामानाधिकरण्यमिति साधु सङ्गच्छत एवानुभविकः प्रतिबध्यप्रतिबन्धकभाव इत्याशयः ।

## नारायणी

नाधिकरण्यसाध्याभावधर्मिकहेत्वभावसामानाधिकरण्यज्ञानयोरित्यर्थः । व्याप्तिधीति अन्वयव्याप्तिधीजनकत्वादित्यर्थः । अयमभिप्रायः यथोक्तव्यतिरेकसहचारग्रहत्वावच्छिन्नजनकतानिरूपितजन्यत्वाभाववदन्वयव्याप्तिग्रहविशेष्यत्वस्य लक्षणार्थत्वे वह्निमान् धूमादित्यादौ यदा वह्नयभावो धूमाभावसमानाधिकरण इत्याकारकतत्पुरुषीयव्यतिरेकसहचारग्रहमात्रादन्वयव्याप्तिग्रहस्तदा तादृशव्याप्तिग्रहविशेष्ये धूमादौ केवलव्यतिरेकिणि निरुक्तकेवलान्वयिलक्षणस्यातिव्याप्तिः अन्वयसहचारग्रहो यदधिकरणान्तर्भावेण भवति तदधिकरणान्तर्भावेण हेतुधर्मिकसाध्याभावाधिकरणवृत्तित्वरूपव्यभिचारग्रहस्यानुत्पादात्तादृशव्यभिचारग्रहम्प्रति अन्वयसहचारग्रहस्य व्यभिचारग्रहप्रतिबन्धकताया आवश्यकत्वे साध्याभावधर्मिकहेत्वभावसामानाधिकरण्यग्रहस्यापि अनन्यगत्या मणिमन्त्रादिन्यायेन व्यभिचारग्रहप्रतिबन्धकताया एव युक्ततया व्याप्तिग्रहम्प्रति निरुक्तसहचारज्ञानयोर्व्यभिचारग्रहप्रतिबन्धकज्ञानत्वेनैव जनकतया यथोक्तव्यतिरेकसहचारज्ञानत्वेनाजनकत्वाद् व्यतिरेकितादशायामपि व्याप्तिग्रहस्य व्यतिरेकसहचारग्रहमात्रजन्यस्य तादृशव्यतिरेकसहचारग्रहत्वावच्छिन्नजनकतानिरूपितजन्यत्वाभावस्य निरावाधतया तादृशव्याप्तिग्रहविशेष्यत्वस्य तदानीं धूमादावनपायात् इति ॥

## शक्तिः

यद्यपि अन्वयसहचारग्रहस्य ग्राह्याभावानवगाहितया व्यतिरेकसहचारग्रहस्य च विभिन्नधर्मिकतया कथं प्रतिबध्यप्रतिबन्धकभावः सम्भवति तथापि साध्याभावविषयतानिरूपिताधिकरणविषयतानिरूपितवृत्तित्वविषयतानिरूपितहेतुतावच्छेदकावच्छिन्नविशेष्यत्वाख्यविषयताशालिबुद्धित्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावत्त्वेन रूपेण व्याप्तिबुद्धिम्प्रति जनकत्वस्योक्तत्वान्न क्षतिः ।

धूमाभाववज्जलह्रदवृत्तिर्वह्नयभावः इति ज्ञानं धूमाधिकरणपर्वतवृत्तिर्वह्निरिति ज्ञानञ्च धूमाभाववदयोगोलकवृत्तिर्वह्निरिति निश्चयः कदापि न विरुध्या-

## नारायणी

ननु तथापीश्वरीयव्यतिरेकसहचारज्ञानमादाय वह्निमान् धूमादित्यादौ नाव्याप्तिः, तत्पुरुषीयतादृशव्यतिरेकसहचारग्रहनिष्ठजनकतानिरूपितजन्यत्वाभाववद्व्याप्तिग्रहविशेष्यत्वस्यैव लक्षणार्थत्वोपगमात् तत्पुरुषीयान्वयसहचारग्रहमात्राधीनान्वयव्याप्तिग्रहस्य तत्पुरुषीयव्यतिरेकसहचारग्रहाजन्यत्वात् अथवा प्रकृतव्याप्तिज्ञानसमानाधिकरणो यस्तादृशव्यतिरेकसहचारग्रहस्तन्निष्ठजनकतानिरूपितजन्यताभावस्य व्याप्तिग्रहविशेषणत्वेऽपि नेश्वरीयव्यतिरेकसहचारज्ञानमादायोक्तस्थले धूमादावव्याप्तिरित्याह । तत्पुरुषीयेति यस्य पुरुषस्य केवलान्वय्यनुमानत्वं तत्पुरुषीयतादृशव्यतिरेकसहचारग्रहनिष्ठजनकतानिरूपितजन्यत्वाभावस्येत्यर्थः । प्रकृतेति हेतुधर्मिकसाध्यसामानाधिकरण्यग्रहसमानाधिकरणव्यतिरेकसहचारग्रहनिष्ठजनकतानिरूपितजन्यत्वाभावस्येत्यर्थः ।

## शक्तिः

तदधिकरणान्तर्भावेण व्यभिचारबुद्धिम्प्रति तदधिकरणान्तर्भावेण साध्यसामानाधिकरण्यग्रहस्य प्रतिबन्धकत्वादिति तु परमार्थः ।

यद्यपि साध्याभाववत्तत्तदधिकरणवृत्तित्वप्रकारकहेतुतावच्छेदकावच्छिन्नविशेष्यताशालिबुद्धित्वावच्छिन्नप्रतिबध्यता नाना तथाऽपि प्रतियोगित्वसम्बन्धावच्छिन्नसाध्यनिष्ठप्रकारत्वनिष्ठावच्छेदकतानिरूपिताभावनिष्ठविशेष्यत्वनिष्ठावच्छेदकतानिरूपितप्रकारत्व-अधिकरणनिष्ठविशेष्यत्व-प्रकारत्ववृत्तित्वनिष्ठविशेष्यत्वप्रकारत्व-हेतुतावच्छेदकावच्छिन्नविशेष्यत्वनिष्ठावच्छेदकतानिरूपितप्रतिबध्यतात्वरूपधर्मेण प्रतिबध्यतामनुगमय्य तादृशप्रतिबध्यतानिरूपितप्रतिबन्धकतावत्त्वरूपधर्मेण व्याप्तिबुद्धिम्प्रतिजनकत्वमिति सर्वं चतुरस्रम् ।

निरुक्तकेवलान्वय्यनुमानलक्षणानुगमस्तु हेतुविशिष्टहेतुत्वं केवलान्वयित्वम् वै० स्वतादात्म्यस्वाभावसामानाधिकरण्यप्रकारतानिरूपितसाध्याभावत्वावच्छिन्नविशेष्यताकग्रहनिष्ठजनकतानिरूपितजन्यत्वाभाववद्व्याप्तिग्रहविशेष्यत्वोभयसम्बन्धेनेति दिक् ।

**नारायणी.**

अत्र चकारोऽनास्थायाम् । वह्निमान् धूमादित्यादौ यथार्थव्याप्तिज्ञानस्यापि ईश्वरीयत्वसम्भवात्तत्समानाधिकरणव्यतिरेकसहचारग्रहजन्यत्वस्य प्रकृतव्याप्तिग्रहेऽन्ततया निरुक्तनिवेशे उक्तस्थलेऽव्याप्तेरवारणादिति ध्येयम् ।

तत्पुरुषीयत्वादेर्व्यतिरेकसहचारग्रहेनिवेशेऽपि दोषमाह यत्रेति वाच्यं ज्ञेयत्वादित्यादावित्यर्थः । केवलान्वयिंनि ॥ केवलान्वय्यनुमाने ज्ञेयत्वादौ साध्याभावादिति आदिना हेत्वभावपरिग्रहः । साध्याभावादेरप्रसिद्धत्वे हेतुमाह सर्वत्रेति सर्वेषु पुरुषेष्वित्यर्थः । मानाभावादिति तत्पुरुषीयत्वेन योगिनामपि संग्रहसम्भवादिति भावः । तत्रेति वाच्यत्वसाध्यकज्ञेयत्वादावित्यर्थः । अव्याप्तिरिति तथाच यस्य पुंसो भ्रमाप्रसिद्धिस्तस्य पुंसो वाच्यं ज्ञेयत्वादित्यादौ भ्रमात्मकः वाच्यत्वाभावः ज्ञेयत्वाभावसमानाधिकरण इत्याकारकग्रहोऽप्रसिद्धस्तम्प्रति वाच्यत्वसाध्यकज्ञेयत्वादेः कथमपि केवलान्वयित्वं न स्यादित्याशयः । तच्चेत्यादि दीधितिं व्याख्यातुमाह—प्रकृतत्वं ग्रहविशेषणमिति । अयं भावः प्रकृतत्वं यदि ग्रहविशेषणं न स्यात्तर्हि व्याप्तिग्रहपदेनोभयसहचारग्रहजन्यव्याप्तिग्रहस्याप्युपादातुं शक्यतया तज्जनकोभयसहचारज्ञानविषयसहचारत्वस्य व्यतिरेकसहचारेऽपि सत्त्वेन तत्रान्वयसहचारत्वविरहादसम्भवः स्यादतः प्रकृतत्वोपादानं विशेषतोऽन्वयसहचारमात्रग्रहाधीनव्याप्तिग्रहव्यक्त्युपग्रहार्थम् । एतेन उभयसहचारग्रहाधीनव्याप्तिग्रहस्यापि कदाचित्प्रकृततया प्रकृतत्वविशेषणोपादानेऽपि न तद्वारणमिति निरस्तम् । प्रकृतत्वस्य व्याप्तिविशेषणत्वेऽप्ययं दोषस्तदवस्थ एव स्वव्यापकसाध्यसामानाधिकरण्यरूपाया एकविधव्याप्तेरेवाचार्य्यमते क्लृप्ततयोभयसहचारग्रहाधीनव्याप्तिग्रहस्यापि प्रकृतव्याप्तिग्रहपदेनोपादानसम्भवात् । प्रकृतत्वविशेषणोपादानात् फलितं लक्षणस्वरूपमाचष्टे तथाचेति प्रकृतत्वस्य व्याप्तिग्रहविशेषणत्वे चेत्यर्थः ।

नारायणी

स्वजनकेति । स्वपदमन्वयसहचारमात्रग्रहाधीनव्याप्तिग्रहपरम् इत्यग्रे स्फुटीभविष्यति । तथाच स्वनिष्ठजन्यतानिरूपितजनकताव-ज्ज्ञानविषयीभूतसहचारत्वव्यापकसाध्यान्वयसहचारत्वकं यत्स्वं प्रकृत-व्याप्तिज्ञानं तद्विशेष्यत्वमेव प्रकृतहेतौ प्रकृतसाध्यककेवलान्वय्यनुमा-नत्वम्, प्रकृतव्याप्तिज्ञानविशेष्यत्वमिति तु स्पष्टार्थम्, स्वजनकज्ञान-विषयसहचारत्वव्यापकान्वयसहचारत्वकं यत्स्वं तद्विशेष्यत्वमित्यनेनैव सामञ्जस्यात् स्वपदघटितबहुव्रीहौ स्वस्यैवान्यपदार्थत्वात् । आचार्य्य-मते हेतोरेव केवलान्वयितया तादृशसहचारत्वकविशेष्यत्वपर्य्यन्तमुक्तं अन्यथा सहचारत्वकत्वस्य व्याप्तिज्ञाने एव सत्त्वेन हेतौ तदसम्भवात् । भवति हि वह्निमान धूमादित्यादौ धूमो वह्निसमानाधिकरण इत्याकार-कान्वयसहचारग्रहादेव व्याप्तिग्रहस्तदा लक्षणसमन्वयः । तादृशप्रकृत-वह्निधूमयोर्व्याप्तिग्रहजनकं यद् धूमो वह्निसमानाधिकरण इत्याकारका-न्वससहचारज्ञानं तद्विषयसहचारत्वस्यान्वयसहचार एव सत्त्वेन तत्र च धूमनिष्ठवह्न्यधिकरणवृत्तितात्वरूपसाध्यान्वयसहचारत्वस्य वर्त्तमान-तया अन्वयसहचारत्वे स्वजनकज्ञानविषयसहचारत्वव्यापकत्वस्याक्षत-त्वात् । अत्र व्यापकत्वं तादृशज्ञानविषयसहचारत्ववन्निष्ठभेदप्रतियोगि-तानवच्छेदकत्वरूपं तेन केवलान्वयितादशायामपि तादृशज्ञातविषय-साध्यान्वयसहचारत्ववति साध्यान्वयसहचारत्वघटोभयाभावादिक-मादाय नासम्भव इतिध्येयम् । व्याप्तिग्रहे प्रकृतत्वविशेषणस्य फल-माह तेनेति । प्रकृतत्वस्य व्याप्तिग्रहविशेषणतया वक्ष्यमाणव्याप्ति-ग्रहपरत्वेनेत्यर्थः । धूमादिनिष्ठेति । धूमव्यापकवह्निसामानाधिकर-ण्यरूपैकविधव्याप्तेरेवेत्यर्थः । एवकारेण व्यतिरेकव्याप्तिव्यवच्छेदः आचार्य्यै रन्वयव्याप्तेरेवोभयविधसहचारग्रहेण ग्रह इति स्वीकारात् कदाचित्=अन्वयव्यतिरेकितादशायाम् । उभयेति अन्वयसहचारव्यति-रेकसहचारोभयविषयकज्ञानेनापीत्यर्थः, अपिना केवलव्यतिरेकसहचार-

जागदीशी

चारत्वाव्यापकत्वेऽपि नासम्भवः । स्वपदेन विशेषतोऽन्वयसहचार

नारायणी

परिग्रहः ग्रहात् = ग्रहस्योत्पत्तेः । व्याप्तेरिति पूर्वेण सम्बन्धः । अन्वयेति हेतुनिष्ठसाध्याधिकरणवृत्तितात्वरूपान्वयसहचारत्वस्येत्यर्थः। व्याप्तीति यथाश्रुते प्रकृता या व्याप्तिस्तद्विषयकज्ञानजनकसहचारत्वाव्यापकत्वेऽपीत्यर्थः । नासम्भव इति तथाच प्रकृता या व्याप्तिस्तद्विषयकज्ञानजनकज्ञानविषयसहचारत्वव्यापकसाध्यान्वयसहचारत्वकव्याप्तिग्रहविशेष्यत्वं लक्षणार्थः स्यात् तदा सर्वत्रासम्भव एव स्यात् । सहचारग्रहाद् भेदवादिमते हेतुव्यापकसाध्यसामानाधिकरण्यरूपाया एकविधव्याप्तेरेव क्लृप्ततया वह्निमान् धूमादित्यादौ, केवलान्वयितादशायां जायमानज्ञानविषयीभूता या धूमव्यापकवह्निसामानाधिकरण्यरूपा व्याप्तिः तस्या अन्वयव्यतिरेकसहचारग्रहाज्जायमानज्ञानविषयीभूततादृशव्याप्तितोऽभिन्नतया तादृशप्रकृतव्याप्तिज्ञानजनकज्ञानपदेनोभयसहचारज्ञानस्यापि धर्त्तुं शक्यतया तद्विषयसहचारत्वस्य व्यतिरेकसहचारेऽपि सत्त्वेन तत्र साध्यान्वयसहचारत्वस्यासत्त्वात्, अतः प्रकृतत्वं न व्याप्तिविशेषणम्, अपि तु व्याप्तिग्रहविशेषणमेव । एवञ्च व्याप्तेरभिन्नत्वेऽपि केवलान्वयितादशोत्पन्नव्याप्तिज्ञानव्यक्तितोऽन्वयव्यतिरेकितादशोत्पन्नव्याप्तिज्ञानव्यक्तेर्भिन्नतया केवलान्वयितादशोत्पन्नव्याप्तिज्ञानव्यक्तिं प्रति उभयसहचारग्रहस्याजनकतया नाक्तासम्भवः । नन्वेवं प्रकृतत्वस्य ग्रहविशेषणात् स्वपदघटितलक्षणार्थनिरुक्तौ कथं नासम्भव इत्यत आह स्वपदेनेति विशेषतः = विशेषं कृत्वा अन्वयेति प्रकृतहेतुधर्मिकसाध्यसहचारमात्रग्रहकालीनव्याप्तिग्रहव्यक्तीनामेवेत्यर्थः । एवकाराद् उभयसहचारादिग्रहजन्यव्याप्तिग्रहव्यक्तीनां व्यवच्छेदः । फलतः = प्रकृतलक्षणवाक्यार्थनिर्वचनतः ।

जागदीशी

मात्रग्रहकालीनव्याप्तिग्रहव्यक्तीनामेव फलतः सङ्ग्रहात् अन्वयव्यतिरेकेण्यपि तादृशसहचारत्वसमानाधिकरणमन्वयसहचारत्वमतो व्यापकेति । यद्यपि प्रकृतव्याप्तिग्राहकज्ञानविषयसहचारत्वं घटा-

नारायणी

संग्रहादिति तथा चोभयसहचारग्रहजन्यव्याप्तिग्रहव्यक्तीनां स्वपदेन धर्त्तुमशक्यतया क्वासम्भव इति हृदयम् ।

ननु स्वजनकज्ञानविषयसहचारत्वसमानाधिकरणसाध्यान्वयसहचारत्वकव्याप्तिज्ञानविशेष्यत्वस्यैव लक्षणार्थत्वसम्भवे व्यापकत्वघटितत्वेन गुरुतरतादृशलक्षणप्रणयनं व्यर्थमित्यत आह अन्यथेति उभयसहचारगृहीतव्याप्तिग्रहविशेष्ये इत्यादिः । तादृशेति व्याप्तिग्राहकज्ञानविषयसहचारत्वसमानाधिकरणसाध्यान्वयसहचारत्वं सम्भवतीत्यर्थः । अतः अन्वयव्यतिरेकिण्यतिव्याप्तिवारणार्थम् । व्यापकेति, तथाच व्यापकत्वमपहाय तत्स्थाने लाघवाल्लक्षणे सामानाधिकरण्यनिवेशे धूमो वह्निसमानाधिकरणः वह्न्यभावश्च धूमाभावसमानाधिकरण इत्याकारकोभयविधसहचारग्रहाधीनव्याप्तिग्रहस्यापि प्रकृतव्याप्तिग्रहपदेनोपादातुं शक्यतया तज्जनकीभूतोभयविधसहचारज्ञानविषयसहचारत्वस्यान्वयसहचारे सत्त्वेन तत्रैव च साध्यान्वयसहचारत्वस्य सत्त्वात्तादृशसहचारत्वसमानाधिकरणान्वयसहचारत्वकस्वविशेष्यत्वस्यान्वयव्यतिरेकितादशायामपि हेतौ धूमे सत्त्वेनान्वयव्यतिरेकिणि तत्रातिव्याप्तिः स्याद्, व्यापकत्वनिवेशे तु तादृशसहचारत्वस्य व्यतिरेकसहचारेऽपि सत्त्वेन तत्रान्वयसहचारत्वविरहाद् व्यापकत्वविरहेण नातिव्याप्त्यवसर इति ।

नच स्वपदेनान्वयसहचारमात्रग्रहकालीनव्याप्तिग्रहव्यक्तीनां धृतत्वस्य पूर्वमभिहिततया व्यापकत्वानिवेशेऽपि कथमन्वयव्यतिरे-

नारायणी

[illegible]क्रिण्यतिव्याप्तिः। उभयसहचारग्रहजन्यव्याप्तिग्रहव्यक्तेः स्वपदेन [illegible]मशक्यत्वात्, इत्थञ्च व्यापकत्वनिवेशो निरर्थक एवेति वाच्यम्। [illegible]यसहचारमात्रग्रहकालीनेत्याद्यभिधानस्य व्यतिरेकसहचारमात्रग्रहाजन्यव्याप्तिग्रहव्यक्तिरेव स्वपदेन धर्त्तव्या इत्यत्रैव तात्पर्य्यात्। उभयसहचारग्रहजन्यव्याप्तिग्रहव्यक्तीनामपि व्यतिरेकसहचारमात्रग्रहाजन्यत्वेन निरुक्तरीत्या स्वपदेन धर्त्तुं शक्यतया व्यापकत्वानिवेशेऽन्वयव्यतिरेकिण्यतिव्याप्तेरवारणात्। धूमो वह्निसमानाधिकरणः घटश्च पटसमानाधिकरणः इत्याकारकसमूहालम्बनसहचारग्रहेण व्याप्तिग्रहे धूमस्य केवलान्वयितया तदानीं तत्राव्याप्तिवारणाय व्यतिरेकसहचारमात्रग्रहाजन्यव्याप्तिग्रहव्यक्तावेव तात्पर्य्यकल्पनाया औचित्यात्।

अथैवमन्वयव्यतिरेकोभयसहचारावगाहिज्ञानजन्यव्याप्तिज्ञानस्यापि व्यतिरेकसहचारमात्रावगाहिज्ञानाजन्यत्वेन तस्यापि व्यतिरेकसहचारमात्रग्रहाजन्यव्याप्तिग्रहपरकस्वपदेन धर्त्तुं शक्यतया तज्जनक[निरुक्तो]भयसहचारज्ञानविषयसहचारत्वस्य व्यतिरेकसहचारेऽपि सत्त्वे तत्र साध्यान्वयसहचारत्वविरहेण तस्य व्यापकत्वविरहादसम्भव इति तु न शङ्क्यम्। स्वपदस्य व्यतिरेकसहचारमात्रग्रहाजन्यव्याप्तिज्ञानव्यक्तिपरत्वेऽपि केवलान्वयितादशायामन्वयसहचारमात्रग्रहकालीनव्याप्तिग्रहव्यक्तिं स्वपदेनोपादाय लक्षणसमन्वयसम्भवात्। इति श्रीभट्टाचार्य्यचरणाः।

ननु यादृशस्थले धूमो वह्निसमानाधिकरणः पटो घटसमानाधिकरणश्चेत्याकारकसमूहालम्बनवह्निधूमयोरन्वयव्यतिरेकसहचारज्ञानाद् धूमधर्मिकवह्न्यन्वयव्याप्तिग्रहो जातः, तादृशस्थले वह्निसाध्यकधूमहेतौ केवलान्वयिनि निरुक्तलक्षणस्याव्याप्तिः, निरुक्तव्याप्तिज्ञानजनकज्ञानविषयसहचारत्वस्य पटनिष्ठघटसामानाधिकरण्येऽपि वर्त्तमानतया तत्र साध्यीभूतवह्न्यन्वयसहचारत्वविरहेण साध्यान्वयसहचारत्वस्य स्व-

जागदीशी

दिसहचारस्यापीति तत्र साध्यान्वयसहचारत्वाभावादव्याप्तिः । सहचारपदेन अन्वयव्यतिरेकसहचारयोरन्यतरत्वेनोपादाने वाच्यम् ज्ञेयत्वात् इत्यादावव्याप्तिः, तत्र व्यतिरेकसहचाराप्रसिद्धेः। न च प्रकृतव्याप्तिग्राहकज्ञानविषयसहचारत्वस्य प्रकृतव्याप्तिज्ञानत्वावच्छिन्नकार्य्यतानिरूपितकारणतायां विषयविधयाऽवच्छेदकीभूतसहचारत्वमर्थः, तच्च न घटादिसहचारेऽप्यस्तीत्यदोष इति-

नारायणी

जनकज्ञानविषयसहचारत्वाव्यापकत्वात् इत्याशङ्कते यद्यपीति । प्रकृतेति स्वात्मकव्याप्तिग्रहजनकज्ञानविषयसहचारत्वमित्यर्थः। घटादीति पटादिनिष्ठेत्यादिः । तत्र= घटादिसहचारे ; साध्येति वह्न्याद्यर्थकम् । अव्याप्तेरिति सर्वत्र समूहालम्बनतादृशसहचारग्रहे प्रमाणाभावान्नासम्भवोऽभिहित इति हृदयम् ।

ननु स्वजनकज्ञानविषयसाध्यान्वयव्यतिरेकसहचारयोरन्यतरसहचारत्वव्यापकसाध्यान्वयसहचारत्वपर्यन्तनिवेशे नोक्तस्थलेऽव्याप्तिः, घटादिसामानाधिकरण्यस्य तादृशान्यतरत्त्वानाक्रान्ततया तस्य धर्त्तुमशक्यत्वात् वह्न्यन्वयसहचारत्वस्य तत्त्वेन धर्त्तुं शक्यत्वेऽपि साध्यान्वयसहचारत्वस्याक्षतत्वादित्याह अन्वयेति हेतुनिष्ठसाध्याधिकरणवृत्तित्वसाध्याभावनिष्ठहेत्वभावाधिकरणावृत्तित्वरूपान्वयसहचारव्यतिरेकसहचारयोरित्यर्थः। अन्यतरत्त्वेन = स्वजनकज्ञानविषयसहचारपदेनेत्यादिः । इत्यादाविति इत्यादिस्थलीयज्ञेयत्वादिहेताविन्यर्थः । अव्याप्तिरिति स्वजनकज्ञानविषयान्वयव्यतिरेकव्याप्तिग्रहविशेष्यत्वस्य लक्षणार्थत्वे वाच्यं ज्ञेयत्वादित्यादौ केवलान्वयिनि ज्ञेयत्वा-

नारायणी

दिहेतावव्याप्तिः,तादृशस्थले भ्रमात्मकवाच्यत्वाभावधर्मिकज्ञेयत्वाभावसामानाधिकरण्यग्रहात्मकव्यतिरेकसहचारग्रहस्य सम्भवेऽपि तद्विषयसहचारस्यावस्तुत्वेनान्यतरत्त्वेन व्यतिरेकसहचारस्योपादातुमशक्यत्वात्, अन्वयसहचारव्यतिरेकसहचारभेदद्वयावच्छिन्नभेदवद्वस्तुन एवान्यतरत्त्वात् इत्याशयः। अव्याप्तौ हेतुमाह **तत्रेति** वाच्यं ज्ञेयत्वादित्यादावित्यर्थः। **व्यतिरेकेति** साध्याभावहेत्वभावयोरप्रसिद्धत्वाद् व्यतिरेकसहचाराप्रसिद्धिरिति हृदयम्।

नन्वेवमपि घटादिसामानाधिकरण्यमादाय वह्निमान् धूमादित्यादौ नाव्याप्तिः, प्रकृतव्याप्तिज्ञानजनकज्ञानविषयसहचारत्वशब्देन प्रकृतव्याप्तिज्ञानत्वावच्छिन्नजन्यतानिरूपितजनकताया विषयित्वसम्बन्धावच्छिन्नावच्छेदकतावत्सहचारत्वस्योपादातुं शक्यत्वात्, धूमो वह्निसमानाधिकरणः पटो घटादिसमानाधिकरण इत्याकारकसमूहालम्बनज्ञानस्य प्रकृतवह्निधूमव्याप्तिग्रहं प्रति जनकत्वेऽपि तादृशग्रहत्वावच्छिन्नजन्यतानिरूपितनिरुक्तसमूहालम्बनज्ञाननिष्ठजनकतायां विषयितासम्बन्धेनावच्छेदकताया धूमनिष्ठवह्निसामानाधिकरण्ये एव वर्त्तमानतया विषयित्वसम्बन्धेन तादृशावच्छेदकताया घटादिसामानाधिकरण्ये विरहादिति तटस्थः शङ्कते **नचेति** वाच्यमिति परेणान्वयः। **प्रकृतेति** स्वजनकज्ञानविषयसहचारत्वशब्दस्येत्यर्थः। विषयतया= विषयितासम्बन्धेन। **अवच्छेदेति** अवच्छेदकतावत्सहचारत्वमित्यर्थः। तच्च= प्रकृतव्याप्तिज्ञानत्वावच्छिन्नकार्य्यतानिरूपितकारणतायां विषयित्वसम्बन्धावच्छिन्नावच्छेदकतावत्सहचारत्वञ्च। न घटादिसहचारे= न पटादिनिष्ठघटादिसामानाधिकरण्ये। **अदोष इति** तथाच न समूहालम्बनसहचारज्ञानमादाय वह्निसाध्यकधूमादिहेतावव्याप्तिः,तादृशव्याप्ति-

जागदीशी

वाच्यम्, सहचारविशिष्टबुद्धित्वावच्छिन्नं प्रत्येव सहचारज्ञानत्वेन हेतुतया व्याप्तिज्ञानत्वावच्छिन्नं प्रति ताद्रूप्येण हेतुत्वाभावात्। अन्यथा व्यतिरेकसहचारस्यापि तादृशत्वादसम्भवापत्तेः। गगनवान् धूमात् इत्यादौ साध्यसहचारभ्रमाधीने अन्वय्यनुमाने अव्याप्तिप्रसङ्गात्, अन्वयव्यतिरेकसाधारणस्य सहचारत्वस्य दुर्वचत्वाच्च।

नारायणी

ज्ञानत्वावच्छिन्नजन्यतानिरूपितायां जनकतायां विषयित्वसम्बन्धावच्छिन्नावच्छेदकतावद् वह्निसामानाधिकरण्यत्वव्यापकतायाः वह्निरूपसाध्यान्वयसहचारत्वे सत्त्वादिति भावः। समाधत्ते– सहचारेति साध्यादिसामानाधिकरण्यविशिष्टबुद्धित्वावच्छिन्नमित्यर्थः। सहचारज्ञानत्वेन= हेतुनिष्ठसाध्यादिसामानाधिकरण्यज्ञानत्वेन। हेतुतयेति तद्विशिष्टबुद्धिं प्रति तज्ज्ञानस्य जनकतायाः सर्वसम्मतत्वादिति हृदयम्। तादृग्रूपेण=साध्यसामानाधिकरण्यत्वादिना। हेतुत्वाभावादिति तथाच व्याप्तिज्ञानत्वावच्छिन्नकार्य्यतानिरूपितकारणतायां विषयित्वसम्बन्धावच्छिन्नावच्छेदकतावत्सहचारत्वव्यापकसाध्यान्वयसहचारत्वपर्य्यन्तस्य निरुक्तकेवलान्वयिलक्षणघटकत्वे सर्वत्रासम्भवः स्यात्, वह्न्यसामानाधिकरण्यविशिष्टधूमादिज्ञानं प्रत्येव वह्निसामानाधिकरण्यप्रकारकधूमविशेष्यकज्ञानस्य जनकतया तादृशसामानाधिकरण्यज्ञानकार्य्यतावच्छेदकतायाः सामानाधिकरण्यविशिष्टबुद्धित्व एवावश्यकतया व्याप्तिज्ञानत्वस्य तत्कार्य्यतानवच्छेदकत्वेन तादृशसामानाधिकरण्यविशिष्टबुद्धिपदेन व्याप्तिज्ञानस्य धर्त्तुं शक्यत्वेऽपि व्याप्तिज्ञानत्वावच्छिन्नकार्यताया अप्रसिद्धत्वादिति भावः॥

ननु मा भूत् व्याप्तिज्ञानत्वं सहचारज्ञानकार्य्यतावच्छेदकं, तथापि प्रकृतव्याप्तिग्रहात्मकस्वनिष्ठजन्यतायाः प्रकृतव्याप्तिग्रहत्वव्यापक-

## नारायणी

जन्यताया वा निरूपिका या जनकता तन्निरूपितविषयित्वसम्बन्धावच्छिन्नावच्छेदकतावत्सहचारत्वव्यापकसाध्यान्वयसहचारत्वकव्याप्तिग्रहविशेष्यत्वं केवलान्वयित्वम्—इत्यर्थकरणेनाऽपि न घटादिसामानाधिकरण्यमादाय वह्निमान् धूमादित्यत्र धूमादावव्याप्तिः, घटादिसामानाधिकरण्ये तादृशावच्छेदकत्वविरहादित्यत आह। **अन्यथेति** व्याप्तिज्ञानत्वावच्छिन्नजन्यतामनिवेश्य व्याप्तिग्रहात्मकस्वनिष्ठजन्यत्वेत्याद्यन्यथाप्रकारेण निवशे इत्यर्थः। **व्यतिरेकेति** व्यतिरेके= अभावे यः सहचारः हेतुसामानाधिकरण्यं तस्यापीत्यर्थः। तादृशत्वात्=प्रकृतव्याप्तिज्ञानात्मकस्वनिष्ठजन्यतानिरूपितजनकतायां विषयित्वसम्बन्धावच्छिन्नावच्छेदकतावत्त्वात्। **असम्भवापत्तेरिति** व्याप्तिज्ञानत्वावच्छिन्नजन्यताया अप्रसिद्धया प्रकृतव्याप्तिज्ञानात्मकस्वनिष्ठजन्यतानिरूपितजनकतायां विषयित्वसम्बन्धावच्छिन्नावच्छेदकतावत्सहचारत्वव्यापकसाध्यान्वयसहचारत्वकव्याप्तिग्रहविशेष्यत्वरूपान्यथा प्रकारेण लक्षणार्थनिर्वचने सर्वत्रासम्भवः स्यात्, प्रकृतहेत्वधिकरणवृत्त्यभावप्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नहेतुनिष्ठसामानाधिकरण्यस्यैवाचार्य्यमते व्याप्तिपदार्थतया तादृशव्याप्तिग्रहस्य हेत्वधिकरणवृत्तित्वविशिष्टाभावग्रहात्मकतया तादृशव्याप्तिग्रहनिष्ठजन्यतायास्तादृशग्रहत्वव्यापकजन्यताया वा निरूपिकाया जनकतायाः साध्यसामानाधिकरण्यग्रह इव हेतुसामानाधिकरण्यप्रकारकाभावविशेष्यकहेतुसमानाधिकरणोऽभाव इत्याकारकग्रहेऽपि वर्त्तमानतया तादृशजनकतायां विषयित्वसम्बन्धावच्छिन्नावच्छेदकतावत्सहचारत्वस्याभावनिष्ठहेतुसामानाधिकरण्येऽपि सत्त्वेन तत्र साध्यान्वयसहचारत्वविरहेण साध्यान्वयसहचारत्वस्य तादृशयथोक्तजनकतावच्छेदकसहचारत्वाव्यापकत्वादिति भावः॥

यत्तु व्यतिरेकसहचारज्ञानस्य हेतुव्यापकसाध्यसामानाधिकरण्यरूपव्याप्तिग्रहजनकताया आवश्यकतया व्याप्तिज्ञानत्वावच्छिन्नं प्रत्येव

### नारायणी

यदि सहचारज्ञानत्वेन जनकता स्वीक्रियते तदा दोषमाह अन्यथेति व्याप्तिज्ञानत्वावच्छिन्नजन्यतानिरूपितजनकताया लक्षणघटकत्वे इत्यर्थः। व्यतिरेकसहचारस्यापि साध्याभावधर्मिकहेत्वभावसामानाधिकरण्यस्यापि तादृशत्वात् व्याप्तिज्ञानत्वावच्छिन्नजन्यतानिरूपितजनकतायां विषयित्वसम्बन्धावच्छिन्नत्वाच्छेदकतावत्त्वात्।

असम्भवापत्तेरिति निरुक्तव्यतिरेकसहचारे साध्यान्वयसहचारत्वस्यासत्त्वादिति तात्पर्य्यमिति व्याख्यानं तदत्यन्तमसत्। लक्षणे प्रकृतपदेनान्वयसहचारमात्रग्रहकालीनव्याप्तिग्रहव्यक्तीनामेव धर्तव्यतया केवलान्वयितादृशाकालीनतादृशव्याप्तिज्ञानत्वावच्छिन्नजन्यतानिरूपितजनकतावति विषयितासम्बन्धेन व्यतिरेकसहचारस्यावर्त्तमानतया तस्य निरुक्ततथाविधजनकतानिरूपितविषयित्वसम्बन्धावच्छिन्नावच्छेदकत्वासम्भवात्। प्रकृतपदस्य व्यतिरेकसहचारमात्रग्रहाजन्यव्याप्तिग्रहव्यक्तिपरत्वेऽपि केवलान्वयितादृशोत्पन्नव्याप्तिग्रहव्यक्तिमुपादायासम्भवव्युदासात्। वाच्यं ज्ञेयत्वादित्यादौ व्यतिरेकसहचारज्ञानस्य भ्रमात्मकतया तत्स्थलीयव्याप्तिग्रहत्वावच्छिन्नजन्यतानिरूपितजनकतायां विषयित्वसम्बन्धेनावच्छेदकत्वस्यावस्तुनि तादृशसहचारे कदाप्यवर्त्तमानतया तत्स्थलीयकेवलान्वयिनि लक्षणगमनान्निरुक्तरीत्याऽसम्भवसङ्गमनस्योन्मत्तप्रलपितत्वापत्तेश्चेति ध्येयम्॥

ननु प्रकृतव्याप्तिग्रहरूपस्वनिष्ठजन्यतायां तादृशव्याप्तिग्रहत्वव्यापकजन्यतायां वा हेतुसामानाधिकरण्यविशिष्टाभावविषयकबुद्धित्वानवच्छिन्नत्वस्य तादृशजन्यतानिरूपितजनकतायां वा हेतुतावच्छेदकातिरिक्ताभावत्वावच्छिन्नविशेष्यत्वानवच्छिन्नत्वस्य विवक्षणान्नोक्तासम्भवः, व्याप्तिग्रहनिष्ठाया अभावधर्मिकहेतुसामानाधिकरण्यप्रकारकज्ञानजन्यतायाः तादृशसामानाधिकरण्यविशिष्टाभावविषयकबुद्धित्वावच्छिन्नतया तादृशबुद्धित्वानवच्छिन्नजन्यतापदेन हेतुनिष्ठसाध्यसामाना-

## नारायणी

धिकरण्यग्रहजन्यताया एव धर्त्तुं शक्यत्वात्तादृशजन्यतानिरूपितजनकतायां विषयित्वसम्बन्धावच्छिन्नावच्छेदकताया हेतुनिष्ठसाध्यसामानाधिकरण्ये एव सत्त्वादित्यतो दोषान्तरमाह । गगनवानिति इत्यादौ = इत्यादिस्थलीयधूमादिहेतौ । साध्यसहचारभ्रमाधीने = गगनाधिकरणवृत्तिर्धूम इत्याकारकभ्रमजन्ये । अन्वय्यनुमाने = अन्वयव्याप्तिज्ञाने सतीति शेषः । अव्याप्तिरिति तथाच प्रकृतव्याप्तिग्रहात्मकस्वनिष्ठाभावनिष्ठहेतुसामानाधिकरण्यविशिष्टविषयकबुद्धित्वानवच्छिन्नजन्यताया लक्षणघटकत्वेऽपि अवृत्तिगगनादिसाध्यकधूमादिहेतौ धूमो गगनसमानाधिकरण इत्याकारकाभ्रमात्मकान्वयसहचारमात्रग्रहजन्यव्याप्तिग्रहविशेष्येऽव्याप्तिः स्यात्, निरुक्तसहचारग्रहस्य भ्रमात्मकतयाऽवस्तुत्वेन विषयित्वसम्बन्धेन तादृशबुद्धित्वानवच्छिन्नप्रकृतव्याप्तिग्रहनिष्ठजन्यतानिरूपितजनकतायामवच्छेदकत्वासम्भवेन तादृशावच्छेदकतावत्सहचारत्वस्याप्रसिद्धत्वात इति भावः ॥

ननु असदनुमानस्य लक्ष्यत्वाभावेन कुतो गगनवान् धूमादित्यत्राव्याप्तिः ? गगनसाध्यकधूमादेरलक्ष्यत्वात्तत्र लक्षणागमनस्येष्टत्वादित्यतो दोषान्तरमाह अन्वयेति हेतुनिष्ठसाध्यसामानाधिकरण्यसाध्याभावानिष्ठहेत्वभावसामानाधिकरण्यसाधारणस्येत्यर्थः । सहचारत्वस्य = सामानाधिकरण्यत्वस्य । दुर्वचत्वादिति अयमाशयः—सहचारभेदात्केवलान्वय्यनुमानादिभेदमभ्युपगच्छतामाचार्य्याणां मते एकस्या एव हेतुव्यापकसाध्यसामानाधिकरण्यरूपाया अन्वयव्याप्तेर्ज्ञानं प्रति हेतुनिष्ठसाध्यसामानाधिकरण्यज्ञानस्येव साध्याभावनिष्ठहेत्वभावसामानाधिकरण्यज्ञानस्यापि जनकत्वमवश्यमभ्युपगन्तव्यम्, अन्यथा स्वजनकज्ञानविषयसहचारत्वव्यापकत्वपर्यन्तस्य निवेशो निरर्थकः स्यात् । एवञ्च स्वजनकज्ञानविषयसहचारत्वेन स्वनिष्ठजन्यतानिरूपितजनकतायां विषयित्वसम्बन्धावच्छिन्नावच्छेदकतावत्सहचारत्वेन वा द्वयोः

जागदीशी

तथापि प्रकृतहेतुधर्मिकप्रकृतसाध्यव्याप्यतावगाहियज्ज्ञानजनकीभूतज्ज्ञाननिष्ठस्य प्रकृतहेतुधर्मिकसाध्यसामानाधिकरण्यावगाहित्वसाध्याभावधर्मिकहेत्वभावसामानाधिकरण्यावगाहित्वयोरन्यतरस्य तादात्म्येन व्यापकं हेतुधर्मिकप्रकृतसाध्यसहचारविषयित्वं तज्ज्ञानत्वं तज्ज्ञानविषयत्वविशिष्टप्रकृतहेतुत्वं वा प्रकृतहेतुसाध्यककेवलान्वय्यनुमानत्वं विवक्षितम् । साध्याभावत्शादिकञ्च इह वैज्ञानिकं ग्राह्यम् । तेन वाच्यं ज्ञेयत्वात् इत्यादौ साध्याभावस्य अलीकत्वेऽपि [दशाविशेषे] नाव्याप्तिः । न च अवगाहीत्यन्तदलवैयर्थ्यम्,)

नारायणी

सहचारयोः संग्रहो दुर्लभः । नच सामानाधिकरण्यत्वमेवोभयनिष्ठानुगमकमिति वाच्यम् । तस्य स्वरूपसम्बन्धविशेषात्मकतया प्रत्येकं भिन्नत्वात् अन्यस्यानुगमकधर्मस्य वक्तुमशक्यत्वात्, तथा चान्वयव्यतिरेकिण्यतिव्याप्तिवारकतया स्वजनकज्ञानविषयसहचारत्वस्योभयसाधारण्यतया आवश्यकतया तस्योभयसाधारण्यासम्भवात् निरुक्तक्रमेण लक्षणार्थनिर्वचनं न सम्भवतीति ॥

यद्यपीत्यादेरुत्तरं तथापीति । उक्तरीत्या लक्षणार्थस्य निर्वचनासम्भवेऽपीत्यर्थः । प्रकृतेति हेतुतावच्छेदकावच्छिन्नार्थकम् एवमग्रेऽपि । तथाच हेतुतावच्छेदकावच्छिन्नविशेष्यकस्वव्यापकसाध्यतावच्छेद-

शक्तिः

तथापि प्रकृतहेतुधर्मिकेति—यत्र वह्निसमानाधिकरणो धूम इति ज्ञानं ततो वह्निव्याप्यो धूम इति ज्ञानं तदनन्तरं कारणवशादालोकलिङ्गकपरामर्शस्तत्र धूमधर्मिकव्याप्तिज्ञानस्य तद्धेतुककेवलान्वयित्वापत्तिः, अतः प्रकृतहेतुककेवलान्वयित्वमित्युक्तम्, उक्तव्याप्तिज्ञानस्य धूमलिङ्गकानुमित्यजनकत्वादलक्ष्यत्वं

नारायणी

कावच्छिन्नसामानाधिकरण्यरूपसाध्यव्याप्यताप्रकारताकज्ञानजनकीभूतं यज्ज्ञानं तन्निष्ठं यत् प्रकृतहेतुनिष्ठसाध्यसामानाधिकरण्यावगाहित्व-साध्याभावनिष्ठहेत्वभावसामानाधिकरण्यावगाहित्वयोरन्यतरत् तस्य तादात्म्येन व्यापकं यत् हेतुनिष्ठसाध्यसामानाधिकरण्यावगाहित्वं तथा-

शक्तिः

बोध्यम् । एवं वह्निसमानाधिकरणं द्रव्यं धूमश्चेति ज्ञानजन्यव्याप्तिज्ञानस्य द्रव्यत्वावच्छिन्नहेतुककेवलान्वय्यनुमानत्वापत्तिरतः प्रकृतत्वनिवेशः । वह्निसमानाधिकरणधूमवद्वृत्तिद्रव्याभावो धूमाभावसमानाधिकरण इत्याकारकज्ञानाधीने वह्निसमानाधिकरणधूमवद्वृत्तिद्रव्यव्याप्यो धूमः, इतिज्ञाने तद्विशेष्ये वा वह्निसाध्यकधूमहेतुककेवलान्वयित्वापत्तिवारणाय प्रकृतत्वं साध्यविशेषणमित्यवधेयम् ।

अत्र च व्यतिरेकिसहचारसंस्करात्मक-प्रकृतव्याप्त्यवगाहिसंस्कारजनकज्ञानवृत्तितादृशसंस्कारीयविषयितायाः प्रकृतसाध्यान्वयसहचारावगाहिताव्याप्यत्व-विरहाद्वह्निसाध्यकधूमहेतुककेवलान्वयिन्यव्याप्तिरतः प्रथमं ज्ञानपदम् । युगपदुत्पन्नो धूमो वह्निसमानाधिकरण इतिज्ञानं वह्न्यभावः धूमाभावसमानाधिकरण इत्याकारकव्यतिरेकसहचारावगहिसंस्कारश्च तदुत्तरज्ञातस्य वह्न्यभावो धूमाभावसमानाधिकरण इत्याकारकप्रत्यभिज्ञात्मकधूमव्यापकवह्नि-समानाधिकरणो धूमः, इति व्याप्तिज्ञानास्यापि वह्निसाध्यकधूमहेतुककेवलान्वयितया तत्राव्याप्तिः स्यात्, निरुक्तव्याप्तिज्ञानस्यापि तादृशव्याप्त्यवगाहिनया तज्ज्ञानजनकवृत्तितादृशान्यतरावगाहिताव्यापकत्वस्य साध्यान्वयसहचारावगाहितायां विरहाद् द्वितीयं ज्ञानपदमुक्तम् । अपरे तु व्यतिरेकसहचारानवगाहिसंस्कारजन्यायामनुमित्युपधायकव्याप्तिस्मृतावतिव्याप्तिवारणाय द्वितीयं ज्ञानपदम्, आचार्य्यमते तादृशस्मृतेरलक्ष्यत्वात् । नच ज्ञानपदोपादानेऽपि अन्वयसहचारज्ञानोत्तरजाततादृशस्मृतावतिव्याप्तिर्दुर्वारैवेति वाच्यम् । अन्वयसहचारज्ञानस्य तादृशस्मृतेरव्यवहितपूर्वत्वेऽपि तत्र तज्जनकत्वानभ्युपगमादित्याहुः ।

नारायणी

विधव्याप्तिज्ञानत्वमेव नव्यमते केवलान्वयित्वम्। नन्वेवम् आचार्य्य-मते हेतोरेव केवलान्वयितया तदीयलक्षणं तन्मतानुसारेणैव व्याख्येय-मित्यत आह– तज्ज्ञानेति तादृशव्याप्तिज्ञानविशेष्यत्वविशिष्टप्रकृतहेतु-त्वमेवाचार्य्यमते प्रकृतहेतुसाध्यककेवलान्वय्यनुमानत्वं विवक्षितमि-त्यर्थः पर्य्यवसितः इति न वह्निमान् धूमादित्यादौ समूहालम्बनवह्नि-धूमयोः सामानाधिकरण्यविषयकपटनिष्ठघटसामानाधिकरण्यविषयक-ज्ञानमादाय धूमादिकेवलान्वय्यनुमानेऽव्याप्तिः, तादृशधूमधर्मिकवह्नि-व्याप्यत्वावगाहिज्ञानजनकीभूतं यत्समूहालम्बनज्ञानं तन्निष्ठान्यतरप-देन धूमनिष्ठवह्निसामानाधिकरण्यावगाहिताया एव धर्त्तुं शक्यतया तत्र

शक्तिः

अत्रान्यतरत्वानुपादाने अन्वयव्यतिरेकिण्यतिव्याप्तिः समूहालम्बनान्वयव्यतिरेक-सहचारावगाहितायास्तादात्म्येन व्यापकत्वस्यान्वयसहचारावगाहितायामक्षतत्वा-दतस्तदुपादानमिति ध्येयम्॥

अत्र लक्षणे वह्निसमानाधिकरणो धूमः इन्धनश्चेत्याकारकज्ञानजन्यस्येन्धन-धर्मिकव्याप्तिज्ञानस्येन्धनहेतुककेवलान्वयिलक्षणलक्ष्यस्येन्धनहेतुककेवलान्वयित्वा-नुपपत्तिः, तादृशज्ञानवृत्तिधूमनिष्ठसाध्यसामानाधिकरण्यावगाहिताया अपि तादृश-त्वात्तत्रेन्धनधर्मिकसाध्यसामानाधिकरण्यावगाहित्वविरहाद् द्वितीयं प्रकृतहेतुध-र्मिकपदम्। एवं वह्निसमानाधिकरणो धूमः घटश्चेति इत्याकारकज्ञाननिष्ठा-न्यतरावगाहित्वस्य साध्यान्वयसहचारावगाहित्वव्याप्यत्वविरहाद् धूमहेतुकवह्नि-साध्यककेवलान्वयिन्यव्याप्तिरतः तृतीयं हेतुधर्मिकपदं हेतुतावच्छेदकधर्ममात्रा-वच्छिन्नविशेष्यकार्थकम्। संयोगवान् संयोगाभावात् संयोगाभाववान् संयोगा-भावाभावात् इत्यादौ यथायथं संयोगाभावः संयोगाभावाभावसमानाधिकरणः इत्याकारकव्यतिरेकसहचारग्रहाधीने संयोगाभावाभावःसंयोगाभावसमानाधिकरण इत्याकारकतादृशसहचारग्रहाधीने च व्याप्तिग्रहेऽतिव्याप्तिवारणाय सर्वत्र साध्य-तावच्छेदकावच्छिन्नार्थकं साध्यपदमित्यवसेयम्॥

## नारायणी

तादात्म्येन व्यापकताया धूमनिष्ठवह्निसामानाधिकरण्यावगाहितारूपसाध्यसामानाधिकरण्यावगाहिताया अक्षतत्वात् ॥

वह्न्यभावो धूमाभावसमानाधिकरणः धूमो वह्निसमानाधिकरण इत्याकारकसमूहालम्बनज्ञानजन्यव्याप्तिग्रहविशेष्ये वह्निसाध्यकधूमादौ अन्वयव्यतिरेकिणि अतिव्याप्तिवारणाय तादृशान्यतरविशिष्टं तादात्म्येन यद्धेतुनिष्ठसाध्यसामानाधिकरण्यावगाहित्वम् इत्यनभिधायान्यतरस्य तादात्म्येन व्यापकमित्युक्तम्, तथाचोक्तस्थलेऽन्यतरपदेन साध्याभावधर्मिकहेत्वभावसामानाधिकरण्यावगाहिताया अपि धर्त्तुं शक्यतया तत्र तादात्म्येन हेतुधर्मिकसाध्यसामानाधिकरण्यावगाहिताया असत्त्वेन साध्यसामानाधिकरण्यावगाहितायाः तादात्म्येनान्यतरव्यापकत्वासम्भवान्नातिव्याप्तिरिति भावः।

## शक्तिः

अथात्र तादृशान्यतरस्य व्यापकं यत्किञ्चिद्धर्मिकसाध्यसामानाधिकरण्यावगाहित्वं इति कथं नोक्तमिति चेन्न संयोगाभाववान् संयोगादित्यत्र साध्याभावधर्मिकहेत्वभावसामानाधिकरण्यावगाही यः संयोगाभावाभावः संयोगाभावसमानाधिकरणः इत्याकारकग्रहस्तत्र संयोगाभावरूपसाध्यसामानाधिकरण्यावगाहितायास्सत्त्वेन साध्याभावधर्मिकहेत्वभावसामानाधिकरण्यावगाहिताव्यापकत्वस्य यत्किञ्चिद्धर्मिकसाध्यसामानाधिकरण्यावगाहितायामक्षततत्वात् केवलव्यतिरेकिण्यतिव्याप्त्यापत्तेः, अतः हेतुतावच्छेदकावच्छिन्नहेतुधर्मिकत्वं व्यापकत्वदिशि निवेशनीयम्। न चान्यतरदिश्यपि हेतुधर्मिकत्वं न देयमेव, तथा चोक्तस्थले संयोगाभावाभावरूपसाध्याभावत्वावच्छिन्ना या निरुक्तहेत्वभावरूपसंयोगाभावसामानाधिकरण्यत्वावच्छिन्नप्रकारित्वावच्छिन्नविशेष्यिता तद्व्यापकत्वस्य यत्किञ्चिद्धर्मावच्छिन्नविशेष्यित्वावच्छिन्नसाध्याभावत्वावच्छिन्नसामानाधिकरण्यत्वावच्छिन्नप्रकारितायामसत्त्वान्नोक्तदोष इति वाच्यम्, यदा साध्यसामानाधिकरण्यात्मको यः हेत्वभावसमानाधिकरणसाध्याभावस्तद्वान् पर्वतः

नारायणी

नच तादृशान्यतरस्य स्वरूपेण व्यापकं यत् साध्यसामानाधिकरण्यावगाहित्वमित्येव वक्तुमुचितमिति वाच्यम्, तथा सत्यपि अन्वयव्यतिरेकिणि धूमादावेवातिव्याप्त्यापत्तेः, पूर्वोक्तसमूहालम्बनज्ञाने साध्याभावधर्मिकहेत्वभावसामानाधिकरण्यावगाहिताया हेतुधर्मिकसाध्यसामानाधिकरण्यावगाहिताया द्वयोः सत्त्वेऽपि तत्र समूहालम्बनज्ञाने हेतुधर्मिकसाध्यसामानाधिकरण्यावगाहित्वस्यानपायात् इत्यन्यत्रान्यदनुसन्धेयम्।

शक्तिः

इत्याकारकं साध्याभावांशे साध्यसामानाधिकरण्यत्वप्रकारकसाध्याभावत्वसाध्यसामान्याधिकरण्यत्वोभयधर्मितावच्छेदकहेत्वभावसामानाधिकरण्यप्रकारकं पर्वतांशे च त्रितयधर्मप्रकारकं धूमाभावसमानाधिकरणवह्निसामानाधिकरण्यात्मकवह्न्यभाववान् पर्वत इत्याकारकञ्च ज्ञानं तादृशज्ञानीया या धूमाभावसामानाधिकरण्यत्वावच्छिन्नप्रकारित्वावच्छिन्नवह्न्यभावत्वावच्छिन्नविशेष्यितैव वह्निसामानाधिकरण्यत्वावच्छिन्ना पर्वतनिरूपितविशेष्यित्वावच्छिन्ना प्रकारिता तस्याश्च तादात्म्येन निरुक्तविशेष्यिताव्यापकत्वात् तत्रैवातिव्याप्त्यापत्तेः। ननु तथापि व्याप्यदिशि हेतुधर्मिकसाध्यसामानाधिकरण्यावगाहित्वहेत्वभावविषयतानिरूपिताधिकरणविषयतानिरूपितवृत्तित्वविषयतानिरूपिताभावविषयतानिरूपितप्रतियोगित्वसम्बन्धावच्छिन्नसाध्यविषयताऽन्यतरत्वेनोपादाने दोषाभावाद् व्यर्थं हेतुधर्मिकपदमिति चेन्न। साध्यसामानाधिकरण्यत्वोपलक्षितः साध्याभावः हेत्वभावसमानाधिकरण इत्यत्रातिव्याप्त्यापत्तेः, साध्यसामानाधिकरण्यत्वस्य साध्यांशे उपलक्षणत्वेन प्रतियोगित्वसम्बन्धावच्छिन्नविषयत्वस्य साध्यसामानाधिकरण्यत्वावच्छिन्नप्रकारत्वस्य च द्वयोरैक्यात्सर्वं सुस्थम्॥

ननु केवलान्वयिनि साध्याभावाप्रसिद्ध्याऽव्याप्तेः सर्वत्र भ्रमे मानाभावादित्यादिना पूर्वकल्पस्य दूषिततयाऽत्रापि तद्दोषस्य बद्धमूलत्वमेवास्तीति चेन्न। पूर्वकल्पे तत्पुरुषीयत्वनिवेशात् केवलान्वयिनि व्यतिरेकसहचाराप्रसिद्धिरभिहिता,

### नारायणी

ननु (तथापि गगनवान् धूमादित्यादौ भ्रमात्मकसाध्यसहचारग्रहाधीनव्याप्तिग्रहविशेष्ये धूमादावव्याप्तिः, गगनस्याधिकरणाप्रसिद्ध्या धूमनिष्ठगगनाधिकरणवृत्तित्वरूपसाध्यसहचारत्वस्याप्रसिद्धत्वाद् वाच्यत्वसाध्यकज्ञेयत्वादावव्याप्तिश्च, तादृशस्थले साध्याभावहेत्वभावादेरप्रसिद्धतया तादृशान्यतरस्यैवाप्रसिद्धेरत आह **साध्याभावत्वादिति** आदिना हेत्वभावत्वादिपरिग्रहः। **वैज्ञानिकमिति** हेतुविषयतानिरूपिताभावविषयतानिरूपिताधिकरणविषयतानिरूपितसाध्यविषयतानिरूपिताभावविषयताश्रयत्वरूपम्। साध्यसामानाधिकरण्यमपि साध्यविषयतानिरूपिताधिकरणविषयतानिरूपितवृत्तित्वविषयतानिरूपितहेतुविषयताश्रयत्वरूपम्, तेनासदनुमानस्य लक्ष्यतामते न गगनसाध्यकधूमादावव्याप्तिः। **तेनेति** साध्याभावहेत्वभावयोः वैज्ञानिकत्वेन विवक्षणेनेत्यर्थः। **इत्यादाविति** आदिनाऽभिधेयत्वसाध्यकप्रमेयत्वादिपरिग्रहः। **अलीकत्वेऽनेति** वाच्यत्वादेः केवलान्वयितया तदभावस्यावस्तुत्वादित्याशयः। दशाविशेषे=साध्यसहचारमात्रग्रहदशायाम्। **न तत्राव्याप्तिरिति** घटाभावादौ प्रतियोगितासम्बन्धेन वाच्यत्वस्य भ्रमीयावगाहितायाः प्रसिद्ध्या लक्षणघटकतादृशान्यतरस्यापि प्रसिद्धिसम्भवान्न वाच्यत्वसाध्यकज्ञेयत्वादिहेतावव्याप्तिरिति भावः।)

### शक्तिः

अत्र तु तदनिवेशात् कस्यचित्पुरुषस्य तादृशभ्रमप्रसिद्ध्या नान्यतरावगाहित्वाप्रसिद्धिरिति प्राञ्चः।

परे तु तादृशान्यतरावगाहित्वपदेन व्यभिचारधीविरोधिविषयिता ग्राह्येति नाप्रसिद्धिः। न च तथा सति धूमव्यापको वह्निः वह्न्यभाववदवृत्तिर्वा धूमः इति ज्ञानात्मकधूमो वह्निसमानाधिकरण इत्याकारकसहचारज्ञानाद् यदा व्याप्तिज्ञानमुत्पन्नं तदा तत्राव्याप्तिः, तज्जनकीभूतज्ञानवृत्तिव्यभिचारधीविरोधितावच्छेदकीभूतव्यापकत्वविषयितायां व्याप्तिविषयितायां वा तादात्म्येन साध्यान्वयसहचारावगाहि-

## नारायणी

ननु प्रकृतहेतुधर्मिकप्रकृतसाध्यव्याप्यत्वावगाहियज्ज्ञानेत्यत्रावगाहित्वपर्यन्तस्य यज्ज्ञानविशेषणत्वोपादानं निरर्थकम् केवलयज्ज्ञानजनकीभूतज्ञाननिष्ठस्य प्रकृतहेतुधर्मिकसाध्यसामानाधिकरण्यावगाहित्वप्रकृतसाध्याभावधर्मिकप्रकृतहेत्वभावसामानाधिकरण्यावगाहित्वयोरन्यतरस्य तादात्म्येन व्यापकं प्रकृतहेतुधर्मिकप्रकृतसाध्यसहचारविषयित्वं तज्ज्ञानत्वम्-इत्यादिरीत्यैव लक्षणार्थनिर्वचनसम्भवादित्याशङ्कते नचेति वैयर्थ्यमिति परेणान्वयः। अवगाहीति यज्ज्ञानविशेषणीभूतस्य प्रकृतहेतुधर्मिकप्रकृतसाध्यव्याप्यत्वावगाहीत्यन्तदलस्येत्यर्थः,वैयर्थ्यमिति हेतुधर्मिकसाध्यसामानाधिकरण्यज्ञानस्य साध्याभावधर्मिकहेत्वभावसामानाधिकरण्यावगाहिज्ञानस्य च व्याप्तिग्रह एव जनकतया यज्ज्ञानपदेन व्याप्तिज्ञानातिरिक्तस्य धर्तुमशक्यत्वादित्यभिमानपरेयं शङ्केति

## शक्तिः

लक्ष्यस्यासत्त्वात्। यदि च प्रतियोगित्वसम्बन्धावच्छिन्नविषयतानिरूपिताभावविषयतानिरूपितमुख्यविशेष्यत्वावच्छिन्नत्वेन विरोधित्वस्य विशेषणीयत्वान्नोक्तदोष इत्युच्यते तदा अधिकरणविशेषान्तर्भावेन व्यभिचारग्रहं प्रति अधिकरणविशेषान्तर्भावेन हेतुर्धर्मिकसाध्यसहचारग्रहस्य विरोधिताया आचार्य्यसम्मततया वह्निधर्मिकधूमसहचारग्रहस्यापि प्रतिबन्धकत्वेन यत्र वह्निर्धूमसमानाधिकरणः इति ज्ञानात्मकं धूमो वह्निसमानाधिकरणः इति ज्ञानं तस्माज्जायमानव्याप्तिज्ञानस्यापि केवलान्वयितया तत्राव्याप्तिः स्यात् तज्जनकीभूतज्ञानवृत्तिव्यभिचारधीविरोधितावच्छेदकीभूतवह्निधर्मिकधूमसहचारविषयतायां साध्यसहचारावगाहित्वाभावादिति वाच्यम्, हेतुर्धर्मिकव्यभिचारविषयित्वाव्यापकीभूतविषयित्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकीभूतविषयितात्वेन तादृशान्यतरावगाहित्वयोरनुगमात्। तथाच व्यक्तिविशेषमन्तर्भाव्य तादृशान्यतरसहचारग्रहप्रतिबन्धकत्वनिरूपिता व्यक्तिविशेषमन्तर्भाव्य व्यभिचारविषयित्वावच्छिन्ना या प्रतिबध्यता सैव तादृशग्रहत्वव्यापिका नतु व्यापकप्रतिबन्धकतानिरूपितप्रति-

जागदीशी

साध्यसामानाधिकरण्यविशिष्टहेतुमत्त्वादिग्रहे अतिव्याप्तेर्वारकत्वात्।

नारायणी

भावः। अभिमानं निराकर्त्तुं समाधत्ते साध्येति साध्याधिकरणवृत्तित्वविशिष्टहेतुमानिति ग्रहे तद्ग्रहविषये हेतौ वा। अतिव्याप्तेर्वारकत्वादिति तथा चावगाहीत्यन्तदलं परित्यज्य यज्ज्ञानजनकीभूतज्ञाननिरूठष्य प्रकृतहेतुधर्मिकसाध्यसामानाधिकरण्यावगाहित्वसाध्याभावधर्मिकहेत्वभावसामानाधिकरण्यावगाहित्वयोरन्यतरस्य तादात्म्येन व्यापकं प्रकृतहेतुधर्मिकप्रकृतसाध्यसहचारविषयित्वं तज्ज्ञानत्वमिति रीत्या लक्षणार्थनिर्वचने वह्न्यधिकरणवृत्तित्वविशिष्टधूमवान् पर्वत इत्याकारकज्ञाने तद्विषये धूमे वाऽतिव्याप्त्यापत्तिः। वह्न्यधिकरणवृत्तित्वविशिष्टधूमवैशिष्ट्यावगाहिज्ञानस्य वह्न्यधिकर-

शक्तिः

बध्यता, व्याप्तिज्ञानद्वयप्रतिबन्धकतानिरूपितप्रतिबध्यता वा इति नानुपपत्तिः। नच तथापि विनिगमनाविरहात् तादृशान्यतरसहचारघटकीभूतानां निरूप्यनिरूपकभावापन्नानां सर्वासामेव विषयतानां तादृशव्यभिचारधीविरोधितावच्छेदकतया निरुक्तविरोधितावच्छेदकधूमादिविषयतायां हेतुतावच्छेदकावच्छिन्नविशेष्यित्वावच्छिन्नसाध्यसामानाधिकरण्यावगाहित्वस्यासत्त्वादसम्भवापत्तिरिति वाच्यम्। हेतुधर्मिकसाध्यसहचारावगाहित्वपदेन विलक्षणावच्छेद्यावच्छेदकावगाहिनी या हेतुधर्मिकसाध्यान्वयसहचारावगाहिता तदवच्छिन्नभेदप्रतियोगितानवच्छेदिका सती साध्यधर्मिकहेतुसामानाधिकरण्यावगाहित्वावच्छिन्नभेदप्रतियोगितानवच्छेदिका या विषयता तदन्यतरविषयत्वस्य विवक्षितत्वात्। तथाच द्वयोरपि हेतुधर्मिकसामानाधिकरण्यावगाहित्वसाध्यधर्मिकहेतुसामानाधिकरण्यावगाहित्वयोर्घटकीभूतप्रत्येकविषयत्वानां निरुक्तभेदप्रतियोगितावच्छेकत्वेन तेषामपि व्यभिचारधीविरोधितावच्छेदकविषयतारूपतया प्रत्येकविषयतायां तादृशविषयताव्यापकत्वमक्षतमित्याहुः।

जागदीशी

**तादृशज्ञानजनकत्वञ्च इह फलोपहितं ग्राह्यम्, तेन साध्याभावध-र्मिकहेत्वभावसहचारज्ञानस्य व्याप्तिज्ञानसामान्यं प्रत्येव विशेषण-**

नारायणी

णवृत्तित्वविशिष्टवैशिष्ट्यावगाहितया तादृशज्ञानं प्रति विशेषतावच्छे-दकप्रकारकनिश्चयमुद्रया धूमो वह्निसमानाधिकरण इत्याकारकसाध्य-सामानाधिकरण्यावगाहिज्ञानस्य जनकत्वेन यज्ज्ञानपदेन वह्निसमा-नाधिकरणधूमवान् पर्वत इत्याकारकज्ञानमादाय तज्जनकीभूतज्ञाननिष्ठा-न्यतरान्तर्गताया धूमनिष्ठवह्निसामानाधिकरण्यावगाहितायाः तादा-त्म्येन व्यापकत्वस्य वह्निरूपसाध्यसामानाधिकरण्यावगाहितायामक्षत-तया तज्ज्ञानत्वस्य वह्निसमानाधिकरणधूमवान् पर्वत इति ज्ञाने तज्ज्ञान-विषयत्वविशिष्टहेतुत्वस्य धूमे वा सत्त्वादित्याशयः।

**तादृशेति** प्रकृतहेतुधर्मिकप्रकृतसाध्याव्याप्यत्वावगाहिज्ञानजनकत्व-ञ्चेत्यर्थः। इह = एतल्लक्षणे तादृशजनकत्वान्वयि घटकत्वं सप्तम्यर्थः। **फलोपहितमिति** अव्यवहितपूर्वत्वसम्बन्धेन तादृशव्याप्तिज्ञानविशिष्ट-मित्यर्थः। **तेनेति** फलोपहितत्वरूपजनकत्वनिवेशेनेत्यर्थः। **साध्याभाव-धर्मिकेति** साध्याभावो हेत्वभावसमानाधिकरण इत्याकरकज्ञानस्येत्यर्थः। व्याप्तिज्ञानेति। हेतुव्यापकसाध्यसामानाधिकरण्यरूपव्याप्तिज्ञानात्मक-विशिष्टबुद्धिसामान्यमित्यर्थः। **विशेषणज्ञानादिविधयेति**। विशेषणज्ञान-त्वादिनेत्यर्थः। न चोक्तव्याप्तेः साध्याभावनिष्ठहेत्वभावसामानाधिकर-ण्याघटिततया कथं साध्याभावधर्मिकहेत्वभावसामानाधिकरण्य-ज्ञानस्य तादृशव्याप्तिज्ञानं प्रति हेतुत्वमिति वाच्यम्। साध्यस्य अभा-वस्य हेत्वादेरपि हेतुव्यापकसाध्यसामानाधिकरण्यरूपव्याप्तिघटकतया तेषामपि विशेषणत्वौचित्यात्, किं वा तत्रादिपदोपादानेन यथा निरु-क्तव्याप्तिज्ञानेऽन्यस्य विशेषणज्ञानविधया हेतुत्वं तथा कारणतावच्छेद-

जागदीशी

ज्ञानादिनिधया स्वरूपयोग्यत्वेऽपि नासम्भवः । न च यत्त्वतत्त्वयोर्विशेषत एव विश्रामादननुगमः, प्राचीनमते स्वत्वस्यैव तयोरनुगमात् । प्रकृतव्याप्त्यवगाहिस्वजनकज्ञाननिष्ठतादृशान्यतरविषयितात्वव्यापकान्वयसहचारविषयितात्वकप्रकृतव्याप्तिज्ञानत्वं तत्त्वसि-

नारायणी

कधर्मवत्तया व्यतिरेकसहचारज्ञानस्य हेतुत्वम्, कारणतावच्छेदकधर्मश्चान्वयसहचारज्ञानव्यतिरेकसहचारज्ञानान्यतरत्त्वादिकमिति ध्येयम्। नासम्भव इति साध्याभावधर्मिकहेत्वभावसामानाधिकरण्यविषयिताया अपि प्रकृतव्याप्तिग्रहस्वरूपयोग्यज्ञानवृत्तितया तत्र साध्यान्वयसहचारविषयिताया असत्त्वादसम्भवः स्यात्, अतस्तादृशव्याप्तिग्रहफलोपहितज्ञानवृत्ति-अन्यतरविषयिताया निवेश इति हृदयम्। निरुक्तलक्षणस्य यत्त्वतत्त्वघटितत्वेनाननुगम इति नचेत्यदिनाऽऽशङ्क्य समाधत्ते प्राचीनमत इति—स्वत्वस्यैव स्वत्त्वघटितलक्षणस्यैव । तयोः यत्त्वतत्त्वयोः अनुगमादिति बुद्धिविषयतावच्छेदकत्वोपलक्षितधर्मावच्छिन्ने तत्पदस्य तत्पदोपस्थाप्यतावच्छेदकत्वोपलक्षितत्वेन यत्पदस्यापि शक्तिरित्यभिप्रेत्य तयोरनुगतत्वं प्राचीनैः स्वीकृतम् । एतन्मतस्य युक्तिसहत्वं न सर्वसम्मतमित्याशयेन स्वत्त्वघटितलक्षणमाह प्रकृतेति तथाच प्रकृतहेतुधर्मिकप्रकृतसाध्यव्याप्यत्वावगाहिस्वजनकज्ञाननिष्ठप्रकृतहेतुधर्मिकसाध्यसामानाधिकरण्यावगाहित्वप्रकृतसाध्याभावधर्मिकहेत्वभावसामानाधिकरण्यावगाहित्वयोरन्यतरावगाहितात्वव्यापकप्रकृतसाध्यान्वयसहचारावगाहितात्वकव्याप्तिग्रहविशेष्यत्वं तादृशकेवलान्वयित्वमित्युक्तौ नाननुगमवार्त्ताऽपि प्राचीनमते, स्वत्वस्यानुगतत्वात् ।

ननु यादृशव्याप्तिज्ञानोत्तरकाले कारणान्तरविरहेणानुमितिर्न जनिता तादृशव्याप्तिज्ञानस्य तद्विषयीभूतहेतोश्च केवलान्वयित्वं दुर्वारं,

जागदीशी

त्यस्यापि सुवचत्वाच्च। यदि च अनुमित्यजनकव्याप्तिज्ञानस्य न लक्ष्यत्वं तदा प्रकृतहेतुकप्रकृतसाध्यकानुमितिफलोपहितकरण-

नारायणी

तत्रापि निरुक्तलक्षणस्य सत्त्वात् इत्याशङ्कते यदि चेति अनुमित्येति अव्यवहितपूर्वत्वसम्बन्धेनानुमितिविशिष्टान्यव्याप्तिज्ञानस्य तद्विषयीभूतहेतोश्चेत्यर्थः। न लक्ष्यत्वमित्यस्य यदि चेत्यनेन सम्बन्धः, तादृशव्याप्तिज्ञानादेर्लक्ष्यत्वेऽपि क्षत्यभावाद् यदि चेत्युक्तम्। समाधत्ते तदा प्रकृतेति

शक्तिः

अन्ये तु हेतुधर्मिकसाध्यसामानाधिकरण्यावगाहित्व-साध्यधर्मिकहेतुसामानाधिकरण्यावगाहित्व-हेत्वधिकरणसाध्याधिकरणावगाहित्वैतदन्यतमत्वावच्छिन्नभेदप्रतियोगितावच्छेदकविषयतैव साध्यान्वयेत्यादिना विवक्षणीया इति ध्येयमित्याहुः।

ननु तथापि प्रकृतहेतुधर्मिकसाध्यव्याप्यत्वावगाहि-यज्ज्ञानजनकीभूतज्ञानावृत्तिव्यतिरेकसहचारविषयताकत्वं तज्ज्ञानत्वं केवलान्वयित्वमित्येवं लाघवात्कुतो लक्षणं नोक्तमिति चेन्न,यत्र व्यतिरेकसहचारज्ञानात्मकमन्वयसहचारज्ञानं व्यतिरेकसहचारांशेऽप्रमाण्यज्ञानास्कन्दितं तदनन्तरजातस्य व्याप्तिज्ञानस्य केवलान्वयितया तत्राव्याप्त्यापत्तेः निरुक्तव्याप्तिज्ञानजनकज्ञानावृत्तित्वस्य व्यतिरेकसहचारविषयताकत्वे विरहात्, तादृशान्यतरावगाहित्वव्यापकत्वनिवेशे तु तादृशान्यतरविषयितायां व्यभिचारधीप्रतिबन्धकतावच्छेदकत्वविवक्षणान्न दोष इति तु विभावनीयम्।

अथ प्रकृतहेतुधर्मिकप्रकृतसाध्यव्याप्यतावगाहियज्ज्ञानजनकीभूतज्ञानवृत्तितादृशान्यतरावगाहित्वव्यापकव्यतिरेकसहचारविषयित्वाभावः तज्ज्ञानत्वमिति वा कुतो वा लक्षणं नोक्तमिति चेन्न, पूर्वोक्तलक्षणीयदोषस्यात्रापि सत्त्वात्।

केचित्तु निरुक्तयोर्लक्षणान्तरत्वाद् यथासन्निवेशेऽपि न कोऽपि दोष इत्यप्याहुः।

तदा प्रकृतहेतुकप्रकृतसाध्यकानुमितेरिति—अत्र अनुमितौ प्रकृतहेतुकत्वानिवेशे वह्निव्याप्यो धूमः वह्निव्याप्य आलोकः इत्याकारकप्रकृतसाध्यकव्याप्तिज्ञानमादाय

जागदीशी

त्वेनापि तज्ज्ञानं विशेषणीयमिति संक्षेपः । ननु यत्र पूर्वं साध्यसहचारस्य नोपस्थितिः, किन्तु तद्घटकसाध्यादिप्रत्येकवस्तूपस्थित्यैव विशेष्ये विशेषणमित्यादिरीत्या अन्वयव्याप्तिधीः, तत्र उक्तलक्षणाव्याप्तिः, अतः प्रकारान्तरमाह तादृशसहचारत्वेति ।

नारायणी

हेतुतावच्छेदकावच्छिन्नहेतुकसाध्यतावच्छेदकावच्छिन्नसाध्यविधेयताका याऽनुमितिःअव्यवहितपूर्वत्वसम्बन्धेन तद्विशिष्टत्वेनापीत्यर्थः। तज्ज्ञानम् = प्रकृतव्याप्तिज्ञानम् । विशेषणीयमिति तथाच यादृशव्याप्तिज्ञानोत्तरकाले कारणान्तरविरहेणानुमितिर्न जनिता तादृशव्याप्तिज्ञानस्यालक्ष्यत्वेऽपि न तत्रातिव्याप्तिः, तत्रान्यवहितपूर्वत्वसम्बन्धेनानुमितिफलोपहितत्वरूपविशेषणस्यासत्त्वादित्याशयः ।

लक्षणान्तरावतरणबीजमाह नन्वित्यादि यत्र = यादृशस्थले । पूर्वमिति हेतुव्यापकसाध्यसामानाधिकरण्यरूपव्याप्तिग्रहादित्यादिः । साध्यसहचारस्य = हेतुनिष्ठत्व विशेषितसाध्याधिकरणवृत्तित्वस्य। नोपस्थितिरिति हेतुनिष्ठहेतुव्यापकसाध्यसामानाधिकरण्यरूपव्याप्तिज्ञानस्य साध्यसामानाधिकरण्यप्रकारकतया तज्ज्ञानस्य विशेषणज्ञानविधया पूर्वमपेक्षिततया तज्ज्ञानविरहकालेऽपि व्याप्तिग्रहः सम्भवतीत्याशयवानाह किन्त्विति अखण्डस्य साध्यसामानाधिकरण्यस्य व्याप्तिग्रहात्पूर्वमनुपस्थितावपि साध्याधिकरणवृत्तित्वघटकप्रत्येकपदार्थोपस्थित्यैव व्याप्तिग्रहोत्पादो निर्विवादः--इत्याह तद्घटकेति हेतुनिष्ठसाध्याधिकरणवृत्तित्वघटकप्रत्येकपदार्थस्य साध्यास्याधिकरणस्य वृत्तित्वादेरुपस्थित्यैवेत्यर्थः । विशेष्य इति तथाच साध्यम् अधिकरणं वृत्तित्वमित्याकारकसाध्यसहचारघटकप्रत्येकपदार्थज्ञानाद् विशिष्टवैशिष्ट्यावगाहिव्याप्तिग्रहासम्भवेऽपि तादृशसामानाधिकरण्योपलक्षितहेतुविशेष्यक-

जागदीशी

प्रकृतव्याप्तिग्रहानुकूलसहचारत्वेत्यर्थः। तथा च उक्तस्थलेऽपि व्यापकताघटकमभावस्य हेतुसहचरितत्वमवश्यं प्राग् ग्राह्यमिति तत्र लक्ष-

नारायणी

व्याप्तिग्रहोत्पादो निर्विवादः। तत्र = तादृशस्थले। उक्तलक्षणाव्याप्तिः = व्याप्तिग्रहजनकज्ञानविषयसहचारत्वव्यापकसाध्यान्वयसहचारत्वकव्याप्तिग्रहविशेष्यत्वरूपलक्षणस्य स्वयं व्याख्यातस्य प्रकृतहेतुधर्मिकेत्यादिलक्षणस्य चाव्याप्तिः। निरुक्तव्याप्तिज्ञानजनकज्ञानविषयसहचारत्वव्यापकसाध्यान्वयसहचारत्वस्याप्रसिद्धत्वात् इत्याशयः। अतः = निरुक्ताव्याप्तेः। प्रकारान्तरम्। प्रकृतलक्षणं परित्यज्य लक्षणान्तरम् **प्रकृतेति** प्रकृतहेतुधर्मिकसाध्यव्याप्तिग्रहजनकज्ञानविषयसहचारत्वेत्यर्थः। उक्तस्थले निरुक्तलक्षणस्याव्याप्तिमुद्धरति **तथाचेति** पूर्वलक्षणं परित्यज्य निरुक्तस्य लक्षणार्थत्वे चेत्यर्थः। **व्यापकतेति** हेतुमन्निष्ठाभावप्रतियोगितानवच्छेदकसाध्यतावच्छेदकवत्त्वरूपव्यापकताघटकीभतस्याभावस्येत्यर्थः। हेतुसहचरितत्वं = हेत्वधिकरणवृत्तित्वम्। **प्राग्ग्राह्यमिति** निरुक्ता-

शक्तिः

आलोकलिङ्गकानुमानस्यापि केवलान्वयित्वापत्तिः, अतः प्रकृतहेतुकत्वपदम्। एवं प्रकृतसाध्यकत्वानुक्तौ वह्निव्याप्यो धूमः द्रव्यव्याप्यो धूमः इत्यादिद्रव्यसाध्यकव्याप्तिज्ञानमदाय वह्निसाध्यककेवलान्वयित्वापत्तिवारणाय तदुपादानम्॥

द्रव्यसमानाधिकरणो वह्निसमानाधिकरणो वा धूमः इतिज्ञानजन्यव्याप्तिज्ञानस्य द्रव्यसाध्यककेवलान्वयित्वापत्तिवारणाय प्रकृतसाध्यव्याप्त्यवगाहीत्यत्र साध्ये प्रकृतत्वोपादानम्। एवं वह्निसाध्यकलक्षणस्य गमनार्थं द्वितीयसाध्यपदम्। संयोगसाध्यकसंयोगाभावहेतुकस्थले संयोगाभावाभावः संयोगाभावसमानाधिकरणः इति ज्ञानजन्येऽतिव्याप्तिवारणाय तृतीयं प्रकृतत्वं साध्यविशेषणम्।

नारायणी

न्वयव्याप्तिज्ञानस्याभावनिष्ठहेत्वधिकरणवृत्तित्ववैशिष्ट्यावगाहित्वात् । तज्ज्ञानमवश्यं पूर्वमस्ति इति व्याप्तिज्ञानजनकीभूतज्ञानविषयसहचारत्वस्य अभावनिष्ठहेतुसामानाधिकरण्ये वर्त्तमानतया तत्र हेतुमन्निष्ठाभावेत्यादिव्याप्तिघटकसहचारत्वस्याक्षतत्वाद् भवति लक्षणसमन्वयः, एतच्चाग्रे स्फुटीभविष्यतीति भावः । तत्र=तादृशस्थले यत्र प्रत्येकपदार्थोपस्थित्या व्याप्तिग्रहस्तत्रेति यावत् ॥

शक्तिः

ननु अभावनिष्ठहेतुसहचरितत्वघटकप्रत्येकवस्तूपस्थित्या विशेष्ये विशेषणमिति रीत्या यदि अन्वयव्याप्तिधीरुत्पद्यते तदा उक्तलक्षणस्यासम्भवः, व्याप्तिघटकसहचारत्वस्य यथाश्रुतस्याप्रसिद्धेरिति चेन्न, प्रतियोगिविशेषिताभावप्रत्ययो हि विशिष्टवैशिष्ट्यमर्यादां नातिशेते इति नियमात् अभावसहचरितत्वघटकप्रत्येकपदार्थोपस्थित्याऽन्वयव्याप्तिज्ञानस्योत्पादासम्भवात् ॥

विशिष्टवैशिष्ट्यावगाहिज्ञानाद् विशेष्ये विशेषणमिति रीत्या व्याप्तिज्ञानस्य को भेद इति तु नाशङ्कनीयम्, तद्विशिष्टवैशिष्ट्यावगाहिबुद्धित्वावच्छिन्नं प्रति तत्प्रकारकनिश्चयत्वेन कारणत्वमिति नियमाद् विशिष्टवैशिष्ट्यावगाहिज्ञानात्प्राक् साध्यसामानाधिकरण्यप्रकारकनिश्चयस्य सत्त्वमावश्यकं विशेष्ये विशेषणमिति रीत्या व्याप्तिज्ञानेन तथा नियमः इति विशेषः। हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकत्वाभावांशे उभयथैव तुल्यत्वम्, केवलं साध्यसामानाधिकरण्यांशे एव विशेषनियमः। व्याप्तिज्ञानयोरुभयोरेव व्यभिचारधीविरोधित्वमङ्गीकरणीयम्, अन्यथा विशेष्ये विशेषणमिति रीत्या व्याप्तिज्ञानस्यानुमित्यहेतुत्वापत्तेः,तदधिकरणान्तर्भावेण व्यभिचारबुद्धिं प्रति तदधिकरणान्तर्भावेण साध्यसामानाधिकरण्यनिश्चयत्वेन तदधिकरणोपस्थितित्वेन च प्रतिबन्धकतायाः प्राचीनमतसिद्धत्वात्-इत्यादिकं पूर्वमेव विवेचितमस्माभिरिति ध्येयम् इति श्रीचरणाः ।

जागदीशी

णसमन्वयः। अत्रापि प्रकृतहेतुसाध्यकान्वयव्याप्त्यवगाहि-यज्ज्ञान-जनकज्ञानवृत्तिविषयितात्वव्यापकं व्यतिरेकसहचारावगाहितान्यत्वं तज्ज्ञानविषयिताविशिष्टप्रकृतहेतुलिङ्गत्वं केवलान्वयित्वमित्यत्र ता-

नारायणी

लक्षणसमन्वयप्रदर्शनायाह अत्रापीति निरुक्तलक्षणेऽपीत्यर्थः। प्रकृतेति हेतुतावच्छेदकावच्छिन्नार्थकं तथाच प्रकृतहेतुतावच्छेदकावच्छिन्नधर्मिकसाध्यव्याप्यत्वावगाहिस्वजनकज्ञाननिष्ठविषयितात्वव्यापकसाध्याभावधर्मिकहेत्वभावसामानाधिकरण्यविषयिताभिन्नत्वकं यद् व्याप्तिज्ञानं तद् विषयताविशिष्टप्रकृतहेतुत्वं प्रकृतहेतुसाध्यककेवलान्वयित्वमित्यर्थः पर्यवसितः। यत्र साध्याधिकरणप्रत्येकपदार्थोपस्थित्यैव व्यतिरेकसहचारग्रहं विना व्याप्तिग्रहो जायते तत्रापि निरुक्तव्याप्तिग्रहजनकीभूतं यदभावो हेतुसमानाधिकरण इत्याकारकं ज्ञानं तादृशज्ञाननिष्ठविषयितात्वव्यापकत्वस्य साध्याभावनिष्ठहेत्वभावसामानाधिकरण्यरूपव्यतिरेकसहचारविषयिताभिन्नत्वे वर्त्तमानतया तादृशव्याप्तिज्ञानविषयत्वमादाय प्रकृतहेतौ तादृशस्थलेऽपि केवलान्वयिलक्षणं सुघटमिति तु परमार्थः॥

ननु यथाश्रुतव्याप्तिज्ञानजनकज्ञानविषयसहचारत्वव्यापकव्याप्तिघटकसहचारत्वरूपलघुलक्षणं परित्यज्य निरुक्तरीत्या लक्षणार्थाभि-

शक्तिः

अत्रापि प्रकृतेति—अथात्र स्वजनकज्ञानत्वव्यापकव्यतिरेकसहचारावगाहित्वाभाव एवोच्यतां किं तादृशावगाहितात्वव्यापकव्यतिरेकसहचारविषयिताभिन्नत्वनिवेशनेनेति चेन्न। यादृशस्थले व्यतिरेकान्वयसहचारज्ञानाद् व्याप्तिज्ञानं जातं व्यतिरेकसहचारांशे स्वप्रमाण्यज्ञानं वर्त्तते तादृशस्थले केवलान्वयिनि हेतावव्याप्तेः, अतस्तादृशावगाहितात्वव्यापकत्वमुक्तम्, तथाच तादृशविषयितायां व्यभिचारधी-

जागदीशी

त्पर्य्यम् । अतो न पूर्वलक्षणोक्तदोषाणामवकाश इति ध्येयम् ।

नारायणी

धानमनुचितम्, अत आह—अत इति निरुक्तरीत्या लक्षणार्थस्य निर्वचनत इत्यर्थः। पूर्वेति स्वजनकज्ञानविषयासहचारत्वव्यापकसाध्यान्वय-सहचारत्वकेत्यादिलक्षणोक्तदोषाणामित्यर्थः । तथाच निरुक्तरीत्या लक्षणार्थानिर्वचने यथाश्रुतदीधित्युक्तलक्षणे यादृशस्थले घटः पट-समानाधिकरणो धूमो वह्निसमानाधिकरण इति समूहालम्बनज्ञानाद् धूमधर्मिकव्याप्तिग्रहः तादृशस्थले निरुक्तव्याप्तिज्ञानजनकज्ञानविषयसह-चारत्वस्य पटसामानाधिकरण्येऽपि सत्त्वात्तत्र व्याप्तिघटकसहचारत्व-विरहात्। अस्मन्मते तु तादृशजनकीभूतज्ञाननिष्ठसहचारविषयितापदेन पटसामानाधिकरण्यविषयिताया उपादानेऽपि तत्र व्यतिरेकसहचार-विषयिताभिन्नत्वस्याक्षततया तादृशस्थलेऽपि लक्षणसमन्वयः सम्भवति। व्याप्तिज्ञानजनकतावच्छेदकसहचारत्वव्यापकत्वस्य व्याप्तिघटकसह-चारत्वे विवक्षणे असदनुमानस्य लक्ष्यतामते गगनवान् धूमात् इत्यादौ भ्रमात्मकान्वयसहचारग्रहाधीनव्याप्तिग्रहविशेष्ये केवलान्वयिनि धूमे-ऽव्याप्तिप्रसङ्गः स्यात्, विषयितासम्बन्धेन व्याप्तिज्ञानजनकतावच्छेदक-सहचारत्वस्याप्रसिद्धत्वात्। न चाभावनिष्ठधूमसामानाधिकरण्यस्यैव तथात्वं सम्भवतीति वाच्यम्। तथा सत्यपि गगनवान् आत्मनः इत्यादि-स्थले तादृशजनकतावच्छेदकसहचारत्वस्याप्रसिद्ध्याऽव्याप्तेर्वज्रलेप-त्वात्। अतो निरुक्तरीत्या लक्षणार्थनिर्वचनान्नैकस्यापि दोषस्यावकाश इति भावः—इति दिक्।

शक्तिः

विरोधितावच्छेदकीभूतायां व्यतिरेकसहचारविषयिताभिन्नत्वसत्त्वेनाव्याप्तेरनव-काश इति तात्पर्य्यम् ।

दीधितिः

गृहीतव्याप्तिभेदाद्भेदे तु प्रकृतहेतुकप्रकृतसाध्यानुमिति-हेतुज्ञानविषयव्याप्तित्वव्यापकप्रकृतसाध्यान्वयव्याप्तित्वकत्वं

जागदीशी

अन्वयव्यतिरेकव्याप्त्योर्द्वयोरेव ज्ञानमनुमितिहेतुः, नतु व्यतिरेकसहचाराऽन्वयसहचाराभ्यामेव अन्वयव्याप्तिमवगत्यैवानुमितिरिति चिन्तामणिकृतां मतमालम्ब्याह गृहीतेति । प्रकृतेत्यादि—प्रकृ-

नारायणी

अन्वयव्याप्तिज्ञानस्येव व्यतिरेकव्याप्तिज्ञानस्याप्यनुमितिहेतुत्वं मणिकृत्सम्मतं यदा तु अन्वयव्याप्तिविशिष्टहेतुप्रकारकपक्षविशेष्यक-परामर्शादेवानुमितिस्तदा व्याप्तिज्ञानस्य केवलान्वयित्वम्, यदा केवलं व्यतिरेकव्याप्तिविशिष्टहेतुप्रकारकनिश्चयादनुमितिस्तदा तु व्याप्तिज्ञान-स्य केवलव्यतिरेक्यनुमानत्वम् । यदोभयपरामर्शादेवानुमितिस्तदा व्याप्तिज्ञानयोरेवान्वयव्यतिरेकित्वमिति मते सहचारभेदमन्तर्भाव्य पूर्वोक्त-लक्षणं न सङ्गच्छते, अतो निरुक्तमतमवलम्ब्य दीधितिकृदुक्तं केवलान्वय-नुमालक्षणमवतारयति अन्वयेति हेतुव्यापकसाध्यसामानाधिकरण्य-साध्याभावव्यापकहेत्वभावप्रतियोगित्वरूपान्वयव्यतिरेकव्याप्त्योरित्यर्थः, द्वयोरेवेत्यत्र एवकारेणान्वयमात्रव्याप्तिज्ञानस्यानुमितिहेतुत्वव्यव-च्छेदः । ज्ञानं निश्चयः, तेन व्याप्तिसंशयादनुमित्यनुत्पादेऽपि न क्षतिः । अनुमितीति प्रकृतसाध्यकेत्यादिः । व्यतिरेकेति व्यतिरेकसहचारान्वय-सहचारज्ञानाभ्यामेवेत्यर्थः । अन्वयेति केवलेत्यादिः चिन्तामणिकृतां लक्षणव्याख्यानावसरे मतान्तरमवलम्ब्य लक्षणाभिधानमयुक्तमित्या-शयेनाह चिन्तामणिकृतामिति । तथाच तदीयटीकाकारस्य तन्मतसिद्ध-लक्षणाभिधानस्य युक्तियुक्ततया निरुक्तलक्षणं तन्मतमवलम्ब्य दीधिति-कृताऽभिहितमिति भावः ।

जागदीशी

त्वहेतुप्रकारकनिश्चयोत्तरप्रकृतसाध्यकानुमितित्वघटितधर्मावच्छिन्न-
स्वनिष्ठकार्य्यतानिरूपितकारणतावच्छेदकीभूतप्रकारितात्वव्यापकप्र-

नारायणी

प्रकृतव्याप्तिविशिष्टेत्यादिः। तेन केवलहेतुप्रकारकनिश्चयस्यानुमित्य-जनकत्वेऽपि न क्षतिः, तथाच प्रकृतसाध्यनिरूपितव्याप्तिविशिष्टहेतुतावच्छेदकावच्छिन्नप्रकारताकपक्षविशेष्यकनिश्चयोत्तरोत्पन्नप्रकृतसाध्यकविधेयताकानुमितित्वघटितधर्मावच्छिन्नस्वनिष्ठकार्य्यतानिरूपितकारणतावच्छेदकीभूतप्रकारितात्वव्यापकप्रकृतसाध्यान्वयव्याप्तित्वावच्छिन्न-प्रकारितात्वकं यत्स्वमनुमितिः तत्करणत्वं केवलान्वय्यनुमानत्वमित्यर्थः पर्यवसितः। भवति हि धूमव्यापकवह्निसमानाधिकरणधूमवान् पर्वत इत्याकारकनिश्चयादेवानुमितिः तत्र व्याप्तिज्ञानादौ लक्षणसमन्वयः, तादृशानुमितिनिष्ठकार्य्यतानिरूपितकारणतावच्छेदकप्रकारितात्वस्य वह्न्यन्वयव्याप्तिप्रकारितायामेव सत्त्वात् तत्र साध्यीभूतवह्न्यन्वयव्याप्तिप्रकारितात्वस्याक्षततया तादृशव्याप्तिप्रकारितात्वव्यापकसाध्यान्वयव्याप्तिप्रकारितात्वं निर्विवादमिति तादृशव्याप्तिप्रकारितात्वव्यापकसाध्यान्वयव्याप्तिप्रकारितात्वकानुमितिकरणत्वस्य निरुक्तव्याप्तिज्ञाने सत्त्वात्। नच तादृशानुमितिनिष्ठकार्य्यतानिरूपितकारणतावच्छेदक-

शक्तिः

अथ तथापि यत्र व्यतिरेकसहचारभ्रमो न प्रसिद्धस्तत्र केवलान्वयिन्यव्याप्तिरिति चेन्न, तादृशावगाहितात्वव्यापकसाध्यतावच्छेदकवत्त्वाभावः इत्यर्थकत्वेनाव्याप्त्यसम्भवात्। तद्वत्त्वञ्च स्वावच्छिन्नप्रतियोगित्वसम्बन्धावच्छिन्नविषयतानिरूपिताभावत्वावच्छिन्नविशेष्यतानिरूपितत्व-स्वकालीनहेतुतावच्छेदकावच्छिन्नप्रतियोगित्वसम्बन्धावच्छिन्नविषयतानिरूपिताभावविषयतानिरूपिताधिकरणविषयतानिरूपित-वृत्तितात्वावच्छिन्नविषयतानिरूपितत्वोभयसम्बन्धेन इत्यास्तां विस्तरः।

## नारायणी

प्रकारितात्वस्य हेतुप्रकारितायां साध्यतावच्छेदकादिप्रकारितायामपि सत्त्वात् तत्र साध्यान्वयव्याप्तिप्रकारितात्वविरहेणासम्भव इति वाच्यम्, स्वनिष्ठकार्यतानिरूपितकारणतावच्छेदकप्रकारितापदेन हेतुविशेष्यितावच्छिन्नतादृशप्रकारिताया विवक्षितत्वात् तादृशप्रकारितात्वस्य च व्याप्तिप्रकारितायामेव सत्त्वात्। उभयव्याप्तिविशिष्टहेतुप्रकारकनिश्चयजन्यानुमितिकरणेऽन्वयव्यतिरेकिण्यतिव्याप्तिवारणाय तादृशप्रकारितात्वसामानाधिकरण्यमन्वयव्याप्तिप्रकारितात्वेऽनिवेश्य तादृशप्रकारितात्वव्यापकत्वं तत्र विवक्षितम्। केवलव्यतिरेकव्याप्तिविशिष्टहेतुप्रकारकनिश्चयजन्यानुमितिकरणेऽतिव्याप्तिशङ्का तु नास्त्येव, तादृशानुमितिकारणतावच्छेदकप्रकारितात्वस्य व्यतिरेकव्याप्तिप्रकारितामात्रनिष्ठतया तत्र साध्यान्वयव्याप्तिप्रकारितत्वस्यासत्त्वात् इति त्वधिकमन्यत्रानुसन्धेयम्।

## शक्तिः

प्रकृतहेतुप्रकारकनिश्चयेत्यादि। अस्यानुगमस्तु अनुमितिविशिष्टानुमितिकरणत्वं केवलान्वयित्वमित्याकारकः। वै० स्वतादात्म्यस्वविशिष्टकार्यतानिरूपितकारणतावच्छेदकीभूतप्रकारतात्वव्यापकप्रकृतसाध्यान्वयव्याप्तिप्रकारितात्वकालीनत्वोभयसम्बन्धेन। सामान्यघटक स्व वै० कार्यतायां स्वकालीनप्रकृतहेतुप्रकारकनिश्चयोत्तरप्रकृतसाध्यविधेयकानुमितित्वघटितधर्मावच्छिन्नत्व-स्वनिष्ठत्वोभयसम्बन्धेन वह्निव्याप्यधूमवान् वह्निव्यतिरेकव्याप्तिविशिष्टालोकवांश्च पर्वतः इत्याकारकसमूहालम्बनपरामर्शाज्जायमानानुमितिकरणस्य धूमहेतुककेवलान्वयितया तत्राव्याप्तिः, वह्न्यभावव्यापकाभावप्रतियोग्यालोकवान् पर्वत इत्याकारकनिश्चयोत्तरवह्निविधेयकानुमितेरपि प्रकृतसाध्यविधेयकानुमितिपदेन धर्तुं शक्यतया तन्निष्ठकार्यतानिरूपितकारणतावच्छेदकव्यतिरेकव्याप्तिप्रकारितायां वह्निसाध्यकधूमहेतुकान्वयव्याप्तिप्रकारितात्वविरहात्, अतः प्रकृतहेतुप्रकारकनिश्चयेति। तथाच यद्धेतुककेवलान्वयित्वं तद्धेतुप्रकारकनिश्चयोत्तरत्वेन तादृशकार्यतायाः प्रवेशान्न दोष इति ध्येयम्।

जागदीशी

कृतसाध्यान्वयव्याप्तिप्रकारितात्वकानुमितिकरणत्वमित्यर्थः । तेनोभयसाधारणस्य एकस्य व्याप्तित्वस्य असत्त्वेऽपि न क्षतिः, न वा द्रव्यं सत्त्वात् इत्यादौ अखण्डव्याप्तेरप्रसिद्ध्या तादृशकेवलान्वय्यनुमानेऽव्याप्तिः । व्याप्तिघटकपदार्थानां परस्परोपश्लेषेण प्रका-

नारायणी

**तेनवेति** हेतुप्रकारकनिश्चयोत्तरेत्यादिना तादृशकारणतावच्छेदकप्रकारितात्वस्य विवक्षणेनेत्यर्थः । उभयसाधारणस्य=अन्वयव्याप्तौ व्यतिरेकव्याप्तौ च वर्त्तमानस्य । **एकस्येत्यादि** व्याप्तित्वस्य जातित्वाभावेन तत्र एकत्वं दुर्लभमिति हृदयम् । यथाश्रुतप्रकृतानुमित्यौपयिकव्याप्तित्वव्यापक-इत्यादिग्रन्थस्तु न सङ्गच्छते, अखण्डव्याप्तेरप्रसिद्ध्या उभयसाधारणस्यैकस्य व्याप्तित्वस्यासम्भवे चेत्याशयेनाह **नवेति** असदनुमानस्य लक्ष्यत्वमभिप्रेत्याह द्रव्यं सत्त्वादिति अखण्डव्याप्तेः=सत्त्वाधिकरणवृत्त्यभावप्रतियोगितावनच्छेदकत्वविशिष्टद्रव्यत्वत्वाव -च्छिन्नसामानाधिकरण्यरूपाया व्याप्तेः । **अप्रसिद्धेरिति** तादृशप्रतियोगितानवच्छेदकत्वस्य द्रव्यत्वत्वेऽप्रसिद्ध्या इत्यर्थः । **तादृशेति** तत्स्थलीयव्याप्तिज्ञानादिरूपकेवलान्वय्यनुमाने इत्यर्थः । **अव्याप्तिरिति** नवेति पूर्वेण सम्बन्धः । तथाच हेतुप्रकारकनिश्चयेत्यादिना लक्षणार्थनिर्वचने निरुक्तासदनुमानस्य लक्ष्यत्वेऽपि न तत्स्थलीयकेवलान्वय्यनुमानेऽव्याप्तिः, द्रव्यत्वसाध्यकानुमितिजनकतावच्छेदकभ्रमीयप्रकारितात्वस्यान्वयव्याप्तिप्रकारितायां सत्त्वात् सत्तासमानाधिकरणाभावप्रतियोगितानवच्छेदकत्वस्य जातित्वादिनिष्ठस्य द्रव्यत्वत्वादौ भ्रमसम्भवादिति तात्पर्य्यम् । **व्याप्तिघटकानामिति** निरुक्तस्थलीयान्वयव्याप्तिघटकानामित्यर्थः । परस्परोपश्लेषेण=निरूप्यनिरूपकभावापन्नत्वेन तत्र=निरु-

नारायणी

त्तत्स्थलीयान्वयव्याप्तौ। अनपायात् सत्त्वात्। नचासदनुमानस्य लक्ष्यत्वाभावे नायं दोष इति वाच्यम्, तथाप्युभयसाधारणस्यैकस्य व्याप्तित्वस्यासम्भवादसम्भवापत्तेः। न च तथाप्यनुमित्यौपयिकान्यतरव्याप्तित्वव्यापकसाध्यान्वयव्याप्तित्वनिवेशान्न कोऽपि दोष इति वाच्यम्, वाच्यं ज्ञेयत्वादित्यादौ तथाप्यन्यतरघटकसाध्याभावव्यापकहेत्वभावप्रतियोगित्वरूपव्यतिरेकव्याप्तेरप्रसिद्ध्याऽन्यतराप्रसिद्ध्यैव तत्स्थलीयकेवलान्वयिन्यव्याप्त्यापत्तेः (लक्षणानुगमस्तु अनुमितिविशिष्टानुमितिकरणत्वं केवलान्वय्यनुमानत्वम्, वै० स्वतादात्म्य-स्वकालीनप्रकृतहेतुप्रकारकनिश्चयोत्तरप्रकृतसाध्यविधेयकानुमितित्वघटितधर्मावच्छिन्नत्वस्वनिष्ठत्वोभयसम्बन्धेन स्वविशिष्टकार्य्यतानिरूपितकारणातावच्छेदकप्रकारितात्वव्यापकप्रकृतसाध्यान्वयव्याप्तिप्रकारितात्वकालीनत्वोभयसंबन्धनेति श्रीभट्टाचार्य्यचरणाः। इति दिक्।)

शक्तिः

ननु प्रकृतहेतुप्रकारकनिश्चयेत्यत्र प्रकृतेति व्यर्थमिति चेन्न प्रकृतपदोपादानाद् यद्धेतुककेवलान्वयित्वं तद्धेतुतावच्छेदकपर्य्याप्तावच्छेदकताकप्रकारताशालिनिश्चयोत्तरत्ववह्निसाध्यकत्व-अनुमितित्वधर्मत्रयावच्छिन्नस्वनिष्ठकार्यतानिरूपितकारणतावच्छेदकप्रकारितात्वव्यापकत्वस्य साध्यान्वयव्याप्तिप्रकारितात्वे लाभसम्भवः, तेन वह्न्यन्वयव्याप्तिविशिष्टधूमवान् वह्निव्यतिरेकव्याप्तिविशिष्टतद्धूमवांश्च पर्वतः इत्याकारकसमूहालम्बनपरामर्शोत्तरजायमानानुमितिमादाय धूमहेतुककेवलान्वयिनि नाव्याप्तिः।

ननु प्रकृतहेतुप्रकारकत्वनिष्ठावच्छेदकतानिरूपितधर्मिनिष्ठावच्छेदकतानिरूपिताव्यवहितोत्तरत्वनिष्ठावच्छेदकतानिरूपितसाध्यविधेयकत्वनिष्ठावच्छेदकतानिरूपितत्वमेव जन्यतायां वाच्यम्, निश्चयत्वनिष्ठावच्छेदकतानिरूपितत्वनिवेशनं किमर्थमिति चेन्न, धूमवत्कालीनेन्धनहेतुकव्यतिरेकव्याप्तिज्ञानं धूमहेतुकान्वयव्याप्तिज्ञानञ्च यत्रोत्पन्नं ततो वन्ह्यनुमितिः तत्र धूमहेतुककेवलान्वयिन्यव्याप्तिः। धूमवत्पर्वतकालीनेन्धनरूपहेतुमत्तानिश्चयोत्तरानुमितित्वावच्छिन्न-

जागदीशी

रितायास्तत्र अनपायादिति ध्येयम्। अत्र च स्वपदमनुमितिपरम्। तज्जनकत्वमिह स्वरूपयोग्यतामात्रं; न तु फलोपहितं ग्राह्यं, वैयर्थ्यात्। स्वपदेन अन्वयव्याप्तिज्ञानस्थलीयानुमितिव्यक्तीनामेव धृतत्वेन व्यतिरेकपरामर्शमादाय असम्भवायोगादिति ध्येयम्।

नारायणी

अत्रेति निरुक्तलक्षणे चेत्यर्थः। स्वपदार्थोन्वयिघटकत्वं सप्तम्यर्थः। अनुमितिपरम्=अनुमितिबोधेच्छयोच्चरितम्, तज्जनकत्वम्=अनुमितिजनकत्वम्। इह=एतल्लक्षणे। स्वरूपयोग्यतामात्रम्=अनुमितिसमवायिनिष्ठात्यन्ताभावप्रतियोगितानवच्छेदकधर्मवत्त्वमात्रम्। मात्रपदव्यवच्छेद्यमाह नत्विति। फलोपहितं ग्राह्यम्=अव्यवहितपूर्वत्वसम्बन्धेनानुमितिविशिष्टं ग्राह्यम्। वैयर्थ्यादिति। प्रयोजनाभावादित्यर्थः। नन्वेवमनुमितिस्वरूपयोग्यत्वमात्रनिवेशोऽसम्भवः, यदा कदाचिद् व्यतिरेकपरामर्शादिनाऽन्वयपरामर्शस्थलीयानुमितेरपि जननात्तादृशानुमितिसमवायिवृत्त्यभावीयप्रतियोगितानवच्छेदकधर्मवत्त्वरूपयोग्यताया व्यतिरेकपरामर्शनिष्ठाया अवच्छेदकत्वस्य व्यतिरेकव्याप्तिप्रकारितायामपि सत्त्वात् तत्र साध्यान्वयव्याप्तिप्रकारितात्वविरहादत आह स्वपदेनेति निरुक्तलक्षणघटकीभूतेनेत्यादिः। अन्वयेति अन्वयपरामर्शोत्तरजायमानतत्तदनुमितिव्यक्तीनामेवेत्यर्थः। व्यतिरेकेति साध्याभावव्यापकाभावप्रतियोगिहेतुमान् पक्ष इत्याकारकपरामर्शमादायेत्यर्थः। असम्भवायोगादिति। तथा चान्वयपरामर्शाव्यवहितोत्तरजायमानतद्व्यक्तिसमवायिनि व्यतिरेकपरामर्शाभावस्य वर्त्तमानतया व्यतिरेकपरामर्शत्वस्य तदनुमितिव्यक्तिसमवायिनिष्ठाभावप्रतियोगितानवच्छेदकत्वासम्भवान्न व्यतिरेकपरामर्शमादाय तदनुमितिव्यक्तिस्वरूपयोग्यत्वनिवेशोऽप्यसम्भवः शङ्कनीय इति भावः॥

नारायणी

हेतुतावच्छेदकतापर्य्याप्त्यधिकरणधर्मावच्छिन्नार्थकप्रकृतपदव्यावृत्तिमाह अत्रेति निरुक्तलक्षणे चेत्यर्थः। तथाच हेतौ प्रकृतत्वानिवेशे वह्न्यभावव्यापकाभावप्रतियोगितद्धूमवान् पर्वतः। धूमव्यापकवह्निसमानाधिकरणधूमवाँश्च पर्वत इत्याकारकसमूहालम्बनपरामर्शात्परामर्शद्वयाद् वा वह्निसाध्यकानुमितिर्यदात्र जनिता तदा तादृशस्थले धूमत्वावच्छिन्नहेतुकवह्न्यन्वयव्याप्तिज्ञानस्य केवलान्वय्यनुमानतया तत्राव्याप्तिः स्यात्, हेतुनिष्ठप्रकारताकनिश्चयपदेन व्यतिरेकव्याप्तिविशिष्टतद्धर्मनिश्चयस्यापि धर्त्तुं शक्यतया तदुत्तरप्रकृतसाध्यकानुमितिजनकतावच्छेदकप्रकारितात्वस्य व्यतिरेकव्याप्तिप्रकारितायामपि सत्त्वात् तत्र वह्न्यन्वयव्याप्तिप्रकारितात्वविरहात्। प्रकृतपदप्रवेशे तु यद्धेतुककेव-

शक्तिः

जन्यतायामपि धूमरूपहेतुप्रकारकत्वनिष्ठावच्छेदकतानिरूपितत्वस्य सत्त्वात्तादृशजन्यतानिरूपितजनकतावच्छेदकप्रकारितात्वस्य व्यतिरेकव्याप्तिप्रकारितायां वर्त्तमानतया तत्र प्रकृतसाध्यान्वयव्याप्तिप्रकारितात्वविरहात्, हेतुप्रकारकत्वनिष्ठावच्छेदकतानिरूपितनिश्चयनिष्ठावच्छेदकतानिरूपितत्वनिवेशे तु तादृशेन्धनहेतुकानुमितित्वावच्छिन्नजन्यतायां धूमप्रकारकत्वनिष्ठावच्छेदकतानिरूपितत्वविरहाद् विशेषणांशे संशयास्वीकारेण तादृशेन्धनरूपहेतुघटकधूमप्रकारकत्वनिष्ठावच्छेदकतायां निश्चयित्वनिष्ठावच्छेदकतानिरूपितत्वस्य वक्तव्यत्वात् तादृशजन्यत्वस्य धर्त्तुमशक्यत्वादिति विभावनीयम्।

अथात्र लक्षणेऽनुमितिपदं किमर्थमिति तु नाशङ्कनीयम्। अनुमितिपदविरहे नः वह्निमान् आतः इत्यादिस्थलीयकेवलान्वयिन्यव्याप्त्यापत्तेः, वह्निव्याप्य आवान् न इति निश्चयोत्तरसाध्यविधेयकत्वावच्छिन्ना या न वह्निमानितिशाब्दत्वावच्छिन्ना जन्यता तादृशशाब्दत्वावच्छिन्नम्प्रति तादृशानुपूर्वीघटितवर्णसमुदायत्वेन कारणत्वात्तादृशनिश्चयाव्यवहितोत्तरत्वेन च व्यभिचारवारणाय शाब्दस्यविशेषणीयतयेति तादृशजन्यतानिरूपितजनकतावच्छेदकानुपूर्व्यादिप्रकारताया-साध्यान्वयव्याप्तिप्रकारतात्वस्यासत्त्वात् इति। छन्न-

नारायणी

लान्वयित्वं तद्धेतुतावच्छेदकपर्य्याप्तावच्छेदकताकप्रकारताशालिनिश्चयत्तोरत्व-वह्निसाध्यकत्व-अनुमितित्व-धर्मत्रयावच्छिन्नस्वनिष्ठकार्य्यतानिरूपित-कारणतावच्छेदकप्रकारितात्वव्यापकत्वस्य साध्यान्वयव्याप्तिप्रकारितात्वे लाभेन तादृशधर्मत्रयावच्छिन्नकार्य्यतानिरूपितान्वयपरामर्शत्वावच्छिन्नकारणतावच्छेदकप्रकारितात्वस्यान्वयव्याप्तिप्रकारितायां सत्त्वेन तद्व्यापकत्वस्य साध्यान्वयव्याप्तिप्रकारितात्वेऽक्षततया नाव्याप्तिः। निरुक्तसमूहालम्बनपरामर्शात् परामर्शद्वयाद् वाऽव्यवहितोत्तरनिरुक्तानुमितेरन्वयपरामर्शाव्यवहितोत्तरानुमितिव्यक्तिरूपतया स्वपदेनान्वयव्याप्तिज्ञानस्थलीयानुमितिव्यक्तीनां लक्षणघटकत्वेऽपि न ततो वारणसम्भव इति न प्रकृतपदवैयर्थ्यम्, दूषणगणग्रासात्स्वपदेनान्वयव्याप्तिमात्रावगाहिज्ञानस्थलीयानुमितिव्यक्तीनां संग्रह इति त्वतीवोपेक्ष्यम्, तद्धूमत्वेनेत्यत्र तृतीयार्थोऽवच्छिन्नत्वं वैशिष्ट्यमिति यावत्। तथाच तद्धूमत्वविशिष्टधूमहेतुकव्यतिरेकव्याप्तिज्ञानात्मककेवलव्यतिरेक्यनुमानस्येत्यर्थः पर्य्यवसितः। धूमत्वेनेत्यादि। अत्रापि तृतीयार्थो वैशिष्ट्यम्, एवञ्च धूमत्वविशिष्टधूमहेतुकान्वयव्याप्तिज्ञानस्यैव केवलान्वयिताया इष्टत्वादित्यर्थः। तत्र = केवलान्वय्यनुमाने। अव्याप्तौ हेतुमाह

शक्तिः

केचित्तु वह्निव्याप्तिमान् वह्निसामानाधिकरण्यादित्यादावनुमितिपदानुपादाने केवलान्वयिन्यव्याप्तिः, वह्निसामानाधिकरण्यरूपहेतुप्रकारकनिश्चयोत्तरजायमाना या वह्निव्याप्तिज्ञानरूपा तन्निष्ठकार्यतानिरूपितकारणतावच्छेदकवह्निसामानाधिकरण्यत्वावच्छिन्नप्रकारितायां वह्निव्याप्तिरूपसाध्यान्वयव्याप्तिप्रकारितात्वाभावात्, अतोऽनुमितिपदमित्याहुः।

अपरेतु आपत्तिकरणेऽतिव्याप्तिवारणायानुमितिपदमित्यपि वदन्ति। नन्वत्र लक्षणे प्रकृतहेतुप्रकारकनिश्चयोत्तरप्रकृतसाध्यविधेयकानुमितित्वघटितधर्मावच्छि-

जागदीशी

व्यापकत्वोपादानादन्वयव्यतिरेकिव्युदासः। अत्र वह्नौ साध्ये तद्धूमत्वेन धूमहेतुकव्यतिरेकिण एव धूमत्वेन धूमहेतुककेवलान्वयित्वात् तत्राव्याप्तिः, वह्निसाध्यकधूमव्यक्तिहेतुकानुमित्यौपयिक-

नारायणी

वह्निसाध्यकेति प्रकृतवह्निसाध्यकतद्धूमव्यक्तिहेतुकानुमितिजनकतावच्छेदकव्यतिरेकव्याप्तिप्रकारितायामित्यर्थः। वह्निसाध्यकेति वह्नित्वावच्छिन्नसाध्यकान्वयव्याप्तिप्रकारितात्वाभावादित्यर्थः। अतः=निरु-

शक्तिः

न्नस्वनिष्ठकार्यतावच्छेदकप्रकारितात्वव्यापकेत्युक्तावेव सामञ्जस्ये तादृशकार्य्यतानिरूपितकारणतावच्छेदकप्रकारितापर्य्यन्तनिवेशनमनर्थकम्। न च साध्यविधेयताया अपि तादृशकार्य्यतावच्छेदकतया तत्र व्याप्तिप्रकारितात्वाभावादसम्भव इति वाच्यम्, स्वनिष्ठकार्य्यतानिरूपितज्ञाननिष्ठावच्छेदकतानिरूपितावच्छेदकतावत्प्रकारितात्वव्यापकत्वस्य निवेशनीयत्वादेवासम्भवासम्भवादिति चेन्न, साक्षात्परम्परासाधारणावच्छेदकत्वानङ्गीकारादसम्भवापत्तेः,व्याप्तिप्रकारितायाः तादृशजन्यज्ञाननिष्ठावच्छेदकतानवच्छेदकतया तादृशावच्छेदकं यद्धेतुप्रकारित्वं तत्र व्याप्तिप्रकारितात्वविरहात्।

अथ वन्ह्यन्वयव्याप्तिविशिष्टधूमवत्त्वनिश्चयस्य धूमत्वव्याप्त्युभयपर्याप्तावच्छेदकताकप्रकारताशालिनिश्चयत्वेनैव कारणतया धूमत्वपर्याप्तावच्छेदकताकप्रकारताशालिनिश्चयाव्यवहितोत्तरवन्हिसाध्यकानुमितित्वघटितधर्मावच्छिन्नकार्य्यत्वाप्रसिद्धिरिति चेन्न, किञ्चिद्धर्मावच्छिन्नप्रकारतानिरूपितहेतुतावच्छेदकपर्याप्तावच्छेदकताकविशेष्यत्वाभिन्नप्रकारतायाः कारणतावच्छेदकघटकतया निवेशनीयत्वात्। नचैवं व्यतिरेकव्याप्तिविशिष्टतद्धूमवत्त्वनिश्चयकार्य्यताया अपि तथात्वात्तद्धूमहेतुकव्यतिरेकितादशायां धूमहेतुककेवलान्वयिन्यव्याप्तिरिति वाच्यम्,

जागदीशी

व्यतिरेकव्याप्तेः वह्निसाधकान्वयव्याप्तित्वाभावात्, अतो हेतौ प्रकृतपदं हेतुतावच्छेदकावच्छिन्नार्थकम्। तथा च तद्धूमत्वावच्छिन्नव्यतिरेकव्याप्तेर्धूमत्वावच्छिन्नप्रकारकनिश्चयोत्तरानुमितित्व-घटितधर्मावच्छिन्नं प्रति अनुकूलत्वविरहात् नाव्याप्तिः। साध्यांशे

नारायणी

क्ताव्याप्तिवारणतः हेतौविति लक्षणघटकीभूतेत्यादिः। प्रकृतत्वनिवेशे कथन्नाव्याप्तिरित्यशङ्कायामाह – तथाचेति हेतौ प्रकृतत्वनिवेशे चेत्यर्थः। तद्धूमत्वावच्छिन्नेति तद्धूमत्वावच्छिन्ननिष्ठवह्न्यभावव्यापकाभा-वप्रतियोगित्वरूपव्यतिरेकव्याप्तिप्रकारिताया इत्यर्थः। धूमत्वेति धूमत्वा-वच्छिन्नव्यापकवह्निसमानाधिकरणधूमत्वावच्छिन्नप्रकारकनिश्चयोत्तर-जायमानवह्निविधेयताकानुमितित्वावच्छिन्नं प्रति इत्यर्थः। अनुकूलत्ववि-रहात् = जनकतावच्छेदकत्वविरहात्। नाव्याप्तिरिति अन्वयपराम-

शक्तिः

अन्वयव्याप्तिविषयताभिन्ना सती या विषयता तदनिरूपकहेतुप्रकारताशालिनिश्च-योत्तरतादृशकार्य्यताया: प्रवेशनीयत्वात्। तथाच तादृशविषयताभिन्नतत्तन्निष्ठ-विषयतानिरूपितधूमप्रकारताशालिनिश्चयोत्तरानुमितित्वेनैवावच्छेद्यतया तादृश-कार्य्यताया लक्षणघटकत्वान्नाव्याप्तिरिति ध्येयम्।

ननु परामर्शानुमित्योः कार्यकारणभावे स्वाधिकरणसमयध्वंसाधिकरणसमय-ध्वंसानधिकरणत्वे सति स्वाधिकरणसमयध्वंसाधिकरणत्वरूपाव्यवहितोत्तरत्वस्य धर्मविधया कार्यतावच्छेदककोटौ प्रवेशे गौरवात् सामान्यतो विशेषासम्भवाच्च संसर्गविधयैवाव्यवहितोत्तरत्वं निवेशनीयम्, तथाहि प्रकृतहेतुप्रकारकनिश्चयवि-शिष्टप्रकृतसाध्यविधेयकानुमितित्वघटितधर्मावच्छिन्नकार्यतेत्यादिरीत्या लक्षणार्थो वक्तव्यः। वै० अव्यवहितोत्तरत्वसम्बन्धेन, एवं सति यादृशस्थले वह्न्यन्वयव्याप्ति-

नारायणी

शोत्तरजायमनतदनुमितिव्यक्तिनिष्ठकार्य्यतानिरूपितकारणतावच्छेदक-प्रकारितात्वस्यान्वयव्याप्तिप्रकारितायामेव वर्त्तमानतया तत्र साध्यान्वयव्याप्तिप्रकारितात्वस्य सत्त्वात् हेतौ प्रकृतत्वनिवेशे केवलान्वयिनि कथमपि नाव्याप्तिः सम्भवतीति हृदयम्।

शक्तिः

विशिष्टधूमवान् वह्निव्यतिरेकव्याप्तिविशिष्टतद्धूमवांश्च पर्वतः इत्याकारकसमूहालम्बनपरामर्शाद्वह्न्यनुमितिर्जनिता तादृशस्थले धूमहेतुककेवलान्वयिन्यव्याप्तिदुर्वारैव, व्यतिरेकपरामर्शविशिष्टवह्निविधेयकानुमितित्वस्यापि प्रकृतहेतुप्रकारकनिश्चयविशिष्टप्रकृतसाध्यविधेयकानुमितित्वघटिततया तदवच्छिन्नकार्यताया अपि विरुक्तसमूहालम्बनात्मकप्रकृतहेतुप्रकारकनिश्चयविशिष्टप्रकृतसाध्यकानुमितित्वावच्छिन्नत्वात् तादृशकार्यतानिरूपितकारणतावच्छेदकीभूतव्यतिरेकव्याप्तिप्रकारितायां प्रकृतसाध्यान्वयव्याप्तिप्रकारितात्वाभावादिति चेन्न, तादृशकार्य्यतापदेन प्रकृतहेतुप्रकारकनिश्चयत्वावच्छिन्ननिश्चयनिष्ठाव्यवहितोत्तरत्वसम्बन्धावच्छिन्नावच्छेदकताकप्रकृतसाध्यकानुमितित्वावच्छिन्नकार्य्यतायाः विवक्षितत्वात् निश्चयत्वं तु प्रकृतहेतुतावच्छेदकावच्छिन्नप्रकारताभिन्नप्रकारत्वानिरूपितविशेष्यताकज्ञानत्वम्। तथा चोक्तसमूहालम्बनात्मकनिश्चयनिष्ठा कार्यतावच्छेदकताद्वयी। एका धूमत्वावच्छिन्नप्रकारत्वान्यप्रकारत्वानिरूपितविशेष्यत्वनिष्ठानिरूपकत्वसम्बन्धावच्छिन्नावच्छेदकतानिरूपिताव्यवहितोत्तरत्वसम्बन्धावच्छिन्ना, अपरा च व्यतिरेकव्याप्तिविशिष्टतद्धूमत्त्वेत्यादिपूर्ववद्वाच्या। तथा च धूमत्वपर्य्याप्तावच्छेदकताकप्रकारत्वान्यप्रकारत्वानिरूपितविशेष्यतानिष्ठनिरूपकत्वसम्बन्धावच्छिन्नावच्छेदकताकाव्यवहितोत्तरत्वसम्बन्धावच्छिन्ननिश्चयनिष्ठावच्छेदकताकत्वविशिष्टप्रकृतसाध्यकानुमितित्वावच्छिन्नकार्य्यतानिरूपितकारणतावच्छेदकीभूतप्रकारितात्वस्य व्यतिरेकव्याप्तिप्रकारितायामसत्त्वान्नाव्याप्तिरिति ध्येयम्।

ननु तथापि परामर्शानुमित्योः कार्य्यकारणभावे धूमव्यापकवह्निसमानाधिकरणधूमादिमत्तानिश्चयत्वेन हेतुतया तादृशनिश्चयत्वस्य धूमव्यापकवह्निसमानाधिकरणधूमत्वावच्छिन्नप्रकारत्वान्यप्रकारत्वानिरूपितविशेष्यतात्मकतया निरुक्त

जागदीशी

प्रकृतपदव्यावृत्तिस्तु ग्रन्थकृतैव वक्ष्यते । न च यत्र हेतुतावच्छेदकवह्निर्भावेण वह्निमदन्यावृत्तिमान् पर्वत इति व्याप्तिज्ञानादेवानुमितिः तादृशान्वयिनि अव्याप्तिरिति वाच्यम्, व्यापकसामाना-

नारायणी

ननु साध्ये प्रकृतपदस्य का व्यावृत्तिरित्यत आह साध्यांशे इति । साध्यविशेषणवाचकप्रकृतपदव्यावृत्तिरित्यर्थः । ग्रन्थकृतैव = दीधितिकृतैव ।

शङ्कते नचेति वाच्यमिति परेणान्वयः यत्र = यादृशस्थले । हेतुतेति हेतुतावच्छेदके व्याप्तिधर्मितावच्छेदकत्वं विहायेत्यर्थः । नन्वेवं हेतुतावच्छेदकवह्निर्भावेण कीदृशः परामर्शोऽनुमितिजनकः इत्यत आह वह्नीति । वह्निमदन्योन्याभावाधिकरणावृत्तिमान् पर्वत इत्यर्थः। इति व्याप्तिज्ञानात् = इत्याकारकव्याप्तिविशिष्टस्य परामर्शादेवेत्यर्थः । एवकाराद् वह्निमदन्यावृत्तिधूमादिमान् पर्वत इत्याकारकहेतुतावच्छेदकावच्छिन्नप्रकारकनिश्चयव्यवच्छेदः । अनुमितिरिति वह्निसाध्यकेत्यादिः, उत्पन्नेति शेषः। तादृशान्वयिनि = तादृशस्थले वह्निमदन्यावृत्तित्वरूपव्याप्तिज्ञानात्मककेवलान्वय्यनुमाने। अव्याप्तिरिति हेतुतावच्छेदकतापर्य्याप्त्यधिकरणधर्मावच्छिन्नहेतुप्रकारकनिश्चयस्यैवाप्रसिद्धत्वादिति हृदयम् । समाधत्ते स्वव्यापकेति स्वं प्रकृतहेतुः । तद्व्यापकं—तत्समानाधिकरणाभावप्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नप्रकृतहेतुनिष्ठसामानाधि-

शक्तिः

लक्षणघटकीभूतप्रकृतहेतुतावच्छेदकपर्याप्तावच्छेदकताकप्रकारत्वान्यप्रकारत्वानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यतावत्पक्षतावच्छेदकावच्छिन्नविशेष्यताविशिष्टहेतुप्रकारताया अपि विनिगमनाविरहेणानुमितिजनकतावच्छेदकतया व्यतिरेकव्याप्तिप्रकारितामादाय पूर्वोक्तस्थलेऽव्याप्तिरिति चेन्न, पक्षनिष्ठविशे-

जागदीशी

धिकरणयरूपान्वयव्याप्तिज्ञानस्यैव अन्वय्यनुमितिहेतुत्वमिति प्राचां मतेनैव लक्षणकरणात् । ननु प्रकृतहेतुप्रकारकनिश्चयोत्तरानुमि

नारायणी

करणयरूपान्वयव्याप्तिज्ञानस्यैवेत्यर्थः । एवकारात् साध्यवदन्यावृत्तित्वरूपान्वयव्याप्तिज्ञानस्यानुमितिहेतुत्वव्यवच्छेदः प्राचाम् = उदयनाचार्य्यप्रभृतीनाम् । लक्षणकरणादिति तथाच विशिष्टसत्त्वव्यापकद्रव्यत्वसमानाधिकरणसत्तावान् गुण इत्याकारकभ्रमात्मकपरामर्शाद् गुणादौ द्रव्यत्वसाध्यकानुमित्यापत्तिवारणाय प्रकृतहेतुव्यापकसाध्यसमानाधिकरणवृत्तिहेतुतावच्छेदकस्यैव व्याप्तिपदार्थतया तादृशव्याप्तिविशिष्टस्य पक्षे परामर्शदशायां हेतुतावच्छेदकावच्छिन्नप्रकारकनिश्चयसत्त्वस्यावश्यकतया एतल्लक्षणकर्त्तृमते केवलान्वयितादशायां प्रकृतहेतुप्रकारकनिश्चयासत्त्वस्य कथमप्यसम्भवात्केवलान्वयिनि तादृशनिश्चयाप्रसिद्ध्या अव्याप्तिर्नाशङ्कनीयेति तात्पर्य्यम् ॥

प्रकृतहेतुप्रकारकनिश्चयोत्तरप्रकृतसाध्यविधेयताकानुमितित्वघटितधर्मावच्छिन्नस्वनिष्ठकार्य्यतेत्यादिलक्षणेऽनुमितौ प्रकृतसाध्यविधेयकत्वानुपादाने केवलानुमितित्वघटितधर्मावच्छिन्नस्वनिष्ठकार्य्यतामात्रनिवेशे जलं निर्गन्धं पृथिवीत्वव्यापकाभावप्रतियोगिमत्त्वाद् इत्यादौ यदा पृथिवीत्वव्यापकाभावप्रतियोगिमत्त्वव्यापकनिर्गन्धत्वसमानाधिकरणपृथिवीत्वव्यापकाभावप्रतियोगिमज्जलम् इत्याकारकनिश्चयो वर्त्तते तदा तादृशनिर्गन्धत्वसाध्यककेवलान्वयिनि पृथिवीत्वव्यापकाभावप्रतियोगिमत्त्व-

शक्तिः

ष्यताविशिष्टहेतुतावच्छेदकपर्याप्तावच्छेदकताकप्रकारत्वनिष्ठनिरूपकत्वसम्बन्धावच्छिन्नावच्छेदकताकनिश्चयनिष्ठाव्यवहितोत्तरत्वसम्बन्धावच्छिन्नावच्छेदकताकप्रकृतसाध्यकानुमितित्वघटितधर्मावच्छिन्नस्वनिष्ठकार्य्यताया विवक्षितत्वात् ।

## नारायणी

व्यापकनिर्गन्धत्वसामानाधिकरण्यविशिष्टतादृशहेतुरूपव्याप्तिज्ञानादा- वव्याप्तिः, पृथिवीत्वव्यापकाभावप्रतियोगिमत्वव्यापकनिर्गन्धत्वसमानाधिकरणपृथिवीत्वव्यापकाभावप्रतियोगिमज्जलम्-इत्याकारकनिश्चयस्य पृथिवीत्वाभावव्यतिरेकव्याप्तिरूपपृथिवीत्वव्यापकाभावप्रतियोगित्ववि- शिष्टहेतुमत्तानिश्चयात्मकतया तादृशनिश्चयोत्तरानुमितिपदेन पृथिवीत्वाभावानुमितेरपि धर्त्तुं शक्यतया तज्जनकतावच्छेदकपृथिवीत्वव्यापकाभावप्रतियोगित्वरूपव्यतिरेकव्याप्तिप्रकारितायां निर्गन्धत्वरूपप्रकृतसाध्यान्वयव्याप्तिप्रकारितात्वविरहेण प्रकृतहेतुप्रकारकनिश्चयोत्तरानुमितिजनकतावच्छेदकप्रकारितात्वव्यापकत्वस्य प्रकृतसाध्यीभूतनिर्गन्धत्वान्वयव्याप्तिप्रकारितात्वेऽसत्त्वाद्, अतः हेतुप्रकारकनिश्चयोत्तरानुमितौ प्रकृतसाध्यकत्वनिवेशः, तथाच न तदानीं तादृशान्वयव्याप्तिज्ञानादिरूपकेवलान्वयिन्यव्याप्तिः,पृथिवीत्वव्यापकाभावप्रतियोगिमत्त्वव्यापकनिर्गन्धत्वसमानाधिकरणतादृशप्रतियोगिमज्जलम्-इत्याकारकप्रकृतहेतुप्रकारकनिश्चयोत्तरप्रकृतसाध्यविधेयताकानुमितित्वस्य निर्गन्धत्वसाध्यकानुमितावेव वर्त्तमानतया तदवच्छिन्नकार्य्यतानिरूपितकारणतावच्छेदकहेतुव्यापकसाध्यसामानाधिकरण्यरूपव्याप्तिप्रकारितायां निर्गन्धत्वान्वयव्याप्तिप्रकारितात्वस्याक्षतत्वात्-इत्येवं जलं निर्गन्धमित्यादिदीधितिग्रन्थमनुमितौ प्रकृतसाध्यकत्वव्यावृत्तिप्रदर्शनपरतयाऽवतारयति नन्वित्यादिति एव प्रवेश्यतामिति अत्र एवकारात्प्रकृतसाध्यविधेयताकत्वनिवेशव्यवच्छेदः।

## शक्तिः

तथाच निरुक्तकार्यतानिरूपितकारणतावच्छेदकप्रकारितात्वस्य तद्भूमहेतुकव्यतिरेकव्याप्तिप्रकारितायामसत्त्वान्नाव्याप्तिः, पक्षतावच्छेदकावच्छिन्नविशेष्यतावे० स्वनिरूपितप्रकारितानिष्ठभेदप्रतियोगित्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसम्बन्धेन ॥

दीधितिः

तत्त्वम् । जलं निर्गंधं पृथिवीत्वव्यापकाभावप्रतियोगिमत्त्वादित्यादौ हेतुतावच्छेदिका च व्याप्तिर्न प्रकृतसाध्यानुमित्यौ-

जागदीशी

तित्वघटितधर्मावच्छिन्नकार्य्यतैव प्रवेश्यतां प्रकृतसाध्यकत्वनिवेशो व्यर्थ इत्यत आह—जलं निर्गन्धमित्यादि । न प्रकृतेति । न निर्गन्धत्वानुमितित्वावच्छिन्नस्य प्रकारविधया कारणतावच्छेदिकेत्यर्थः । विषयपदेन तादृशौपयिकत्वस्य विवक्षितत्वादिति

नारायणी

न निर्गन्धत्वेति न निर्गन्धत्वरूपप्रकृतसाध्यविधेयताकानुमितित्वावच्छिन्नस्येत्यर्थः । प्रकारविधया = प्रकारितासम्बन्धेन । कारणतावच्छेदिकेति पृथिवीत्वव्यापकाभावप्रतियोगित्वरूपपृथिवीत्वाभावव्यतिरेकव्याप्तिरिति शेषः । विषयपदेन प्रकृतहेतुकप्रकृतसाध्यकानुमितिजनकज्ञानविषयपदेनेत्यर्थः । तादृशानिति प्रकृतहेतुप्रकारकनिश्चयोत्तरजायमानप्रकृतसाध्यविधेयताकत्वानुमितित्वधर्मद्वयावच्छिन्नस्वनिष्ठकार्य्यतानिरूपितकारणतायां प्रकारितासम्बन्धेनावच्छेदकत्वरूपौपयिकत्वस्येत्यर्थः ।

शक्तिः

ननु हेतुतावच्छेदकपक्षतावच्छेदकपदार्थीयप्रकारितानामपि तादृशानुमितिजनकतावच्छेदकत्वात्तत्रान्वयव्याप्तिप्रकारितात्वाभावादसम्भवः । पक्षविशेष्यतानिरूपितहेतुप्रकारत्वाभिन्नविशेष्यतानिरूपितनिरुक्तजनकतावच्छेदकप्रकारितात्वव्यापकत्वनिवेशे तु अभावपक्षकवह्निसाध्यकवृत्तित्वहेतुककेवलान्वयिन्यव्याप्तिः, हेत्वधिकरणत्वनिरूपितत्वप्रकारताया अपि तादृशजनकतावच्छेदकत्वात्

दीधितिः

पथिकी तद्विशिष्टपक्षधर्मताज्ञानेऽपि व्याप्त्यन्तरबोधं विना

जागदीशी

भावः । तदौपयिकत्वाभावमेव विवृणोति तद्विशिष्टेति । पृथिवीत्वव्यापकाभावप्रतियोगित्वरूपव्यतिरेकव्याप्तिविशिष्टेत्यर्थः। व्याप्त्यन्तरबोधमिति । पृथिवीत्वव्यापकाभावप्रतियोगिमत्त्वलक्षणहे-

नारायणी

तदौपयिकत्वेति निर्गन्धत्वसाध्यकानुमित्यौपयिकत्वाभावमेवेत्यर्थः।

दीधितौ-हेतुतावच्छेदकेति पृथिवीत्वव्यापकाभावप्रतियोगित्व-रूपेत्यर्थः। व्याप्तिरिति पृथिवीत्वाभावव्यतिरेकेत्यादि । तद्विशिष्टेति केवलपृथिवीत्वव्यापकाभावप्रतियोगिमज्जलमित्याकारकनिश्चयेऽपीत्यर्थः। व्याप्त्यन्तरेति निर्गन्धत्वान्वयव्याप्तिनिश्चयं विनेत्यर्थः। अव्याप्ति-विरहमेवोपपादयति टीकायां पृथिवीत्वेति निर्गन्धत्वव्याप्यपृथिवीत्व-व्यापकाभावप्रतियोगिमज्जलमित्याकारकनिश्चयोत्तरेत्यर्थकम् । तत्रा-व्याप्तेः=पृथिवीत्वव्यापकाभावप्रतियोगिमत्त्वहेतुकनिर्गन्धत्वसाध्यका-

शक्तिः

तत्रान्वयव्याप्तिप्रकारतात्वाभावात् । एवञ्चासम्भवतादवस्थ्यं स्यात् जलं विगन्ध-मित्यादिग्रन्थासङ्गतिश्च तत्र पृथिवीत्वाभावव्यतिरेकव्याप्तिविषयितायां हेतुताव-च्छेदकविषयितातिरिक्तत्वाभावादिति चेन्न, अन्वयव्याप्तिप्रकारितापदेन प्रकृत-साध्यान्वयव्याप्तिविशिष्टहेतुमत्पक्षवैशिष्ट्यावगाहिबुद्धित्वावच्छिन्नजन्यतानिरू-पितजनकतावच्छेदकप्रकारितात्वस्य विवक्षणान्न काऽप्यनुपपत्तिः, तादृशप्रकारि-तात्वस्य हेतुतावच्छेदकादिप्रकारितासाधारणत्वात् जलं निर्गन्धमित्यादौ साध्यान्व-यव्याप्तिविशिष्टहेतुमत्ताविश्चयात्मकपरामर्शाद् जलं विगन्धं पृथिवीत्वाभाववच्चे-

### जागदीशी

तुव्यापकनिर्गन्धत्वसामानाधिकरण्यरूपान्वयव्याप्तिबोधं विनेत्यर्थः। तथा च पृथिवीत्वव्यापकाभावप्रतियोगित्वनिश्चयोत्तरानुमितित्वघटितपृथिवीत्वाभावानुमितित्वावच्छिन्नस्य जनकतावच्छेदिकायां पृथिवीत्वव्यापकीभूताभावप्रतियोगित्वरूपायां पृथिवीत्वाभावीयव्यतिरेकव्याप्तौ स्वव्यापकनिर्गन्धत्वरूपप्रकृतसाध्यान्वयव्याप्तित्वाभावात् तत्राव्याप्तेर्वारणार्थमेव प्रकृतसाध्यकत्वस्य प्रवेश इति

### नारायणी

नुमितिजनकान्वयव्याप्तिज्ञानादिरूपकेवलान्वयिन्यव्याप्तेः । प्रवेश इति लक्षणघटकानुमिताविल्यादिः ।

### शक्तिः

त्यनुमितिर्जायते तत्र परामर्शे जलविशेषणतापन्नप्रतियोगित्वे सामानाधिकरण्यप्रकारतानिरूपितविशेष्यतावच्छेदकता पक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितप्रकारतावच्छेदकता चेति विशेष्यताद्वयी निर्गन्धत्वानुमितिजनकतावच्छेदिकातयोरन्या प्रतियोगित्वप्रकारिता सा च निर्गन्धत्वानुमितौ पृथिवीत्वाभावानुमितौच जनकतावच्छेदिकेति साध्यविधेयकानुमितौ जनकतावच्छेदकतया साऽपि धर्तुं शक्यते, तस्याञ्च निरुक्तप्रकृतसाध्यान्वयव्याप्तिप्रकारितात्वाभावाद् भवत्यव्याप्तिरिति यदि साध्ये प्रकृतत्वोपादानं न स्यादिति जलं निर्गन्धमित्यादि-ग्रन्थसङ्गतिः।

अथ निरुक्तपृथित्वाभावानुमितौ पृथिवीत्वव्यापकाभावप्रतियोगित्वावच्छिन्नप्रकारकनिश्चयत्वेनैव हेतुत्वात्कथं तादृशप्रतियोगित्वप्रकारितामादाय दोषः इति चेन्न, पृथिवीत्वव्यापकाभावप्रतियोगित्वरूपव्याप्तेर्विशेष्ये विशेषणमिति रीत्या भानेऽप्यनुमितिस्वीकारात् निरुक्तप्रकारतानिरूपितपक्षविशेष्यताशालिनिश्चयत्वेनैव हेतुत्वात् तादृशप्रकारिताया अपि जनकतावच्छेदकत्वात् ।

अथवा परामर्शानुमित्योः ज्ञानभेदेन कार्यकारणभावभेदान्न दोष इति ध्येयम् ।

नारायणी

नन्वनुमितौ साध्यनिष्ठविधेयताकत्वनिवेशेनैवोक्ताव्याप्तिवारणं सम्भवति पृथिवीत्वाभावानुमितेः साध्यनिष्ठविधेयताकत्वविरहाद्-इति साध्यतावच्छेदकावच्छिन्नविधेयतापर्य्यन्तनिवेशो व्यर्थ इत्यतः स्वयं तन्निवेश-

शक्तिः

ननु तथापि तादृशकार्यतानिरूपितकारणताव्यापकप्रकृतसाध्यान्वयव्याप्तिप्रकारताकत्वमित्युच्यतां, किं गुरुतरावच्छेदकत्वप्रवेशेन ?

न चान्वयव्यतिरेकिण्यतिव्याप्तिः, स्वरूपयोग्यत्वरूपतादृशकारणताया अन्वयव्याप्त्यवगाहिव्यतिरेकपरामर्शेऽपि सत्त्वात्तत्र साध्यान्वयव्याप्तिप्रकारित्वाभावात् एवं साध्यान्वयव्याप्तिप्रकारितापदेन तादृशव्याप्तिविशिष्टहेतुमत्पक्षवैशिष्ट्यावगाहिज्ञानजनकतावच्छेदकप्रकारिताया विवक्षितत्वादेव कुत्रापि दोषासम्भवात्—इति चेन्न, यत्र स्थलविशेषेऽन्वयव्याप्तिमनवगाह्य व्यतिरेकपरामर्शः कदापि न जायते किन्त्वन्वयव्याप्तिमवगाह्यैव जायते अन्वयव्याप्त्यवगाहिपरामर्शश्च व्यतिरेकव्याप्त्यनवगाह्यपि जायते तत्रान्वयव्यतिरेकिण्यतिव्याप्त्यापत्तेः. तादृशकार्यतानिरूपितकारणतावज्ज्ञानमात्रस्यैव साध्यान्वयव्याप्तिप्रकारतावत्त्वात् ।

अस्माकं तु तत्र तादृशकारणतावच्छेदकीभूतव्यतिरेकव्याप्तिप्रकारितायामन्वयव्याप्तिप्रकारितात्वाभावान्नातिव्याप्तिः ।

न च तादृशस्थले व्यतिरेकपरामर्शस्य कारणत्वमेव नास्तीति वाच्यम्, अन्वयव्याप्त्यंशे भ्रमत्वग्रहकालेऽनुमित्युत्पत्त्यर्थं तत्र कारणत्वस्यावश्यकत्वादिति ध्येयम् । एतेन व्यतिरेकव्याप्तिप्रकारितात्वाव्यापकतावच्छेदकतादृशानुमितित्वघटितधर्मावच्छिन्नस्वनिष्ठकार्यतानिरूपितकारणतावच्छेदकताकेत्युक्तावेव सामञ्जस्ये गुरुतराभिधानमनुचितमित्यपि प्रत्युक्तम् ।

अतएव तादृशानुमितित्वघटितधर्मावच्छिन्नस्वनिष्ठकार्यतानिरूपितकारणतावच्छेदकतानवच्छेदकव्यतिरेकव्याप्तिप्रकारितात्वकानुमितिकरणत्वं स्वजनकज्ञानत्वव्यापकव्यतिरेकव्याप्त्यवगाहित्वाभावकानुमितिकरणत्वं वा कथं नोक्तं

जागदीशी

भावः । इदमुपलक्षणम् । साध्यस्य प्रकृतत्वानुक्तौ वह्नित्वेन वह्नेः साध्यतायां व्यतिरेक्यात्मके द्रव्यत्वेन वह्नेः साध्यतायामन्वयिनि धूमलिङ्गकानुमानेऽपि अव्याप्तिः स्यात् । प्रकृतहेतुभूतधूमप्रकार-

नारायणी

प्रयोजनमाह इदमुपलक्षणमिति साध्यस्येति प्रकृतलक्षणघटकीभूतस्येत्यादिः । प्रकृतत्वानुक्तौ = साध्यतावच्छेदकवैशिष्ट्यरूपप्रकृतत्वानुपादाने। वह्नित्वेनेति विशेषणे तृतीया । तृतीयार्थस्य वैशिष्ट्यस्य वह्नावन्वयः । व्यतिरेकात्मकेति धूमलिङ्गकानुमाने इति परेणान्वयः । द्रव्यत्वेनेति अत्रापि विशेषणतृतीयार्थो वैशिष्ट्यं वह्नावन्वयि बोध्यम् । अन्वयिनि = केवलान्वयनि । अव्याप्तिः स्यादिति तथा च लक्षणघटकानुमितौ साध्यतावच्छेदकावच्छिन्नविधेयताकत्वमनिवेश्य साध्य-

शक्तिः

परकल्पे जनकत्वं फलोपहितं ग्राह्यमित्यपि समाहितम्, व्यतिरेकव्याप्तिभ्रमाप्रसिद्धिस्थले केवलान्वयिन्यव्याप्त्यापत्तेरिति ध्येयम् ।

प्रकृतहेतुप्रकारतेत्यादि—अत्र तादृशकार्यतानिरूपितकारणतावच्छेदकप्रकारित्वावृत्तिव्यतिरेकव्याप्तिप्रकारितात्वकानुमितिकरणत्वमिति लक्षणं कथं नोक्तमितितु नाशङ्कनीयम्, सर्वत्र भ्रमे मानाभावात् । वाच्यं ज्ञेयत्वादित्यादौ व्यतिरेकव्याप्त्यप्रसिद्ध्या तत्रत्यकेवलान्वयिन्यव्याप्त्यापत्तेरिति श्रीचरणाः ।

ननु तथापि तादृशप्रकारितात्वव्यापकयत्किञ्चिद्धर्मावच्छिन्नव्याप्तिप्रकारितात्वकत्वमेवास्तु किं प्रकृतसाध्यान्वयपदेनेति चेन्न, यादृशस्थलविशेषे तादृशज्ञानं न जायते किन्तु वह्निव्यतिरेकव्याप्तिविशिष्टधूमवत्पर्वतव्याप्यधूमवान् पर्वत इति ज्ञानं तत्र व्यतिरेकिण्यतिव्याप्तिरिति मन्तव्यमिति दिक् ।

जागदीशी

कनिश्चयोत्तरवह्निसाध्यकानुमितित्वावच्छिन्नं प्रति अनुकूलाया धूमनिष्ठवह्नीयव्यतिरेकव्याप्तेः द्रव्यत्वावच्छिन्नसाध्यकान्वयव्याप्तित्वाभावादित्यपि द्रष्टव्यम्। ननु एवमपि वन्ह्यभाववान् वह्निव्या-

नारायणी

निष्ठविधेयताकत्वमात्रनिवेशे यादृशस्थले वह्न्यभावव्यापकाभावप्रतियोगिधूमवान् पर्वतः धूमव्यापकद्रव्यसमानाधिकरणधूमवांश्च पर्वत इत्याकारकसमूहालम्बपरामर्शात्मकप्रकृतहेतुप्रकारकनिश्चयो जातः तादृशस्थले द्रव्यसाध्यकतादृशान्वयव्याप्तिज्ञानादेर्द्रव्यसाध्यककेवलान्वय्यनुमानतया तत्राव्याप्त्यापत्तिः निरुक्तपरामर्शात्मकहेतुप्रकारकनिश्चयोत्तरसाध्यनिष्ठविधेयताकानुमितिपदेन वह्नित्वावच्छिन्नसाध्यकानुमितेरपि धर्त्तुं शक्यतया तज्जनकतावच्छेदकव्यतिरेकव्याप्तिप्रकारितायां द्रव्यत्वावच्छिन्नसाध्यकान्वयव्याप्तिप्रकारितात्वस्यासत्त्वात्। साध्यतावच्छेदकावच्छिन्नसाध्यविधेयताकत्वस्यानुमितौ विवक्षणे तु न तादृशस्थले केवलान्वय्यनुमानेऽव्याप्तिः, तादृशोभयसाध्यनिरूपितव्याप्तिविशिष्टधूमत्वावच्छिन्नप्रकारकनिश्चयोत्तरप्रकृतसाध्यतावच्छेदकद्रव्यत्वावच्छिन्नविधेयताकानुमितिपदेन द्रव्यवानित्याकारकानुमितेरेव धर्त्तव्यतया तज्जनकतावच्छेदकान्वयव्याप्तिप्रकारितायां द्रव्यत्वावच्छिन्नसाध्यकान्वयव्याप्तिप्रकारितात्वस्यानपायाद्-इति तात्पर्यम्। तदेवाह प्रकृतेति धूमत्वावच्छिन्नप्रकारकार्थकम्। अनुकूलायाः=जनकतायां प्रकारितासम्बन्धेनावच्छेदकीभूतायाः धूमनिष्ठेति धूमनिष्ठवह्न्यभावव्यापकाभावप्रतियोगित्वरूपव्यतिरेकव्याप्तिरित्यर्थः। द्रव्यत्वावच्छिन्नेति धूमनिष्ठधूमव्यापकद्रव्यत्वावच्छिन्नसामानाधिकरण्यरूपान्वयव्याप्तित्वाभावादित्यर्थः। इति द्रष्टव्यमिति साध्यतावच्छेदकनिवेशप्रयोजनमिति शेषः।

जागदीशी

पकीभूताभावप्रतियोगिमत्त्वात् इत्यन्वयिन्यव्याप्तिः, तत्र हेतुताव-च्छेदकीभूताया वह्न्यभावीयव्यतिरेकव्याप्तेरपि वह्निव्यापकाभाव-प्रतियोगिरूपप्रकृतहेतुप्रकारकनिश्चयोत्तरवह्न्यभावरूपप्रकृतसाध्य-कानुमितित्वावच्छिन्नं प्रति अनुकूलत्वात् तस्यामेव वह्न्यभावीया-

नारायणी

अनुमितौ प्रकृतसाध्यकत्वनिवेशेऽपि वह्न्यभाववान् वह्निव्यापकीभू-ताभावप्रतियोगिमत्त्वाद्-इत्यत्र यदा वह्निव्यापकीभूताभावप्रतियोगि-मत्त्वव्यापकवह्न्यभाव समानाधिकरणवह्निव्यापकीभूताभावप्रतियोगि-मानयम्-इत्याकारकनिश्चयाद् वह्न्यभावानुमितिः तदा तादृशानुमिति-जनकान्वयव्याप्तिज्ञानादौ केवलान्वयिन्यव्याप्तिः, निरुक्तवह्न्यभावा-नुमितिं प्रति वह्निव्यापकीभूताभावप्रतियोगिमानयम्-इत्याकारकवह्न्य-भावव्यतिरेकव्याप्तिविशिष्टहेतुप्रकारकनिश्चयस्यापि लाघवेन जनकतया तादृशानुमितिजनकतावच्छेदकवह्निव्यापकीभूताभावप्रतियोगित्वरूपव-ह्न्यभावव्यतिरेकव्याप्तिप्रकारितायां वह्न्यभावान्वयव्याप्तिप्रकारितात्व-विरहात् इत्याशङ्क्य वह्न्यभाववानित्यादिदीधितिग्रन्थमवतारयति नन्वित्यादि ।(एवमपि = अनुमितौ प्रकृतसाध्यकत्वस्य निवेशेऽपि । इत्यन्वयिनि = इत्यादिस्थलीयान्वयव्याप्तिज्ञानादौ ।) अव्याप्तिमेवोपपा-दयति तत्रेति तादृशस्थले इत्यर्थः । हेतुतेति वह्निव्यापकीभूताभाव-प्रतियोगित्वरूपाया इत्यादिः । अनुकूलत्वात् = जनकतावच्छेदकप्रका-रताश्रयत्वात् । तस्यामेव = वह्निव्यापकीभूताभावप्रतियोगित्वरूपवह्न्य-भावव्यतिरेकव्याप्तावेव । वह्न्यभावीयेति । वह्निव्यापकीभूताभाव-प्रतियोगिमत्त्वव्यापकवह्न्यभावसामानाधिकरण्यरूपवह्न्यभावीयान्वय-व्याप्तित्वाभावादित्यर्थः । इत्याशङ्क्य = निरुक्तामव्याप्तिं दीधितिकृ-

दीधितिः

निर्गन्धत्वानुमित्यनुदयादिति नाव्याप्तिः । वह्न्यभाववान् वह्निव्यापकाभावप्रतियोगिमत्त्वादित्यादावन्वयव्याप्तेरवच्छे-

जागदीशी

न्वयव्याप्तित्वाभावात् इत्याशङ्क्य तत्रान्वयव्याप्तेः प्रकृतसाध्यक-प्रकृतहेतुकानुमित्यौपयिकत्वविरहात् लक्ष्यत्वमेव नास्ति, क्वाव्याप्तिप्रसङ्ग इत्याशयेन समाधत्ते वन्ह्यभाववानित्यादि । अन्वयव्याप्तेरवच्छेदिका अन्वयव्याप्तेर्घटिका । व्यतिरेकव्याप्तिरित्यत्र प्रकृतसाध्यानुमित्यौपयिकी इत्यनुषज्यते । न तु सैव न तु पुनर-

नारायणी

ताऽऽशङ्क्य तत्र = वह्निव्यापकीभूताभावप्रतियोगिमत्त्वरूपहेतौ । अन्वयव्याप्तेः = स्वव्यापकसाध्यसामानाधिकरण्यरूपाया अन्वयव्याप्तेः । प्रकृतेति वह्न्यभावत्वावच्छिन्नसाध्यकवह्निव्यापकीभूताभावप्रतियोगित्वावच्छिन्नहेतुकानुमितिजनकतावच्छेदकत्वविरहात् । तादृशस्थले हेतावन्वयव्याप्तिविरहेऽपि केवलवह्निव्यापकीभूताभावप्रतियोगिमानयमित्याकारकनिश्चयादेव वह्न्यभावानुमितिः सम्भवतीति हृदयम् । अलक्ष्यत्वमेव = यथोक्तकेवलान्वयिलक्षणालक्ष्यत्वमेव । समाधत्ते दीधितिकार इति शेषः । अन्वयव्याप्तिघटिका = अन्वयव्याप्तिधर्मितावच्छेदकीभूता । व्यतिरेकव्याप्तिः वह्निव्यापकीभूताभावप्रतियोगित्वरूपेत्यादिः । स्वव्यापकवह्न्यभावसामानाधिकरण्यरूपान्वयव्याप्तेर्निरुक्तप्रतियोगित्वरूपव्यतिरेकव्याप्त्यवच्छिन्नस्यापि वन्ह्यभावानुमितिं प्रति जनकताया आवश्यकत्वात् ॥

जागदीशी

न्वयव्याप्तिरेव । प्रकृतहेतुसाध्यकानुमित्यौपयिकीत्यर्थः । अयं भावः । वह्निव्यापकीभूताभावप्रतियोगिमत्तानिश्चयोत्तरवह्न्यभावसाध्यकानुमितित्वावच्छिन्नं प्रति वह्निव्यापकाभावप्रतियोगिमत्तानिश्चयत्वेनैव हेतुत्वं लाघवात् । न तु स्वव्यापकवह्न्यभावसमानाधिकरणतादृशप्रतियोगिमत्तानिश्चयत्वेन गौरवादिति तादृशहेतुसाध्यकानुमानस्य केवलव्यतिरेकितया न लक्ष्यत्वम् । यत्रानुमितौ अन्वयव्याप्तिप्रकारकनिश्चयत्वेनैव हेतुत्वं तत्करणस्यैव

नारायणी

स्वोक्तेः सयुक्तिकत्वमुपपादयितुं भावमाह अयम्भाव इति । वह्नीति वह्न्यभावव्यतिरेकव्याप्तिरूपवह्निव्यापकीभूताभावप्रतियोगित्वविशिष्टप्रकारकनिश्चयोत्तरवह्न्यभावसाध्यकानुमितित्वावच्छिन्नं प्रतीत्यर्थः । लाघवादिति । अधिकविषयतायाः कारणतानवच्छेदकत्वादिति हृदयम् । नतु स्वव्यापकेति नतु वह्निव्यापकीभूताभावप्रतियोगिमत्त्वव्यापकेत्यर्थकम् । गौरवादिति स्वव्यापकत्वावच्छिन्नविषयताया वह्न्यभावादिविषयतायाश्च कारणतावच्छेदकत्वकल्पनेन गौरवमवसेयम् । इति = केवलहेतुप्रकारकनिश्चयस्यैव वह्न्यभावसाध्यकानुमितिहेतुत्वात् । तादृशेति वह्निव्यापकीभूताभावप्रतियोगिमत्त्वहेतुकवह्न्यभावसाध्यकव्याप्तिज्ञानादिरूपानुमानस्येत्यर्थः । केवलेति केवलव्यतिरेकव्याप्तिविशिष्टहेतुप्रकारकनिश्चयमात्रेणानुमित्युत्पादादित्यादिः । तादृशहेतुसाध्यकानुमानस्यालक्ष्यत्वे हेतुमाह यत्रेति यस्यामनुमितावित्यर्थः । अन्वयेति हेतुव्यापकसाध्यसामानाधिकरण्यविशिष्टहेतुप्रकारकनिश्चयत्वेनेत्यर्थः । तत्करणस्यैव = तस्या अनुमितेः करणस्य व्याप्तिज्ञानादेः ।

दीधितिः

दिका व्यतिरेकव्याप्तिर्न तु सैवेति नाप्रसङ्गः। अत एवेतर-

जागदीशी

केवलान्वयित्वादिति। नाप्रसङ्ग इत्यस्य दूषणमिति शेषः। लक्ष्ये अप्रसङ्गो दूषणं भवेत न चैतल्लक्ष्यमिति भावः। गृहीतव्याप्तिभेदेन अनुमानभेदे प्राचां संवादमाह अत एवेति। लिङ्गतावच्छेदक-

नारायणी

नन्वेवं नाप्रसङ्ग इत्यस्य नाव्याप्तिरित्यर्थकताया आवश्यकतया निरुक्तानुमितिकरणस्यालक्ष्यत्वे तस्य नाव्याप्तिरूपार्थकत्वमसम्भवीत्यत आह- नाप्रसङ्गेति तथाच नाप्रसङ्ग इत्यस्य नाव्याप्तिरित्यर्थकत्वेऽपि नाप्रसङ्गो दूषणमित्यभिधानेनासङ्गतिरिह दूषणमिति शेष इति। कथन्ता-निवृत्तये त्वाह लक्ष्येति। अप्रसङ्गोऽव्याप्तिः। दूषणमिति लक्षणस्येत्यादिः। नचैतदिति नच वह्निव्यापकीभूताभावप्रतियोगिमत्त्वहेतुकवह्न्यभावसा-ध्यकानुमितिकरणमित्यर्थः। लक्ष्यमिति केवलान्वयिलक्षणस्येत्यादिः॥

शक्तिः

लिङ्गतावच्छेदकविशिष्टस्येति–लिङ्गस्येत्यनुक्तौ इतरत्वव्यापकाभावप्रतियो-गित्वहेतुकेऽव्याप्तिः, तत्रान्वयव्याप्तिज्ञाननिष्ठजनकताया इतरव्यापकाभावप्रतियो-गित्वप्रकारित्वावच्छिन्नत्वात्। न च तन्निवेशेऽपि एतद्दोषतादवस्थ्यमिति वाच्यम्, यज्ज्ञाने लिङ्गविषयकत्वमनिवेश्य इतरव्यापकाभावप्रतियोगित्वप्रकारितायां लिङ्ग-तावच्छेदकावच्छिन्नविशेष्यत्वावच्छिन्नत्वस्य विवक्षितत्वात्। नच समूहालम्बन-व्याप्तिद्वयज्ञानाद् यत्रानुमितिस्तत्रान्वयव्यतिरेकिण्यतिव्याप्तिः, अन्वयव्याप्तिज्ञान-त्वावच्छिन्नजनकतायामितरव्यापकाभावप्रतियोगित्वप्रकारित्वानवच्छिन्नत्वादिति वाच्यम्। यज्ज्ञाननिष्ठजनकतासामान्ये तादृशप्रकारित्वानवच्छिन्नत्वस्य विवक्षि-तत्वात्।

जागदीशी

विशिष्टस्य लिङ्गस्य यज्ज्ञाने इतरव्यापकाभावप्रतियोगित्वप्रकारकत्वानवच्छिन्नं प्रकृतहेतुसाध्यकानुमितिजनकत्वम्, [यज्ज्ञानीयेतरव्यापकाभावप्रतियोगित्वप्रकारत्वानवच्छिन्नलिङ्गतावच्छेदकावच्छि-

नारायणी

एतेन केषाञ्चिद् यद्रूपावच्छिन्नप्रकारतानिरूपितहेतुतावच्छेदकावच्छिन्नविशेष्यताशालिनिश्चयत्वं प्रकृतसाध्यविधेयताकानुमितिजनकतानतिरिक्तवृत्ति तद्रूपावच्छिन्नस्यैवानुमित्यौपयिकव्याप्तिपदार्थतया निर्द्धर्मितावच्छेदककवह्निव्यापकीभूताभावप्रतियोगित्वरूपवह्न्यभावव्यतिरेकव्याप्तिप्रकारकनिश्चयत्वस्यानुमितिजनकतातिरिक्तवृत्तितया निरुक्तवह्न्यभावव्यतिरेकव्याप्तेरनुमित्यौपयिकत्वाभावाद् जगदीशस्य,नतु सैवान्वयव्याप्तिरेवानुमित्यौपयिकीत्यनुषज्यते इति व्याकारो व्याकार इत्यभिधानमत्यन्तानुचितं प्रतिभाति। निर्द्धर्मितावच्छेदककसाध्याभाववदवृत्तित्वरूपव्याप्तिप्रकारकनिश्चयस्य लाघवादनुमितिजनकताया नव्यनैयायिकमते आवश्यकताया दीधितिकृतैव वक्ष्यमाणतया निरुक्तवह्निव्यापकीभूताभावप्रतियोगिमत्त्वहेतुकवह्न्यभावसाध्यकानुमितिं प्रत्यपि कारणतावच्छेदकविषयताया अधिकाया अप्रवेशेन लाघवात् निर्द्धर्मितावच्छेदककवह्निव्यापकीभूताभावप्रतियोगित्वरूपवह्न्यभावव्यतिरेकव्याप्तिप्रकारकनिश्चयत्वेनापि जनकताया नव्यनैयायिकसम्मतत्वे क्षत्यभावादिति ध्येयमिति श्रीगुरवो भट्टाचार्य्यपादाः॥

गृहीतव्याप्तिभेदेऽनुमानभेदो न केवलं मणिकृत्सम्मतोऽपि तु प्राचीनसम्मतोऽपि इति प्रदर्शयतां दीधितिकृतामत एवेत्यादिलक्षणं व्याचष्टे **लिंगतेति** लिङ्गतावच्छेदकावच्छिन्नस्य लिङ्गस्य हेतोर्यज्ज्ञाने इत्यर्थः। सप्तम्यर्थो वृत्तित्वं तस्यच प्रकृतहेतुसाध्यकानुमितिजनकत्वमित्यनेनान्वयः। उक्तार्थमेवाह **यज्ज्ञानीयेति** तथाच यज्ज्ञाननिष्ठा इतरव्यापका-

जागदीशी

न्नविशेष्यता तादृशानुमितिजनकतावच्छेदिकेति यावत् ] तत् केवलान्वयीत्यर्थः । तेन जलं निर्गन्धं पृथ्वीत्वव्यापकाभावप्रतियोगि-

नारायणी

भावप्रतियोगित्वप्रकारकत्वेन अभावप्रतियोगित्वप्रकारकत्वेन वा अनवच्छिन्ना लिङ्गतावच्छेदकावच्छिन्नविशेष्यिता प्रकृतहेतुसाध्यकानुमितिजनकतावच्छेदिका तज्ज्ञानं केवलान्वयीत्यर्थः पर्यवसितः ।

तेनेति निरुक्तरीत्या लक्षणार्थनिर्वचनेनेत्यर्थः । जलमित्यादि जलं निर्गन्धं पृथिवीत्वव्यापकाभावप्रतियोगिमत्त्वादित्यादौ पृथिवीत्वव्यापकाभावप्रतियोगित्वप्रकारत्वेन पृथिवीत्वाभावानुमितिजनकताया आवश्यकत्वेऽपि गन्धाभावानुमितिजनकतायास्तत्प्रकारकत्वानवच्छिन्नत्वात् तादृशानुमितिजनकतायाः पृथिवीत्वव्यापकाभावप्रतियोगिमत्त्वव्यापकगन्धाभावसामानाधिकरण्यप्रकारकत्वावच्छिन्नतया इतरव्यापकाभावप्रतियोगित्वप्रकारकत्वानवच्छिन्नजनकतावच्छेदकतायाः लिङ्गविषयिताया अनपायात् । (न च तादृशसामानाधिकरण्यप्रकारतानिरूपितपृथिवीत्वव्यापकाभावप्रतियोगित्वावच्छिन्नलिङ्गविषयतात्वेन केवललिङ्गविशेष्यताऽपि निर्गन्धत्वानुमितिजनकतावच्छेदिकैवेति वाच्यम्, यज्ज्ञानीय-इतरव्यापकाभावप्रतियोगित्वप्रकारकत्वानवच्छिन्नलिङ्गतावच्छे–

शक्तिः

नच यज्ज्ञानकालीनज्ञाननिष्ठजनकतासामान्ये तादृशप्रकारित्वावच्छिन्नत्वं तत्त्वमेव लक्षणार्थं इति वाच्यम्, यत्र व्यतिरेकव्याप्तिज्ञानं ततोऽन्वयव्याप्तिज्ञानं ततो व्यतिरेकव्याप्तिज्ञाननाशस्तदनन्तरमनुमितिः तत्रान्वयव्याप्तिज्ञानेऽव्याप्त्यापत्तेः, अतः लिङ्गतावच्छेदकावच्छिन्नलिङ्गज्ञाननिष्ठप्रकृतसाध्यकयदनुमितिजनकतासामान्य इतरव्यापकाभावप्रतियोगित्वप्रकारित्वानवच्छिन्नत्वं तदनुमितिकरणत्वं केवलान्वयित्वमित्यस्य विवक्षितत्वान्न दोष इति ध्येयम् ।

जागदीशी

सत्त्वात् इत्यादौ अन्वयिनि नाव्याप्तिः। ननु इतरव्यापकाभाव इत्यत्र इतरत्वावच्छिन्नव्यापकत्वप्रवेशेऽप्रसिद्धिः, गगनाभावादौ

नारायणी

दकावच्छिन्नविशेष्यताकनिश्चयत्वं प्रकृतसाध्यानुमितिजनकतानतिरिक्तवृत्ति तज्ज्ञानस्यैव केवलान्वयित्वेन विवक्षितत्वात्। पृथिवीत्वव्यापकाभावप्रतियोगित्वावच्छिन्नविशेष्यताकनिश्चयत्वस्य गन्धाभावानुमितिजनकतातिरिक्तवृत्तित्वेन तस्याः केवलान्वयितादशायां प्रतियोगित्वप्रकारकत्वानवच्छिन्नप्रकृतसाध्यानुमितिजनकतानवच्छेदकत्वात् वह्न्यभाववान् वह्निव्यापकाभावप्रतियोगिसत्त्वादित्यत्र वह्न्यभावानुमितिजनकताया वह्निव्यापकाभावप्रतियोगित्वप्रकारकत्वावच्छिन्नतया प्रकृतसाध्यानुमितिजनकताया इतरव्यापकाभावप्रतियोगित्वप्रकारकत्वानवच्छिन्ननिरुक्तलिङ्गविशेष्यताया अवच्छेदकत्वासम्भवान्न तत्र केवलान्वयिलक्षणस्य हेतुज्ञानेऽतिव्याप्तिः,तादृस्थले व्याप्त्यन्तराप्रकारककेवलवह्निव्यापकाभावप्रतियोगित्वप्रकारकलिङ्गज्ञानस्यैव वह्न्यभावानुमितिजनकताया अभ्युपगमात् इति तात्पर्यम्)) इत्यादौ = इत्यादिस्थलीयहेतुज्ञानादौ। अन्वयिनि = केवलान्वयिनि। नाव्याप्तिरित्यनन्तरं नवा वह्न्यभाववान् वह्निव्यापकाभावप्रतियोगिसत्त्वादित्यादावपि हेतुज्ञानादावतिव्याप्तिरित्यपि पूरणीयम्।

अभावप्रतियोगित्वे नवेत्यादिकल्पान्तरानुसरणबीजं प्रदर्शयितुमाह-नन्विति इतरेति इतरत्वस्य केवलान्वयितया तद्व्यापकाभावत्वं हेत्वभावादौ कुत्रापि न प्रसिद्ध्यतीति हृदयम्। अप्रसिद्धिरिति तथाच सर्वत्र केवलान्वयिनि असम्भवः इतरव्यापकाभावस्याप्रसिद्धत्वात्।

ननु इतरव्यापकत्वं गगनाभावादावेव प्रसिद्धं तत्प्रतियोगित्वप्रकारकत्वानवच्छिन्नत्वेन केवलान्वयितादृशोत्पन्नानुमितिजनकतायाः

### जागदीशी

कथञ्चित् तत्प्रसिद्धावपि केवलव्यतिरेकिणि अतिव्याप्तिः, तत्र वह्न्यभावव्यापकाभावप्रतियोगित्वप्रकारेणैव धूमज्ञानस्य अनुमिति-

### नारायणी

सम्भवात्सर्वत्र केवलान्वयिनि लक्षणसमन्वयो नानुपपन्न इत्यत आह–गगनाभावादाविति। आदिपदात्प्रमेयत्वादिपरिग्रहः। इतरव्यापकत्वं हि तादात्म्येनेतरत्वावच्छिन्नसम्बन्धिनिष्ठभेदप्रतियोगितानवच्छेदकत्वरूपं वाच्यम, सम्बन्धान्तरेणेतरत्वावच्छिन्नस्य केवलान्वयित्वासम्भवाद् इति तादात्म्येन व्याप्यव्यापकभावस्य सर्ववादिसम्मतत्वाभावादितरत्त्वावच्छिन्नस्य तेन सम्बन्धेन व्याप्यत्वं सन्दिग्धमित्याशयेनाह **कथञ्चिदिति** तथाच तादात्म्येन व्याप्यव्यापकभावं स्वीकृत्यैव गगनाभावादावितरत्त्वावच्छिन्नव्यापकत्वं कथञ्चित्सङ्गमनीयमिति भावः। तत्प्रसिद्धावपि = इतरत्वावच्छिन्नव्यापकत्वस्य प्रसिद्धावपि। इतरत्त्वावच्छिन्नव्यापकाभावप्रतियोगित्वप्रकारकत्वानवच्छिन्नाया जनकताया लक्षणघटकत्वे केवलान्वयिनि लक्षणसमन्वयसम्भवेऽपि केवलव्यतिरेकिण्यतिव्याप्तिमुपपादयति **वह्न्यभावेति** तथाच वह्निमान् धूमादित्यादौ यदा वह्न्यभावव्यापकाभावप्रतियोगिधूमवान् इत्याकारकनिश्चयमात्राद् वह्निसाध्यकानुमितिर्जनिता तदा निरुक्तवह्निसाध्यकानुमितिजनकताया धूमज्ञाननिष्ठाया वह्न्यभावव्यापकाभावप्रतियोगित्वप्रकारकत्वावच्छिन्नतया इतरत्त्वावच्छिन्नव्यापकाभावप्रतियोगित्वप्रकारकत्वानवच्छिन्नत्वाद् यज्ज्ञानपदेन निरुक्तस्थलीयव्यतिरेकव्याप्त्यवच्छिन्नधूमज्ञानस्यापि धर्त्तुं शक्यतया तादृशधूमज्ञाने वह्निसाध्यककेवलव्यतिरेकिणि निरुक्तकेवलान्वयिलक्षणस्यातिव्याप्तिः दुर्वारैवेति भावः।

दीधितिः

व्यापकाभावप्रतियोगित्वेनाभावप्रतियोगित्वेन वा यल्लिङ्ग-

जागदीशी

हेतुतया इतरत्वावच्छिन्नव्यापकाभावप्रतियोगिमत्ताज्ञानत्वेनाऽहेतु-त्वात् इत्यतो लाघवाच्च आह अभावप्रतियोगित्वेनेति । अत्रापि लिङ्गतावच्छेदकविशिष्टस्य यज्ज्ञानं प्रकृतानुमितौ अभावप्रतियोगि-

नारायणी

अनुमितिहेतुतया = वह्निसाध्यकानुमितिहेतुतया इतरत्वावच्छिन्नेति यत्किञ्चिदितरत्त्वस्य वह्न्यभावेऽप्यक्षततया इतरत्त्वावच्छिन्नेत्युक्तम् । इत्यत इत्यादि । यदि च इतरव्यापकत्वमित्यत्रेतरत्त्वावच्छिन्नव्यापकत्वं न विवक्षितम्, अपितु इतरपदं साध्यभिन्ने साध्याभावे लाक्षणिकं तदा न केवलान्वयिन्यप्रसिद्ध्याऽसम्भवः; नवा केवलव्यतिरेकिण्यतिव्याप्तिः, केवलव्यतिरेकितादशायां प्रकृतसाध्यानुमितिजनकतायाः साध्याभावव्यापकाभावप्रतियोगित्वप्रकारकत्वावच्छिन्नत्वादित्यत आह लाघवाच्चेति साध्याभावे अभावमात्रे वा इतरपदस्य लाक्षणिकत्वमनङ्गीकृत्याभावप्रतियोगित्वप्रकारकत्वानवच्छिन्नत्वस्य प्रकृतसाध्यानुमितिजनकतायां निवेशे महल्लाघवमित्यभिप्रेत्य दीधितिकृता अभावप्रतियोगित्वेन वेत्यादिकमभिहितमिति तात्पर्य्यम् ।

अत्रापीति एतत्कल्पेऽपीत्यर्थः लिङ्गतेति हेतुतावच्छेदकविशिष्टनिष्ठविशेष्यताकं यज्ज्ञानं प्रकृतसाध्यविधेयताकानुमितिं प्रति अभावप्रतियोगि-

शक्तिः

अथैवं जलं विगंन्धं पृथिवीत्वव्यापकाभावप्रतियोगिमत्त्वादित्यादावव्याप्तिः, तत्र निर्गन्धत्वानुमितिजनकतायामपि हेतुतावच्छेदकीभूततादृशप्रतियोगित्वप्रकारित्वावच्छिन्नत्वादिति चेन्न, हेतुतावच्छेदकविषयताया धर्मितावच्छेदकतात्वेनावच्छेदकतया प्रकारितात्वेनावच्छेदकतालाभाय प्रकारितापदमिति तु विभावनीयम् ।

दीधितिः

ज्ञानं न प्रकृतसाध्यानुमितिहेतुस्तत्केवलान्वयीत्यपि वदन्ति। एवं केवलव्यतिरेकित्वादिकमपि निर्वाच्यम्।

जागदीशी

प्रकारकत्वानवच्छिन्नं हेतुरित्यर्थः। नातः प्रागुक्तदोषः। एवमिति। (सहचारभेदात् भेदे व्यतिरेकसहचारमात्रगृहीतान्वयव्याप्तिकत्वं केवलव्यतिरेकित्वम्। यत्रान्वयव्याप्तिघटकप्रत्येकवस्तूनामुपस्थितौ

नारायणी

त्वप्रकारकत्वानवच्छिन्नं सदेव हेतुस्तत् केवलान्वयीत्यर्थः पर्य्यवसितः। नातइति प्रकृतसाध्यविधेयताकत्वं निवेश्य लक्षणार्थनिर्वचनतः इत्यर्थः। प्रागुक्तदोषः जलं निर्गन्धमित्यादौ केवलान्वयिन्यव्याप्तिः वह्न्यभाववान् वह्निव्यापकीभूताभावप्रतियोगिमत्त्वादित्यादौ केवलव्यतिरेकिण्यतिव्याप्तिर्वा दोषो नेति पूर्वेण सम्बन्धः। अधिकमभिहितं प्राक् इति दिक्।

एवं केवलव्यतिरेकित्वादिकमपि निर्वाच्यमिति दीधितिग्रन्थं व्याचष्टे सहचारभेदादित्यादि। तथाच (सहचारभेदकल्पे हेतोरेवानुमानतया प्रकृतहेतुधर्मिकप्रकृतसाध्यसामानाधिकरण्यग्रहाजन्यव्याप्तिग्रहविशेष्यत्वं केवलव्यतिरेकित्वमिति लक्षणार्थः पर्य्यवसितः। तेनेन्द्रियादेरपि व्याप्तिग्राहकतया व्यतिरेकसहचारमात्रगृहीतान्वयव्याप्तेरप्रसिद्ध्याऽसम्भवो नाशङ्कनीयः। नन्वेवं हेतुव्यापकसाध्यसामानाधिकरण्यस्यैवान्वयव्याप्तितया तस्याश्च हेतुनिष्ठसाध्यसामानाधिकरण्यघटितत्वात्तज्ज्ञानं प्रति हेतुधर्मिकसाध्यसामानाधिकरण्यग्रहस्य विशेषणज्ञानमुद्रया जनकत्वेन कथं तदभानान्निरुक्तान्वयव्याप्तिधीरुत्पद्यते? कथं वा तज्ज्ञानाजन्यनिरुक्तव्याप्तिग्रहमादाय केवलव्यतिरेकिणि लक्षणसमन्वयः सम्भवतीत्यत आह यत्रेत्यादि यादृशस्थलेऽन्वयव्याप्तिघटकसाध्यस्याधिकरणस्य

जागदीशी

सत्यां विशेष्ये विशेषणमिति न्यायेनैव अन्वयव्याप्तिधीः न तु साध्यसामानाधिकरण्यत्वप्रकारकज्ञानमपि प्रागपेक्षितम् तत्रैव अन्वयसहचारज्ञानाजन्यस्य व्यतिरेकसहचारधीजन्यान्वयव्याप्तिग्रहस्य सम्भवात् । एवमुभयसहचारगृहीतान्वयव्याप्तिकत्वम् अन्वयव्यतिरेकित्वं बोध्यम् । गृहीतव्याप्तिभेदात् भेदे तु प्रकृतहेतुकप्रकृतसाध्यकानुमित्यौपयिकव्याप्तित्वव्यापकव्यतिरेकव्याप्तित्व -

नारायणी

वृत्तित्वादेश्च प्रत्येकपदार्थस्योपस्थितौ सत्यामेव विशेष्ये विशेषणमितिरीत्यैव हेतुव्यापकसाध्यसामानाधिकरण्यरूपान्वयव्याप्तिज्ञानं नत्वखण्डसाध्यसामानाधिकरण्यविशिष्टहेतुज्ञानोत्तरमेव तज्जायते तादृशस्थल एवाचार्य्यमते हेतुधर्मिकसाध्यसामानाधिकरण्यग्रहाजन्यसाध्याभावधर्मिकहेत्वभावसहचारग्रहजन्यान्वयव्याप्तिग्रहस्य सम्भवान्नासम्भवादिदोष इत्यर्थः पर्य्यवसितः ।

**एवमुभयेति** तथाच हेतुधर्मिकसाध्यसहचारग्रहजन्यत्वे सति साध्याभावधर्मिकहेत्वभावसहचारग्रहजन्यो यो व्याप्तिग्रहः तद्विशेष्यत्वमन्वयव्यतिरेकित्वमित्यर्थः । तेनोभयत्वावच्छिन्नसहचारग्रहत्वेन हेतुव्यापकसाध्यसामानाधिकरण्यरूपान्वयव्याप्तिग्रहं प्रत्यहेतुत्वेऽपि न क्षतिरिति ध्येयम् ।

सहचारभेदादनुमानभेदमते केवलव्यतिरेक्यन्वयव्यतिरेकिणो लक्षणं प्रदर्श्य गृहीतव्याप्तिभेदादनुमानभेदमभ्युपगच्छतां मते प्रथमं केवलव्यतिरेकिणो लक्षणमाह **प्रकृतेति** तथाच प्रकृतहेतुतावच्छेदकावच्छिन्न-

शक्तिः

**प्रकृतहेतुकेति**—अथ निरुक्तकेवलव्यतिरेकिलक्षणे व्यतिरेकपरामर्शजन्यत्वं व्यर्थम्, अन्वयपरामर्शाजन्यत्वविवेशत एव सर्वत्र लक्षणसमन्वयसम्भवादिति चेन्न,

नारायणी

प्रकारताकनिश्चयोत्तरप्रकृतसाध्यविधेयताकानुमितित्वघटितधर्मावच्छिन्नस्वनिष्ठकार्य्यतानिरूपितकारणतावच्छेदकप्रकारितात्वव्यापकप्रकृतसाध्यव्यतिरेकव्याप्तिप्रकारितात्वकानुमितिकरणत्वं केवलव्यतिरेकित्वम् इति लक्षणार्थः पर्यवसितः। तेन धूमवान् वह्नेरित्यादावखण्डधूमाभावव्यापकवह्न्यभावप्रतियोगित्वरूपव्याप्तेरप्रसिद्ध्याऽसदनुमानस्य लक्ष्यतामते धूमसाध्यकवह्निहेतुककेवलव्यतिरेकिणि नाव्याप्तिः, तत्र भ्रमात्मकव्यतिरेकव्याप्तिज्ञानीयप्रकारितायाः प्रसिद्धेः। यत्र तद्धूमव्यापकवह्निसमानाधिकरणतद्धूमवानयं वह्न्यभावव्यापकाभावप्रतियोगिधूमवाँश्चायम् इत्याकारकपरामर्शाद् वह्न्यनुमितिः तत्र वह्निसाध्यकधूमत्वावच्छिन्नहेतुककेवलव्यतिरेक्यनुमाने व्यतिरेकव्याप्तिज्ञानादावव्याप्तिः, हेतुनिष्ठप्रकारताकनिश्चयपदेन तद्धूमहेतुकनिश्चयस्यापि धर्तुं शक्यतया तज्जन्यवह्न्यनुमितिजनकतावच्छेकान्वयव्याप्तिप्रकारितायां साध्यीभूतवह्निव्यतिरेकव्याप्तिप्रकारितात्वविरहात्, अतो हेतौ प्रकृतपदं हेतुतावच्छेदकावच्छिन्नार्थकम्। एवं साध्ये प्रकृतत्वानुपादाने यत्र धूमव्यापकवह्निसमानाधिकरणधूमवानयं द्रव्याभावव्यापकाभावप्रतियोगिधूमवाँश्चायमित्याकारकपरामर्शाद् द्रव्यत्वावच्छिन्नसाध्यकानुमित्युत्पत्त्या द्रव्यसाध्यकधूमहेतुककेवलव्यतिरेकित्वं तत्साध्यकानुमितिकरणे निर्विवादं तत्र केवलव्यतिरेकिणि द्रव्यसाध्यकानुमितिकरणेऽव्याप्तिः, प्रकृतधूमप्रकारकनिश्चयोत्तरजायमानद्रव्यनिष्ठसाध्यताकानुमितिपदेन वह्निसाध्यकानुमितेरपि धर्तुं शक्यतया तज्जनकतावच्छेदकान्वयव्याप्तिप्रकारितायां द्रव्यत्वावच्छिन्नसाध्यकव्यतिरेकव्याप्तिप्रकारितात्वस्यासत्त्वात् अतः साध्यतावच्छेदकावच्छिन्नार्थकं साध्यविशेषणवाचकं प्रकृतपदमिति ध्येयम्। अधिकमन्यत्रानुसन्धेयम्।

शक्ति।

धूमवत्पर्वतकालीनवह्न्यभावव्यापकाभावप्रतियोगीन्धनवान् इति ज्ञाने वह्निसाध्यकधूमहेतुककेवलव्यतिरेकिलक्षणस्यातिव्याप्त्यापत्तेः,तदनन्तरोत्पन्नानुमितौ अन्वय-

जागदीशी

कत्वं प्रकृतहेतुकप्रकृतसाध्यकान्वयपरामर्शाजन्यप्रकृतहेतुकप्रकृतसाध्यकव्यतिरेकपरामर्शजन्यप्रकृतसाध्यकानुमितिकरणत्वं वा। यत्र स्थलविशेषे साध्यसाधनयोरन्वयपरामर्शो न प्रसिद्धः तत्र तद्जन्य-

नारायणी

निरुक्तकेवलव्यतिरेकिलक्षणस्य व्यापकत्वघटिततया गौरवमाशङ्क्य लघुलक्षणमाह प्रकृतहेतुकेति तथाच स्वव्यापकसाध्यसमानाधिककरणहेतुतावच्छेदकावच्छिन्नप्रकारकपक्षविशेष्यकनिश्चयरूपपरामर्शत्वावच्छिन्नजनकतानिरूपितजन्यताशून्यत्वे सति प्रकृतसाध्याभावव्यापकाभावप्रतियोगितावच्छेदकहेतुतावच्छेदकावच्छिन्नप्रकारकप्रकृतपक्षविशेष्यकनिश्चयरूपव्यतिरेकपरामर्शत्वावच्छिन्नजनकतानिरूपितजन्यतावती या प्रकृतसाध्यकानुमितिः तत्करणत्वं केवलव्यतिरेकित्वमित्यर्थः। प्रकृतसाध्ये हेतौ च प्रकृतपदव्यावृत्तिस्तु पूर्ववदवसेयेति अधिकमन्यत्रानुसन्धेयम्।

ननु पृथिवीतरेभ्यो भिद्यते गन्धवत्त्वादित्यत्र केवलव्यतिरेकिण्यव्याप्तिः,तादृशेतरभेदानुमितावन्वयपरामर्शाप्रसिद्ध्या तदजन्यत्वस्योपपादयितुमशक्यत्वादित्यत आह यत्रेत्यादि स्थलविशेषे = पृथिवीतरेभ्यो भिद्यते इत्यादिस्थलविशेषे। साध्यसाधनयोः = इतरभेदगन्धवत्त्वाद्योः। अन्वयपरामर्शः = स्वव्यापकसाध्यसमानाधिकरणहेतुमत्पक्षनिश्चयः। न प्रसिद्ध इति। अन्वयदृष्टान्तविरहादित्यादिः। पृथिवीमात्रस्य पक्षत्वेन गन्धवत्त्वस्यापि पक्षमात्रवृत्तित्वेनैवान्वयदृष्टान्ताभावादन्वयव्याप्तिर्न

शक्तिः

परामर्शाजन्यत्वसत्त्वात्। नच तादृशजन्यतायां निश्चयीयत्वनिष्ठावच्छेदकतानिरूपितहेतुप्रकारकत्वनिष्ठावच्छेदकतानिरूपितत्वनिवेशेनैव तद्दोषवारणं संभवतीति वाच्यम्, विशेषणांशे संशयास्वीकारेण तद्दोषतादवस्थ्यात्।

जागदीशी

त्वं नोपादेयम्। अन्वयव्यतिरेकित्वन्तु प्रकृतहेतुकप्रकृतसाध्यकान्वयव्यतिरेकोभयपरामर्शजन्यप्रकृतहेतुकप्रकृतसाध्यकानुमितिकर-

नारायणी

सम्भवतीति हृदयम्। तत्र = तादृशकेवलव्यतिरेकिलक्षणे तदजन्यत्वम् = अन्वयपरामर्शाजन्यत्वम्। न देयमिति। तथाच पृथिवीमात्रपक्षकनिरुक्तस्थले अनुमितावन्वयपरामर्शाजन्यत्वमनिवेश्य केवलं पृथिवीतरत्वव्यापकाभावप्रतियोगिगन्धवती पृथिवीत्याकारकव्यतिरेकपरामर्शजन्यानुमितिकरणत्वं केवलव्यतिरेकित्वं वक्तव्यमिति न तादृशस्थलीयकेवलव्यतिरेकिण्यव्याप्तिरिति भावः।

अन्वयव्यतिरेकिणो लक्षणमाह प्रकृतेति प्रकृतहेतुतावच्छेदकावच्छिन्नव्यापकप्रकृतसाध्यतावच्छेदकावच्छिन्नसाध्यसमानाधिकरणप्रकृतहेतुमान् पक्षः इत्याकारकान्वयपरामर्शजन्यत्वे सति प्रकृतसाध्याभावव्यापकाभावप्रतियोगितावच्छेदकहेतुतावच्छेदकावच्छिन्नप्रकारकपक्षविशेष्यकनिश्चयात्मकव्यतिरेकपरामर्शजन्या या अनुमितिः तत्करणत्वमन्वयव्यतिरेकित्वमिति पर्य्यवसितो लक्षणार्थः। करणत्वविवक्षणादिन्द्रियादेर्मनसो वाऽनुमानत्वेऽपि न क्षतिः। अनुमितिकरणत्वेन तेषामपि सङ्ग्रहसम्भवात्। धूमहेतुकवह्निसाध्यकान्वयपरामर्शात् इन्धनहेतुकवह्निसाध्यकव्यतिरेकपरामर्शाद् धूमव्यापकवह्निसमानाधिकरणधूमवान् पर्वतः वह्न्यभावव्यापकाभावप्रतियोगीन्धनवान् इत्याकारकनिश्चयात्मकाद् यदा वह्निसाध्यकानुमितिर्जनिता तदा तत्साध्यकानुमितिकरणेऽतिव्याप्तिवारणाय हेतौ प्रकृतत्वनिवेशः वह्न्यभावव्यापकाभावप्रतियोगिधूमवान् द्रव्यव्याप्यधूमवांश्च पर्वत इत्याकारकपरामर्शाद् यदा द्रव्यानुमितिः तदा तत्करणे अतिव्याप्तिवारणाय व्यतिरेकपरामर्शादिशि प्रकृतसाध्यकत्वम्। एवमनयैव रीत्या अन्वयपरामर्शादिश्यपि प्रकृतसाध्यकत्वहेतुकत्वयोर्न्यावृत्तिः स्वयमूहनीयेति ध्येयम्।

जागदीशी

णत्वम् ।) न च यत्र वह्निव्याप्यधूमवान् वह्न्यभावव्यापकीभूताभावप्रतियोगिमांश्च पर्वत इति ज्ञानात् वह्न्यनुमितिः तत्रान्वयव्यतिरेकिणि धूमेऽव्याप्तिः, धूमत्वविशिष्टव्यतिरेकव्याप्तेरपरामृष्टत्वेन तत्रानुमितेः प्रकृतहेतुकव्यतिरेकपरामर्शाजन्यत्वात्, व्यतिरेकपराम-

नारायणी

ननु उभयत्र परामर्शदिशि प्रकृतसाध्यकत्वविवक्षणे यत्र धूमव्यापकवह्निसमानाधिकरणधूमवान् पर्वतः वह्न्यभावव्यापकाभावप्रतियोगिमांश्च पर्वत इत्याकारकपरामर्शात्प्रकृतवह्निसाध्यकानुमितिर्जनिता तत्र वास्तविकान्वयव्यतिरेकिणि धूमहेतुकव्याप्तिज्ञानादौ वह्न्याद्यनुमितिकरणेऽव्याप्तिः स्यात्, निरुक्तायां जायमानायां वह्निसाध्यकानुमितौ प्रकृतहेतुकान्वयपरामर्शजन्यत्वसत्त्वेऽपि प्रकृतधूमत्वावच्छिन्नहेतुकव्यतिरेकपरामर्शाजन्यत्वादित्याशङ्कते **नचेति** वाच्यमिति परेणान्वयः। यत्र = यादृशस्थले **वह्निव्याप्येति** धूमव्यापकवह्निसामानाधिकरण्यविशिष्टधूमवानित्यर्थः। व्यतिरेकपरामर्शं दर्शयति **वह्न्यभावेति**। **इति ज्ञानाद्** = इत्याकारकसमूहालम्बनपरामर्शात्। **तत्र** = तादृशस्थले। **अव्याप्तौ** हेतुमाह **धूमत्वविशिष्ट इति** धूमत्वावच्छिन्न इत्यर्थः। **व्यतिरेकेति** वह्न्यभावव्यापकाभावप्रतियोगित्वरूपव्यतिरेकव्याप्तेरित्यर्थः। **अपरामृष्टत्वेनेति** निरुक्तव्यतिरेकपरामर्शस्य व्याप्त्यंशे निर्धर्मितावच्छेदकत्वादित्याशयः।

शक्तिः

अत्रान्वयपरामर्शदिशि हेत्वंशे प्रकृतत्वाविवेशे यत्र तद्धूमहेतुकवह्निसाध्यकव्यतिरेकपरामर्शः धूमहेतुकान्वयपरामर्शः तदनन्तरं वह्न्यनुमितिः तत्र वह्निसाध्यकतद्धूमहेतुककेवलव्यतिरेकिण्यव्याप्तिः, तादृशानुमितौ धूमहेतुकान्वयपरामर्शाजन्यत्वविरहात् एवमन्वयपरामर्शदिशि साध्ये प्रकृतत्वाविवेशे यत्र द्रव्यत्वेन वह्निसाध्यकान्वयपरामर्शः द्रव्यव्याप्यधूमवान् पर्वत इत्याकारकवह्न्यभावव्यापका-

जागदीशी

र्शदिशि हेतोः प्रकृतत्वाप्रवेशे च वह्निसाध्यकाभ्यां धूमस्यान्वयेन आलोकस्य च व्यतिरेकेण परामर्शाभ्यां यत्र वन्ह्यनुमितिः तत्रापि धूमस्यान्वयव्यतिरेकित्वापत्तिरिति वाच्यम् । वन्ह्यभावव्यापकाभा-

नारायणी

ननु व्यतिरेकपरामर्शदिशि हेतौ प्रकृतत्वं न देयमेवेति नोक्ताऽव्याप्तिः निरुक्तव्यतिरेकपरामर्शस्यापि व्याप्त्यंशे निर्धर्मितावच्छेदककस्य संग्रह-सम्भवादिति तटस्थः शङ्कते व्यतिरेकेति लक्षणघटकेत्यादिः। प्रकृतत्वा निवेशे = हेतुतावच्छेदकावच्छिन्ने साध्याभावव्यापकाभावप्रतियोगित्वा-निवेशे । वह्निसाध्यकाभ्यामित्यादि तथाच यादृशस्थले धूमव्यापकवह्नि-समानाधिकरणधूमवान् वह्न्यभावव्यापकाभावप्रतियोगि—आलोकवाँश्च पर्वतः इत्याकारकसमूहालम्बनपरामर्शाद् वह्न्यनुमितिरुत्पद्यतेतादृस्थले धूमाहेतुकव्याप्तिज्ञानादेरपि अन्वयव्यतिरेकित्वापत्तिः स्यात्, निरुक्तव-ह्न्यनुमितेः प्रकृतधूमत्वावच्छिन्नहेतुकान्वयपरामर्शजन्यतया सामान्यतः प्रकृतसाध्यकव्यतिरेकपरामर्शजन्यतया च घत्तुं शक्यत्वात्तत्करणत्वस्य धूमहेतुकव्याप्तिज्ञानादावनपायात्, अतः प्रकृतहेतुतावच्छेदकावच्छिं-न्नधर्मिकसाध्याभावव्यापकाभावप्रतियोगित्वावगाहिपरामर्शजन्यत्व – स्यान्वयव्यतिरेकिलक्षणघटकताया आवश्यकतया निरुक्तस्थले धूमत्वाव-च्छिन्नहेतुकव्यतिरेकपरामर्शजन्यत्वस्यानुमितौ विरहान्न तत्करणस्यान्व-यव्यतिरेकित्वापत्तिः। एवञ्च वह्न्यभावव्यापकाभावप्रतियोगिमान् वह्नि-व्याप्यधूमवाँश्च पर्वत इत्याकारकसमूहालम्बनपरामर्शजन्यानुमितिकरणे ऽव्याप्तिर्दुर्वारैवेति भावः। समाधत्ते वह्न्यभावेति वह्न्यभावेत्युपलक्षणं

शक्तिः

भावप्रतियोगिधूमवान् पर्वत इत्याकारकवह्नित्वेन वह्निसाध्यकव्यतिरेकपरामर्शः तत्र वह्निसाध्यककेवलव्यतिरेकिण्यव्याप्तिः, व्यतिरेकपरामर्शजन्यानुमितो वह्नि-निष्ठसाध्यताकान्वयपरामर्शजन्यत्वविरहात् । एवं व्यतिरेकपरामर्शदिशि हेतो-

जागदीशी

वप्रतियोगितामात्रस्य अतिप्रसक्तत्वात् तादृशप्रतियोगितावच्छेदकीभूतधूमत्वादेरेव व्यतिरेकव्याप्तितया तदवच्छिन्नस्य परामर्शे प्रकृतहेतोरवश्यं प्रविष्टत्वात्, पक्षधर्मांशे प्रकृतहेतुतावच्छेदकातिरिक्तानवच्छिन्नविशेष्यताकव्यतिरेकव्याप्तिप्रकारिताशालिज्ञानस्यैव

नारायणी

साध्याभावव्यापकाभावप्रतियोगितामात्रस्येत्यर्थः। अतिप्रसक्तत्वादिति द्रव्यं सत्त्वादित्यादौ द्रव्यत्वाभावव्यापकीभूतविशिष्टसत्ताऽभावप्रतियोगित्वं सत्तायामतिव्याप्तं धूमवान् वह्नेरित्यादावपि धूमाभावव्यापकीभूतवह्निघटोभयाभावप्रतियोगित्वं वह्न्यादावतिव्याप्तमितिभावः। तादृशेति वह्न्यभावव्यापकाभावप्रतियोगितावच्छेदकीभूतधूमत्वादेरेवेत्यर्थः।

व्यतिरेकेति व्यतिरेकव्याप्तित्वेनावश्यं वक्तव्यतयेत्यर्थः। तदवच्छिन्नस्य = निरुक्तप्रतियोगितावच्छेदकीभूतधूमत्वादिरूपव्याप्यवच्छिन्नस्य। परामर्शे = तादृशव्याप्त्यवच्छिन्नप्रकारताकनिश्चये। प्रकृतहेतोः हेतुतावच्छेदकविशिष्टहेतोरित्यर्थः। तथाच यत्र वह्निव्याप्यधूमवान् वह्न्यभावव्यापकाभावप्रतियोगिमांश्च पर्वत इत्याकारकनिश्चयाद् वह्न्यनुमितिस्तत्र तादृशप्रतियोगिमत्तानिश्चयस्य व्यतिरेकपरामर्शानात्मकतया व्यतिरेकपरामर्शाजन्यत्वस्योक्तानुमितावश्यं वर्तमानतया तत्करणस्य धूमादेरन्वयव्यतिरेकित्वं नेष्यत एव तस्य केवलान्वयित्वमेवेति तत्करणे अव्याप्तिशङ्का कथमपि न सम्भवतीति हृदयम्। तुष्यतु दुर्जनन्यायेनाह पक्षधर्मांशे इति प्रकृतेति प्रकृतहेतुतावच्छेदकभिन्नो यो धर्मः तदनवच्छिन्ना या साध्याभावव्यापकाभावप्रतियोगित्वप्रकारतानिरूपितविशे-

शक्तिः

प्रकृतत्वानिवेशे यत्र तद्धूमहेतुकान्वयपरामर्शो धूमहेतुकव्यतिरेकपरामर्शश्च वर्तते तत्र धूमहेतुककेवलव्यतिरेकिलक्षणस्य तद्धूमहेतुककेवलान्वयिन्यतिव्याप्ते-

जागदीशी

वा व्यतिरेकपरामर्शपदेन विवक्षितत्वात् । तादृशी हि प्रकारिता

नारायणी

च्यतातच्छालिनिश्चयस्यैव व्यतिरेकपरामर्शपदेनेत्यर्थः। विवक्षितत्वादिति अयमाशयः निरुक्तान्वयव्यतिरेकिलक्षणन्तु हेतुतावच्छेदकावच्छिन्नव्यापकसाध्यसामानाधिकरण्यप्रकारतानिरूपिता या हेतुतावच्छेदकावच्छिन्नविशेष्यता तदभिन्नप्रकारताकपक्षविशेष्यकान्वयपरामर्शजन्यत्वे सति प्रकृतसाध्याभावव्यापकाभावप्रतियोगित्वप्रकारतानिरूपिता या हेतुतावच्छेदकभिन्नधर्मानवच्छिन्नविशेष्यता तदभिन्नप्रकारताकपक्षविशेष्यताकनिश्चयरूपव्यतिरेकपरामर्शजन्या याऽनुमितिः तत्करणत्वरूपम् । एवञ्च यन्मते वह्निव्याप्यधूमवान् वह्न्यभावव्यापकाभावप्रतियोगिमांश्च पर्वत इत्याकारकपरामर्शजन्यवह्न्यनुमितिकरणस्य धूमादेर्लक्ष्यत्वं तन्मतेऽपि तत्र लक्षणसमन्वयो निराबाधः, निरुक्तप्रतियोगित्वप्रकारतानिरूपितविशेष्यताया निरवच्छिन्नतया हेतुतावच्छेदकातिरिक्तधर्मानवच्छिन्नत्वेन सङ्ग्रहसम्भवान्निरुक्तवह्न्यनुमितेरपि व्यतिरेकपरामर्शजन्यत्वस्याक्षतत्वाद् । यत्र तु वह्निव्याप्यधूमवान् पर्वतः वह्न्यभावव्यापकाभावप्रतियोगिधूमवांश्च पर्वतः इत्याकारकपरामर्शाद् वह्न्यनुमितिस्तत्रापि निरुक्तप्रतियोगित्वरूपव्यतिरेकव्याप्तिप्रकारतानिरूपितविशेष्यताया धूमत्वावच्छिन्नतया धूमत्वातिरिक्तधर्मानवच्छिन्नत्वस्य सत्त्वेन सङ्ग्रहसम्भवात्तादृशानुमितिकरणेऽपि अन्वयव्यतिरेकिणि अव्याप्तिशङ्काया अवकाश एव न सम्भवतीति । तादृशीहीत्यादि हेतुतावच्छेदकातिरिक्तधर्मानवच्छिन्नविशेष्यतानिरूपि-

शक्तिः

रतस्तन्निवेशः । व्यतिरेकपरामर्शदिशि साध्ये प्रकृतत्वाविवेशे यत्र महानसीयवह्निसाध्यकधूमहेतुकव्यतिरेकपरामर्शः इन्धनहेतुकवह्निसाध्यकव्यतिरेकपरामर्शः तत्र धूमहेतुकवह्निसाध्यककेवलव्यतिरेकिलक्षणस्यातिव्याप्त्यापत्तेः, इत्यास्तां विस्तरः ।

चिन्तामणिः

हि, केवलान्वयिनोऽभिधेयत्वस्य न विपक्षः, अभिधानेऽनभिधाने च विपक्षत्वव्याघातात् । अथ यथा आका-

दीधितिः

अभिधेयत्वं शब्दशक्यत्वम् । विपक्षत्वव्याघातो विपक्ष-

जागदीशी

व्यतिरेकव्याप्त्यंशे विशेष्यतावच्छेदकस्य विरहे हेतुतावच्छेदकस्यैववा तत्त्वे निर्वहतीति सर्वसामञ्जस्यादिति ध्येयम् ।

नारायणी

तव्यतिरेकव्याप्तिप्रकारता हीत्यर्थः । व्यतिरेकव्याप्त्यंशे = साध्याभावव्यापकाभावप्रतियोगित्वरूपव्यतिरेकव्याप्त्यंशे । विशेष्यतेति धूमत्वादिरूपहेतुतावच्छेदकीभूतविशेष्यतावच्छेदकस्येत्यर्थः । विरहे = निर्द्धर्मितावच्छेदककृताद्दशप्रतियोगित्वप्रकारकपरामर्शदशायामित्यर्थः । तत्त्वे = विशेष्यतावच्छेदकत्वे । निर्वहतीति ताद्दशप्रकारतानिरूपितविशेष्यताया हेतुतावच्छेदकावच्छिन्नत्वेन हेतुतावच्छेदकातिरिक्तधर्मानवच्छिन्नत्वादित्याशयः । साध्याभावव्यापकाभावप्रतियोगित्वस्यातिप्रसक्ततया व्याप्तित्वासम्भवाद्ध्येयमित्युक्तमास्तां विस्तरः ।

असद्विपक्षं केवलान्वयीतिमूलस्य असन् अविद्यमानोऽभावप्रतियोगीति यावत्, विपक्षो निश्चितसाध्याभाववान् यस्येतिव्युत्पत्त्या यस्य साध्यस्य विपक्षो नास्ति ताद्दशसाध्यकानुमितिकरणं केवलान्वयीति यथाश्रुतार्थपरतामभिप्रेत्य केवलान्वय्यनुमाने लक्षणसमन्वयं चिकीर्षुर्याद्दशसाध्यस्य विपक्षाभावो विचारसहः ताद्दशसाध्यं प्रदर्शयितुमाह मूले तथाहीत्यादि केवलान्वयिन इति सर्वत्र वर्त्तमानस्येत्यर्थः। कस्येत्याकाङ्क्षायामाह अभिधेयत्वस्येति शब्दशक्यत्वस्येत्यर्थः । ननुशब्दो-

**नारायणी**

यस्थाप्यत्वस्येत्वर्थः करणीयः, तथा सति 'अथ यथाऽऽकाशशब्दात् शब्दाश्रयत्वमनभिधेयमप्युपतिष्ठते' इत्याद्यग्रिमग्रन्थासङ्गतिः स्यात्, शब्दाश्रयत्वस्य प्राचीनमते आकाशपदाशक्यत्वेऽपि तस्य शब्दोपस्थाप्यतायास्तन्मतसिद्धतयाऽभिधेयत्वस्य शब्दोपस्थाप्यत्वस्वरूपत्वेऽनभिधेयमित्यस्यापि शब्दोपस्थाप्यत्वाभाववदर्थकताया आवश्यकतया तस्य च शब्दाश्रयत्वेन सह अनन्वयापत्तेरिति ध्येयम् ।

न विपक्ष इत्यत्र विपक्षशब्दार्थः अभावनिष्ठविशेष्यत्वाभिन्नप्रकारताकनिश्चयविशेष्यरूपः, तदेकदेशीभूतायां विशेष्यतायामाधेयतासम्बन्धेन अभिधेयत्वशब्दार्थान्वितस्य स्वरूपसम्बन्धावच्छिन्नप्रतियोगित्वसम्बन्धावच्छिन्नषष्ठ्यर्थप्रकारत्वस्य निरूपितत्वसम्बन्धेनान्वयः नेत्यनन्तरमस्तीतिपदमध्याहार्य्यम् । अध्याहृतधात्वर्थस्तु प्रतियोगित्वम् तत्र नञर्थाभावस्य निरूपितत्वसम्बन्धेनान्वयः, आख्यातार्थश्चाश्रयत्वम् तस्य प्रथमान्तपदोपस्थाप्ये तादृशविपक्षशब्दार्थेऽन्वयः । एवञ्च अभिधेयत्वनिष्ठस्वरूपसम्बन्धावच्छिन्नप्रतियोगित्वसम्बन्धावच्छिन्नप्रकारतानिरूपिताभावनिष्ठविशेष्यत्वाभिन्नप्रकारताकनिश्चयविशेष्यः अभावनिरूपितप्रतियोगित्वाश्रयः इत्यन्वयबोधः पर्यवसितः ।

एतेन विपक्षशब्दस्याभिधेयत्वाभाववदर्थकत्वे तत्र अभिधेयत्वस्येत्यादेरनन्वयप्रसङ्गः कथञ्चित् अभिधेयत्वशब्दोत्तरषष्ठ्यर्थस्य तादात्म्यरूपतामभ्युपगम्य निरुक्ताभिधेयत्वाभाववदर्थैकदेशेऽभिधेयत्वेऽन्वयोपपादनेऽपि अभिधेयत्वाभावस्याप्रसिद्धतया प्रतियोगिनोऽप्यप्रसिद्धत्वात् नञर्थान्वयानुपपत्तिः प्रथमान्तार्थमुख्यविशेष्यकान्वयबोधानुपपत्तिश्चेत्यपि दूषणं परास्तमिति ध्येयम् ।

निरुक्तविपक्षस्याभावप्रतियोगित्वे युक्तिमाह **अभिधाने इति** तस्य विपक्षस्येत्यादिः। शब्दशक्यत्वे शब्दशक्यतया ज्ञातत्वे वेत्यर्थः। विपक्षत्वव्याघातादिति परेण सम्बन्धः, विपक्षत्वज्ञानोत्पादासम्भवादिति तदर्थः। तथाच प्राचीनमते समानविषयकज्ञानस्यैव प्रतिबन्धकतया अयमभिधे-

नारायणी

यत्वविपक्ष इति परकीयप्रतिज्ञावाक्यघटकेदंपदार्थेदन्त्वावच्छिन्ने स्वरूपसम्बन्धावच्छिन्नप्रतियोगित्वसम्बन्धावच्छिन्नाभिधेयत्वप्रकारेण भासमानाभावप्रकारकनिश्चयविशेष्यत्वज्ञानं प्रति इदन्त्वावच्छिन्नधर्मिकत्वरूपेण शब्दशक्यत्वरूपाभिधेयत्वप्रकारकज्ञानस्य प्रतिबन्धकताया आवश्यकतया निरुक्तज्ञानस्य सत्त्वे तद्दशायां तादृशाभिधेयत्वप्रकारेण भासमानाभावप्रकारकनिश्चयीयविशेष्यत्वरूपाभिधेयत्वविपक्षत्वज्ञानोदय एव न सम्भवति, पर्वतधर्मिकसंयोगसम्बन्धावच्छिन्नवह्निप्रकारताकनिश्चयदशायां पर्वतादौ संयोगसम्बन्धावच्छिन्नप्रतियोगित्वसम्बन्धावच्छिन्नवह्निप्रकारेण भासमानाभावप्रकारकनिश्चयविशेष्यत्वज्ञानानुदयस्य प्राचीनमतसिद्धत्वादिति भावः।

अनभिधाने इति तस्य विपक्षस्येत्यादिः शब्दाशक्यत्वे इत्यर्थः। विपक्षत्वव्याघातादिति तथाच अयमभिधेयत्वविपक्षः इत्यादौ विपक्षत्वेनाभिमतस्येदम्पदार्थस्य शब्दाशक्यत्वाभ्युपगमे शब्दाशक्यस्य शाब्दबोधाविषयतायाः सर्ववादिसिद्धतया शाब्दबोधजनकनिरुक्तप्रतिज्ञादिघटितपञ्चवाक्यात्मकन्यायस्याप्रसिद्धया परार्थानुमानमेव न सम्भवति। परार्थानुमाने विपक्षत्वविषयकशाब्दबोधजनकप्रतिज्ञादिघटितपञ्चवाक्यात्मकन्यायस्य प्रयोजकत्वादिति। विपक्षत्वेनाभिमतस्याभिधानपक्षेऽनभिधानपक्षे च विपक्षत्वज्ञानोदयासम्भवादभिधेयत्वादेः असद्विपक्षताया निर्विवादतया तादृशाभिधेयत्वादिसाध्यकानुमितिकरणस्य केवलान्वय्यनुमानत्वमपि निर्विवादमित्यस्मद्गुरुचरणभट्टाचार्य्यीयनवीनमूलव्याख्यानं सुधीभिर्विवेचनीयम्।

अभिधेयत्वविपक्षस्य शब्दाशक्यत्वेऽपि शब्दोपस्थाप्यत्वेनैव तत्र शाब्दबोधविषयत्वमुपपादयतां प्राचां मते न विपक्षत्वासिद्धिः। शाब्दबोधजनकप्रतिज्ञादिघटितन्यायप्रयोज्यपरार्थानुमानादितोऽपि विपक्षत्वज्ञानसम्भवेन विपक्षत्वव्याघातो न सम्भवतीति वदतां मीमांसकानां

चिन्तामणिः

शब्दाच्छब्दाश्रयत्वमनभिधेयमप्युपतिष्ठते तथाऽभिधेय-त्वविपक्षस्यानभिधेयत्वेऽपि पदादुपस्थितिः स्यात्, एवञ्चा-भिधेयत्वं कुतोऽपि व्यावृत्तं धर्मत्वात् गोत्ववदितिचेन्न,

दीधितिः

त्वासिद्धिः। ननु व्यावृत्तत्वम् अन्योन्याभावप्रतियोगितावच्छेद-

जागदीशी

अथाभिधेयत्वं यदि शब्दोपस्थाप्यत्वं तदा शब्दाश्रयत्वमन-भिधेयमपीति अग्रिममूलासङ्गतिः अतो व्याचष्टे शब्दशक्यत्व-

नारायणी

नव्यनैयायिकानां वा मतमवलम्ब्य शङ्कते अथेति यथेत्यादिकं दृष्टान्त-विधयाऽभिहितम्। आकाशशब्दादित्यत्र पञ्चम्यर्थो जन्यत्वं तस्य च उपतिष्ठते इत्याख्यातान्तधातूपस्थाप्योपस्थितिरूपे अर्थे अन्वयः।

आकाशशब्दात् कदाचिदष्टद्रव्यातिरिक्तद्रव्यत्वेन कदाचिच्च शब्दा-श्रयत्वेनापि शाब्दबोधो भवति, शब्दाश्रयत्वमात्रस्याकाशपदशक्य-त्वे तत्पदादष्टद्रव्यातिरिक्तद्रव्यत्वेन शाब्दबोधो न स्यादिति आकाश-पदशक्यताया निरवच्छिन्नताया उभयमतसिद्धत्वेऽपि यद्रूपेणाकाशप-दादुपस्थितिर्भवति तद्रूपेणव ततः शाब्दबोधजननादित्याशयेनोभयवादि-सिद्धाकाशपदोपस्थाप्यशब्दाश्रयत्वादेर्दृष्टान्ततया अनुसरणमित्यवधेयम्। तथाचाकाशपदाशक्यस्य शब्दाश्रयत्वस्याकाशपदोपस्थाप्यतया यथा शाब्दबोधविषयत्वमभिमतं तथा अभिधेयत्वविपक्षस्य शब्दाशक्यत्वेऽपि ततस्तस्योपस्थितौ सत्यां शाब्दबोधविषयत्वमभिधेयत्वविपक्षस्य सम्भ-वति इति व्याघातः कथमपि न शङ्कनीय इति भावः। पदादुपस्थिति-

जागदीशी

मिति । अथ अभिधेयत्वाभाववत्त्वरूपस्य तद्विपक्षत्वस्य व्याघातो

नारायणी

रिति अभिधेयत्वविपक्षशब्दादुपस्थितिरित्यर्थः । तेन तादृशविपक्षस्य वाक्यतया तत्र पदत्वाभावेऽपि न क्षतिः । एतावता व्याघाते निरस्तेऽपि कुतो अभिधेयत्वविपक्षसिद्धिः इत्यत आह एवञ्चेति ।

केचित्तु अयमभिधेयत्वविपक्षः इत्याकारिका प्रतिज्ञा न सम्भवति अभिधेयत्वविपक्षस्याभिधेयत्वाभाववदर्थकतया तस्य न्यायमते अप्रसिद्धतया तत्रोभयवादिसिद्धसाध्यत्वायोगात् । अतः परार्थानुमानप्रयोजकोभयवादिसिद्धसाध्यादिघटितप्रतिज्ञादिकमाह एवञ्चेति तथा चाभिधेयत्वं कुतोऽपि व्यावृत्तमित्याकारकभेदप्रतियोगितावच्छेदकत्वरूपसाध्यस्योभयवादिसिद्धतया यन्निष्ठभेदप्रतियोगितावच्छेदकमभिधेयत्वं भवति तस्यैवाभिधेयत्वविपक्षत्वमिति तात्पर्य्यं मूलकृतो वर्णयन्ति । तच्चिन्त्यम्, व्यावृत्तत्वस्य।भिधेयत्वादावनुमितत्वेऽपि तादृशानुमितेः अभिधेयत्वनिष्ठायाः वृत्तिमदत्यन्ताभावाप्रतियोगित्वरूपकेवलान्वयितायाः सिद्धावप्रतिबन्धकतया अभिधेयत्वादौ केवलान्वयित्वखण्डनस्यासङ्गतत्वापत्तेः । नच यत्र यत्र व्यावृत्तत्वं तत्र तत्रैव वृत्तिमदत्यन्ताभावप्रतियोगित्वमिति नियमाद् व्यावृत्तत्वज्ञानं तदभावव्याप्यवत्ताज्ञानमुद्रयैव वृत्तिमदत्यन्ताभावाप्रतियोगित्वज्ञानं विरुणद्धीति वाच्यम् , तादृशात्यन्ताभावप्रतियोगित्वव्याप्यत्वाग्रहदशायां व्यावृत्तत्वानुमितेरर्थान्तरापत्तेर्वारयितुमशक्यत्वादिति श्रीभट्टाचार्य्यपादाः ।

विपक्षत्वव्याघातशब्दस्य विपक्षत्वासिद्धिरूपविपक्षत्वज्ञानाभावार्थकत्वं दीधितिकारोक्तं समर्थयति अथेत्यादि तद्विपक्षस्य = अभिधेयत्वविपक्षस्य, यथाश्रुतव्याघातशब्दस्याभावार्थकत्वमाह विरह इति अभाव

जागदीशी

विरहः स च प्रतियोग्यप्रसिद्धत्वात् दुर्घट इत्यत आह विपक्षत्वेति । ननु वृत्तिमत्त्वविशिष्टस्य अत्यन्ताभावप्रतियोगित्वस्य

नारायणी

इत्यर्थः । सच=व्याघाततः विरहश्च । प्रतियोग्येति । प्रतियोगिनोऽभिधेयत्वविपक्षस्य अलीकत्वादित्यर्थः । दुर्घट इति वस्तुत एवाभावप्रतियोगित्वादवस्तुनि अभावप्रतियोगिताया अपसिद्धान्तत्वादभिधेयत्वविपक्षाभावोऽप्रसिद्ध इत्याशयः । इत्यत आहेति नचालीकस्याभावप्रतियोगित्ववज्ज्ञानविषयत्वस्यापि नैयायिकाननुमततया कथं विपक्षत्वज्ञानाभावरूपविपक्षत्वव्याघातः सम्भवतीति वाच्यम् , अभिधेयत्वप्रकारेण भासमानाभावप्रकारकनिश्चयीयविशेष्यत्वरूपाभिधेयत्वविपक्षत्वस्य भ्रमज्ञाननिष्ठतया तदसिद्धेरेवाभिहितत्वात् अधिकमभिहितं प्रागिति ध्येयम् ।

एवञ्चेत्यादेरवतरणमाह टीकायां नन्विति अत्यन्ताभावप्रतियोगित्वस्य व्यापकं यद् भेदप्रतियोगितावच्छेदकत्वरूपं व्यावृत्तत्वमेतावन्मात्रोक्तौ गननाभावाभावरूपात्यन्ताभावप्रतियोगित्वस्य गगनाभावेऽपि सत्त्वात् तत्र तादृशव्यावृत्तत्वविरहेणात्यन्ताभावप्रतियोगित्वव्यापकत्वं भेदप्रतियोगितावच्छेदकत्वरूपव्यावृत्तत्वे न संभवति इत्यतो वृत्तिमत्त्वविशिष्टस्येत्युक्तम् । वृत्तिमत्त्वञ्चात्यन्ताभावविशेषणं नतु अत्यन्ताभावप्रतियोगित्वविशेषणम्, तथा सति निरुक्तगगनाभावे व्यभिचारतादवस्थ्यं स्यात् । तत्र गगनरूपात्यन्ताभावप्रतियोगित्वस्य वृत्तिमत्त्वस्य च सत्त्वात् । नच वृत्तिमान् यो गगनात्यन्ताभावः तत्प्रतियोगित्वस्य गगने वर्त्तमानतया तत्र भेदप्रतियोगितावच्छेदकत्वविरहेण वृत्तिमत्त्वविशिष्टस्यात्यन्ताभावस्य प्रतियोगित्वव्यापकत्वमपि व्यावृत्तत्वे दुर्लभं स्यादिति वाच्यम् , वृत्तिमत्त्वे सतीत्यनेनात्यन्ताभावप्रतियोगिनो विशेषणीयत्वात् । तथाच वृत्तिमत्त्वे सति वृत्तिमदत्यन्ताभावप्रतियोगित्वव्यापकं यद्व्यावृत्तत्वमित्यस्य

जागदीशी

**व्यापकं यद् व्यावृत्तत्वं तदभावेनैव वृत्तिमतोऽभिधेयत्वस्य अत्यन्ताभावाप्रतियोगित्वरूपकेवलान्वयित्वं साधनीयमत एवाह मूले**

नारायणी

पर्यवसिततया गगनादौ व्यभिचारासम्भवात्। न च तथापि संयोगाभावाभावरूपवृत्तिमदत्यन्ताभावप्रतियोगित्वस्य वृत्तिमत्त्वविशिष्टस्य संयोगाभावे सत्त्वात् तत्र भेदप्रतियोगितावच्छेदकत्वरूपव्यावृत्तत्वविरहाद् व्यभिचार इति वाच्यम्, वृत्तिमत्त्वविशिष्टस्येत्यनेन स्वप्रतियोग्यनधिकरणवृत्तित्वविशिष्टस्यात्यन्ताभावस्य प्रतियोगित्वव्यापकमित्यादेरेव विवक्षितत्वात्। संयोगाभावाभावप्रतियोगिनः संयोगाभावस्यानधिकरणताया अप्रसिद्धतया स्वपदेन संयोगाभावाभावस्योपादानासम्भवात् गगनाभावाभावप्रतियोगिनोऽनधिकरणत्वस्याप्यप्रसिद्ध्या स्वपदेन गगनाभावाभावस्य गगनाभावप्रतियोगिनो गगनाधिकरणस्याप्यप्रसिद्धतया गगनाभावस्यापि स्वपदेनोपादातुमशक्यत्वात् निरुक्तविवक्षणेन पूर्वोक्तदोषाणामनवकाशादिति ध्येयम्।

तथाच स्वप्रतियोग्यनधिकरणवृत्तितावदत्यन्ताभावप्रतियोगित्वं यत्र यत्र तत्र तत्रव भेदप्रतियोगितावच्छेदकत्वरूपव्यावृत्तत्वमित्येवं व्याप्तिः पर्यवसिता। एवञ्चाभिधेयत्वादिकमवश्यं वृत्तिमदत्यन्ताभावाप्रतियोगित्वरूपकेवलान्वयित्ववत् वृत्तिमदत्यन्ताभावप्रतियोगित्वव्यापकस्य भेदप्रतियोगितावच्छेदकत्वरूपव्यावृत्तत्वस्याभावादित्यनुमानेन नैयायिकानामभिधेयत्वादौ केवलान्वयित्वसिद्धिस्स्यात्, अतो निरुक्तनैयायिकानुमाने अथेत्यादिशङ्कितुर्मतमवलम्ब्य स्वरूपासिद्धिमाह मूले एवञ्चेतीत्यवतरणतात्पर्यं वर्णयति **तदभावेनैवेति** वृत्तिमदत्यन्ताभावप्रतियोगित्वव्यापकव्यावृत्तत्वाभावेनैवेत्यर्थः। **वृत्तिमत इत्यादि** अत्यन्ताभावाप्रतियोगिन्यपि वृत्तिमत्त्वविशेषणमस्तीत्याशयेन वृत्तिमत्त्वमभिधेयत्वविशेषणमुक्तम्। अन्यथा स्वप्रतियोग्यनधिकरणवृत्त्यन्ताभावाप्रतियोगित्वस्य गगनेऽपि सत्त्वात्तत्र व्यभिचारापत्तिर्दुर्वारा स्यात्। **अत्यन्ताभावेति**

जागदीशी

एवञ्चेति । तथा च अत्यन्ताभावप्रतियोगित्वव्यापकस्य व्यावृत्तत्वस्य अभाव एवाऽभिधेयत्वे स्वरूपासिद्ध एवेति भावः । यथाश्रुते अत्यन्ताभावाप्रतियोगित्वरूपकेवलान्वयित्वाखण्डकत्वेन व्यावृत्तत्वानुमाने अर्थान्तरत्वापत्तः। गोत्ववदिति। अत्र च गोत्वं व्यति-

नारायणी

स्वप्रतियोग्यनधिकरणवृत्तीत्यादिः । तेन संयोगाभावस्य न केवलान्वयित्वहानिः । एवञ्चेत्यादेर्भावमाह तथाचेति निरुक्तरीत्या एवञ्चेत्यादेरवतरणव्याख्याने चेत्यर्थः । स्वरूपासिद्धएवेति कुतोऽपि व्यावृत्तमित्यनुमानाद् व्यावृत्तत्वाभावोऽभिधेयत्वादावसिद्ध एवेति हृदयम् । ननूक्तमूलस्य यथाश्रुतार्थपरित्यागोऽयुक्त इत्यतआह यथाश्रुते इति तथा चाभिधेयत्वं कुतोऽपि व्यावृत्तमित्यनुमानेन यथाश्रुतेऽभिधेयत्वादौ वृत्तिमदत्यन्ताभावाप्रतियोगित्वरूपकेवलान्वयित्वखण्डनस्यासम्भवाद् व्यावृत्तत्वानुमानमर्थान्तरग्रस्तं स्यात्, एकसिद्धावन्यस्य सिद्धेरर्थान्तरत्वादिति भावः ।

मूले– अभिधेयत्वमिति अभिधेयत्वादिकमित्यर्थः । तेन प्रमेयत्ववाच्यत्वादेरपि पक्षान्तर्गतत्वं तन्मतासिद्धं नाशङ्कनीयम् । कुतोऽपीति किञ्चिन्निष्ठभेदप्रतियोगितानिरूपितस्वरूपसम्बन्धावच्छिन्नावच्छेदकतावदित्यर्थः । धर्मत्वात्=वृत्तिमत्त्वात् । स्वरूपसम्बन्धावच्छिन्नवृत्तितावत्त्वादिति यावत् ।

गोत्ववदिति यत्र यत्र स्वरूपसम्बन्धावच्छिन्नभेदप्रतियोगितावच्छेदकत्वरूपव्यावृत्तत्वाभावः तत्र तत्र स्वरूपसम्बन्धावच्छिन्नवृत्तिमत्त्वाभावः, यथा गोत्वमित्यर्थः । गोत्ववदित्यस्य व्यतिरेकेण दृष्टान्ततामुपपादयति टीकायां अत्र चेति=गोत्ववदिति मूले चेत्यर्थः। व्यतिरेकेण दृष्टान्त इति यत्र साध्याभावःतत्र हेत्वभावः,यथा गोत्वमित्याकारकदृष्टान्त इत्यर्थः।

जागदीशी

रेकेण दृष्टान्तः, अन्यथा स्वरूपसम्बन्धेन व्यावृत्तत्वस्यैव तत्सम्बन्धावच्छिन्नकेवलान्वयित्वखण्डकतया तस्य गोत्वजातौ असत्त्वेन अन्वयदृष्टान्तत्वासम्भवात् । वाक्यत्वं वा प्रकृते गोत्वं, वाक्यस्यापि

नारायणी

गोत्वस्यान्वयेन दृष्टान्ततां निराकरोति अन्यथेति गोत्वस्यान्वयेन दृष्टान्तत्वाभ्युपगमे इत्यर्थः। स्वरूपसम्बन्धेनेति अवच्छिन्नत्वं तृतीयार्थः। तस्य च भेदप्रतियोगितावच्छेदकत्वरूपव्यावृत्तत्वे अन्वयः। तत्संबंधेति। स्वरूपसम्बन्धावच्छिन्नं यद् वृत्तिमदत्यन्ताभावाप्रतियोगित्वरूपकेवलान्वयित्वं तत्खण्डकतयेत्यर्थः। तथाच यत्र यत्र स्वरूपसम्बन्धावच्छिन्नभेदप्रतियोगितावच्छेदकत्वं तत्र तत्रैव स्वरूपसम्बन्धावच्छिन्नवृत्तिमदत्यन्ताभावप्रतियोगित्वमित्यपि व्याप्तिसम्भवाद् व्यावृत्तात्वस्य वृत्तिमदत्यन्ताभावाप्रतियोगित्वरूपकेवलान्वयित्वखण्डकत्वं संभवतीति हृदयम्। तस्य = स्वरूपसम्बन्धावच्छिन्नव्यावृत्तात्वस्य गोत्वजाताविति गोत्वे समवायसम्बन्धावच्छिन्नभेदप्रतियोगितावच्छेदकत्वरूपव्यावृत्तात्वस्यैव सत्त्वं दृढीकर्त्तुं गोत्वजातावित्युक्तम् इति ध्येयम्।

असत्त्वेन = तादृशव्यावृत्तात्वरूपसाध्यविरहेण अन्वयदृष्टान्तत्वासम्भवादिति यत्र स्वरूपसम्बन्धेन वृत्तिमत्त्वहेतोस्तत्र स्वरूपसम्बन्धावच्छिन्नव्यावृत्तात्वं तच्च समवेतगोत्वजातौ नास्त्यतो गोत्वस्य अन्वयेन दृष्टान्तत्वं न सम्भवतीति भावः।

ननु परनये व्यतिरेकव्याप्तेरसत्त्वाद् व्यतिरेकेण दृष्टान्तस्य तन्मतसिद्धानुमानाङ्गत्वमेव न सम्भवतीत्यत आह वाक्यत्वं वेति प्रकृते = मूलोक्तदृष्टान्तस्थले। तथाच साकाङ्क्षपदसमूहत्वरूपवाक्यत्वस्य स्वरूपसम्बन्धावच्छिन्नव्यावृत्तात्वरूपसाध्यस्यापि सत्त्वेन गोत्वमन्वयेनैव दृष्टान्त इत्याशयः।

चिन्तामणिः

व्यावृत्तत्वस्याऽव्यावृत्तत्वे व्यावृत्तत्वमेव केवलान्वयि, व्यावृत्तत्वे यत एव व्यावृत्तं व्यावृत्तत्वं तदेव केवलान्व-

दीधितिः

कत्वं तच्च लघुगुरुसाधारणं गगनादिनिष्ठान्योन्याभावप्रति-

जागदीशी

गोशब्दशक्यत्वादिति ध्येयम् । ननु धर्मत्वहेतोरनैकान्तिकत्वे कथितक्रमेण अभिधेयत्वस्य व्यावृत्तत्वस्यैव वा केवलान्वयित्व-सम्भवात् अत्यन्ताभावप्रतियोगित्वादेर्लक्ष्यान्तरस्यानुसरणं मूल-कृतामयुक्तम् अतस्तदवतरणिकामाह नन्विति । अथान्योन्या-भावप्रतियोगितावच्छेदकत्वरूपं व्यावृत्तत्वं प्रमेयधूमत्वादौ नास्तीति तत्रैव धर्मत्वं निरुक्तव्यावृत्तत्वव्यभिचारीत्यत आह

नारायणी

ननु गोपदार्थस्य वाक्यस्वरूपत्व एव गोत्वं वाक्यत्वस्वरूपं भवितु-मर्हति, नान्यथा इत्यत आह वाक्यस्यापीति गोपदशक्यत्वात् = गोपद-जन्यबोधविषयत्वप्रकारकेच्छीयविशेष्यतावत्त्वात् इति दिक् ।

निरुक्तहेतोर्व्यभिचारित्वं प्रदर्शयितुमाह मूले व्यावृत्तत्वस्येति भेदप्रतियोगितावच्छेदकत्वरूपनिरुक्तसाध्यस्येत्यर्थः । अव्यावृत्तत्वे = भेदप्रतियोगितानवच्छेदकत्वे सर्वत्र सत्त्वे इति यावत् । व्यावृत्तत्वमेव = भेदप्रतियोगितावच्छेदकत्वमेव केवलान्वयिव्यावृत्तत्वरूपसाध्यविरहि, तथाच व्यावृत्तत्वं यदि अभिधेयत्वादौ सर्वत्र वर्त्तमानं स्यात् तदा तत्रापि धर्मत्वहेतोस्सत्त्वात्तत्र व्यावृत्तत्वरूपसाध्यस्यासत्त्वेन भवति धर्मत्वस्य हेतोर्व्यभिचारित्वमिति भावः ।

ननु यदि व्यावृत्तत्वमपि कुतश्चिद् व्यावृत्तमेवेत्युच्यते तदापि व्यभि-चारमाह । व्यावृत्तत्व इति व्यावृत्तत्वस्येत्यादिः भेदप्रतियोगितावच्छे-

चिन्तामणिः

यीति धर्मत्वस्यानैकान्तिकत्वात्। एवमत्यन्ताभावप्रति-
योगित्वस्यात्यन्ताभावाप्रतियोगित्वे अत्यन्ताभावप्रति-

दीधितिः

योगितावच्छेदकञ्चेति न व्यभिचार इत्यत आह एवमिति ।

जागदीशी

तच्चेति। व्यावृत्तत्वं यतो व्यावृत्तं तदेव केवलान्वयीति धर्मत्वं तत्रैव अनैकान्तिकम् इति यदुक्तं तदपाकुर्वन्नाह गगनादीति। तथा च

नारायणी

दकत्वे इत्यर्थः। यतएव = यस्माद् वस्तुन एव व्यावृत्तं = भेदप्रतियोगितावच्छेदकं व्यावृत्तत्वं = भेदप्रतियोगितावच्छेदकत्वम्। तदेव = तादृशवस्त्वेव केवलान्वयीति तथाच धर्मत्वहेतोस्तादृशवस्तुन्यपि वाच्यत्वादौ वर्त्तमानतया तत्र व्यावृत्तत्वरूपसाध्यस्यासत्त्वात् धर्मत्वहेतोर्व्यभिचारित्वमिति तात्पर्य्यम्। धर्मत्वस्य = विरुक्तव्यावृत्तत्वसाधकहेतोः। अनैकान्तिकत्वादिति यभिचारित्वेनेत्यादिः। तथाच नोक्तव्यावृत्तत्वानुमानं सम्भवतीति हृदयम्।

निरुक्तधर्मत्वहेतोर्व्यभिचारित्वं वारयन् एवमित्यादेरवतरणमाह दीधितौ नन्विति अथ यदि धर्मत्वहेतोः कम्बुग्रीवादिमत्त्वादौ गुरुधर्मे वर्त्तमानतया तत्र भेदप्रतियोगितावच्छेदकत्वरूपव्यावृत्तत्वसाध्यस्य विरहाद् व्यभिचारस्य स्फुटतया तद्वारणं दुर्घटं स्यादित्युच्यते तदाप्याह तच्चेति भेदप्रतियोगितावच्छेदककत्वञ्चेत्यर्थः। लघ्विति लघुधर्मे घटत्वादौ गुरुधर्मे कम्बुग्रीवादिमत्त्वादौ च वर्त्तमानमित्यर्थः। एवञ्च धर्मत्वहेतोः कम्बुग्रीवादिमत्त्वादौ सत्त्वेऽपि तत्र व्यावृत्तत्वरूपसाध्यस्य भेदप्रतियोगितावच्छेदकत्वस्यापि सत्त्वाद्धर्मत्वं हेतौ न व्यभिचारः।

चिन्तामणिः

योगित्वमेव केवलान्वयि, अत्यन्ताभावप्रतियोगित्वे अन्निष्ठात्यन्ताभावप्रतियोग्यत्यन्ताभावप्रतियोगित्वं तद्देव केवलान्वयि । न चात्यन्ताभावप्रतियोगित्वं व्यावृ-

दीधितिः

नन्वभावप्रतियोगित्वादिकमभावादिव्यक्तिभेदान्नानैव, अनुगत-

जागदीशी

व्यावृत्तत्वं गगनादिभ्य एव व्यावृत्तं भविष्यति तेषाञ्च धर्मत्वरूप-

नारायणी

ननु यत एव व्यावृत्तं व्यावृत्तत्वं तस्यैव वाच्यत्वाभिधेयत्वादेर्धर्मत्वरूपहेतुमतः साध्याभाववत्त्वेन व्यभिचारो दुर्वार इत्यत आह गगनादिभ्य इति। अयमाशयः वाच्यत्वप्रमेयत्वादेः पक्षसमत्वात् तत्र व्यावृत्तत्वं सन्दिग्धं व्यावृत्तत्वाभाववत्तया निश्चितं तु गगनादिकमेव। तत्र च वृत्तिमत्त्वरूपधर्मत्वहेतोरसत्त्वात्कुतो व्यभिचारः। यत इत्यादिमूलोक्तयत्पदेन गगनादेरेव धर्त्तुं शक्यतया तत्र च हेतोरसत्त्वादेव व्यभिचारस्यासम्भवादुक्तव्यावृत्तत्वानुमानस्य निर्दोषतया केवलान्वयित्वखण्डनं सुदृढमेव भवतीति।

नन्वित्यादिदीधितिमवतारयितुमाह टीकायां ननु धर्मत्वहेतोरिति यथोक्तः वृत्तिमत्त्वहेतोरित्यर्थः। अनैकान्तिकत्वे व्यभिचारित्वेऽपीत्यर्थः। कथितक्रमेण=व्यावृत्तत्वस्येत्याद्यभिधानेन । व्यावृत्तत्वस्यैव वा=भेदप्रतियोगितावच्छेदकत्वस्यैव वा। केवलान्वयित्वसम्भवात्= केवलान्वयिसाध्यत्वसम्भवात्। लक्षणान्तरस्य=व्यावृत्तत्वाद्यतिरिक्तलक्ष्यस्य। तदवतरणिकाम्= एवमित्यादेरवतरणिकाम्। आहेति दीधितिकार इति शेषः। व्यावृत्तत्वं व्यावृत्तत्वरूपसाध्यम्। प्रमेयधूमत्वादौ=

## नारायणी

प्रमेयधूमत्वरूपगुरुधर्मे । नास्तीति तथाच तत्र धर्मत्वहेतोः सत्त्वेन व्यावृत्तत्वरूपसाध्यस्य विरहाद् व्यभिचारवारणं दुःशक्यमिति हृदयम् । व्यावृत्तत्वं = भेदप्रतियोगितावच्छेदकत्वम् । तत्रैव = तस्मिन् वस्तुनि प्रमेयत्वादावेव । तदपाकुर्वन्=तादृशरीत्या मूलाभिहितं व्यभिचारं वारयन् नहि पक्षे पक्षसमे व्यभिचारो दोषः इति नियमाद् वाच्यत्व-प्रमेयत्वादेः पक्षसमतया तत्र व्यभिचारस्यादोषत्वाद् गगनादौ च वृत्ति-मत्त्वरूपधर्मत्वहेतोः अवर्त्तमानत्वादेव न व्यभिचारः सम्भवतीत्याह तथा चेति तत्र = धर्मत्वहेतौ । अनैकान्तिकत्वशङ्कापि = व्यभिचार-शङ्कापि । उक्तानुमानस्य = अभिधेयत्वं कुतोऽपि व्यावृत्तमित्यनुमानस्य । अप्रत्यूहत्वात्= दोषरहितत्वात् । केवलान्वयित्वम्= वृत्तिमदत्यन्ता-भावाप्रतियोगित्वम् । सम्भवतीति व्यावृत्तत्वस्यैवाभिधेयत्वादौ सिद्धि-सम्भवे वृत्तिमदत्यन्ताभावप्रतियोगित्वाव्यापकस्य व्यावृत्तत्वस्य योऽ-भावस्तस्याभिधेयत्वादावसिद्धेरिति हेतोरसिद्धतया कुतः अत्यन्ता-भावाप्रतियोगित्वरूपं केवलान्वयित्वमभिधेयत्वादौ सेत्स्यतीत्यतो मूल-कृता लक्षणान्तरमेवानुसृतमिति समुदितग्रन्थतात्पर्य्यम् ।

वस्तुतो मूले एवञ्चेत्यादिना व्यावृत्तत्वस्यात्यन्ताभावप्रतियोगित्वरू-पत्वेऽपि व्यभिचारो दुर्वारः इत्येवमत्यन्ताभाव-इत्यस्याभिप्रायः इत्यस्मद् गुरुचरणाः श्रीभट्टाचार्यपादाः ।

मूलेऽत्यन्तेति वृत्तिमदत्यन्ताभावप्रतियोगित्वस्येत्यर्थः । अत्यन्ता-भावाप्रतियोगित्वे=सर्वत्र सत्त्वे । केवलान्वयीति अत्यन्ताभावप्रति-योगित्वरूपव्यावृत्तत्वात्मकसाध्यविरहीत्यर्थः । तथाच धर्मत्वहेतोरत्य-न्ताभावप्रतियोगित्वेऽपि वर्त्तमानतया तत्र व्यावृत्तत्वरूपात्यन्ताभाव-प्रतियोगित्वात्मकसाध्यविरहात् धर्मत्वहेतोर्व्यभिचार इति भावः । दीधितिकृन्मते तु अत्यन्ताभावप्रतियोगित्वं यदि अभिधेयत्ववाच्यत्वादौ

**चिन्तामणिः**

त्त्वञ्च नानेति वाच्यम् । अनुगतप्रतीतिबलेन गोत्वव-

**दीधितिः**

व्यवहारस्तु कथञ्चिद्विशेषणतावच्छेदकधर्मानुगमादेव, एवञ्च

**जागदीशी**

हेत्वभावादेव न तत्र अनैकान्तिकत्वशङ्कापि स्थास्यतीति भावः ।

**नारायणी**

सर्वत्र वर्त्तमानमित्युच्यते । तदा वृत्तिमदत्यन्ताभावाप्रतियोगित्वस्यात्यन्ताभावप्रतियोगित्वनिष्ठतया अत्यन्ताभावप्रतियोगित्वस्यैव लक्ष्यत्वसम्भवात् लक्ष्याप्रसिद्धया लक्षणं नासम्भवीति हृदयम् ।

अथ यदि अत्यन्ताभावप्रतियोगित्वमपि अत्यन्ताभावप्रतियोगि स्यात् । तथापि लक्षणाप्रसिद्धिः सम्भवति इत्याह अत्यन्ताभावप्रतियोगित्व इति अत्यन्ताभावप्रतियोगित्वस्येत्यादिः । यन्निष्ठेति यादृशवस्तुनि । अत्यन्ताभावप्रतियोगित्वं नास्ति तदेव केवलान्वयि । तच्च वस्तु अभिधेयत्ववाच्यत्वादिकमेव नान्यद् वक्तुं शक्यमित्यभिधेयत्वादेरेव लक्ष्यत्वप्रसिद्धया न लक्षणमसम्भवीति तात्पर्यम् । भेदप्रतियोगितावच्छेदकत्वरूपव्यावृत्तत्वमपि न लक्ष्यं भवितुमर्हति इत्याशङ्कते मूले नचेति वाच्यमिति परेणान्वयः **नानेति** । तथाच घटादिनिष्ठप्रतियोगित्वादेः प्रतियोगिभेदेन भिन्नतया एकप्रतियोगिनि अपरप्रतियोगित्वाभावस्य चालनीन्यायेन वर्त्तमानतया सर्वस्यैवात्यन्ताभावप्रतियोगित्वस्यात्यन्ताभावप्रतियोगितया अत्यन्ताभावप्रतियोगित्वादेः केवलान्वयित्वाभिधानमसङ्गतं स्यादिति भावः ।

समाधत्ते **अनुगतेति** अयं प्रतियोगी-प्रतियोगीत्यनुगतानुभवबलेनात्यन्ताभावप्रतियोगित्वस्य सर्वत्र गौर्गौरिति प्रतीतिबलाद् गोत्वस्येवानु-

चिन्तामणिः

त्तयोरेकत्वसिद्धेः। तत्र न तावदव्याप्यवृत्त्यत्यन्ताभावः केवलान्वयी, तस्य प्रतियोग्यवच्छिन्नेऽप्यत्यन्ताभावात् अत्यन्ताभावाप्रतियोगिनश्च केवलान्वयित्वात्, नाप्याश्रयनाशजन्यगुणनाशात्यन्ताभावः, तस्य नाशस्य सर्वत्रात्यन्ताभावादिति वाच्यम्, यत्र हि प्रतियोगिप्रागभावो

दीधितिः

लक्ष्याप्रसिद्ध्या लक्षणासम्भव इत्याशङ्कते तत्रेत्यादि। यत्र

जागदीशी

न व्यभिचार इति। तथा च उक्तानुमानस्य अप्रत्यूहत्वात् नाभिधेयत्वव्यावृत्तत्वयोः केवलान्वयित्वं सम्भवतीति कृत्वैव लक्ष्यान्तरमनुसृतमिति भावः। ननु लक्ष्याप्रसिद्ध्या लक्षणासम्भवपरस्य न तावदित्यादिमूलस्यासङ्गतिः, अत्यन्ताभावप्रतियोगित्वादेरेव लक्ष्यस्य व्यवस्थापितत्वात् अतस्तस्य लक्ष्यत्वं विघटयन्नाह न-

नारायणी

गतत्वसिद्धेरित्यर्थः। एवञ्च प्रतियोगित्वादेर्गोत्ववदेकतया सर्वत्र तस्य सत्त्वे तस्यैव केवलान्वयित्वमित्याशयः।

तत्र न तावदित्यादिमूलावतरणमाह दीधितौ नन्वभावप्रतियोगित्वेति। अभावप्रतियोगित्वं व्यावृत्तत्वञ्चेत्यर्थः। आदिपदेन व्यावृत्तत्वस्यैवोपग्रहात्। तत्त्वं अभावादेः परस्परभिन्नत्वं सर्ववादिसिद्धमित्याह। अभावादिव्यक्तिभेदादिति आदिना प्रतियोगिव्यक्तिपरिग्रहः। नानेति तथाच प्रतियोगित्वं व्यावृत्तत्वञ्चैकमेव न सम्भवतीति भावः।

जागदीशी

न्विति । प्रतियोगित्वादिकमित्यादिना व्यावृत्तत्वस्योपग्रहः । अभावादीत्यादिना प्रतियोगिव्यक्तीनामुपग्रहः । तेन यावत्त्वावच्छिन्नाभावस्यैकत्वेऽपि तस्य प्रतियोगित्वं नैकं येन तत् केवलान्वयि स्यादिति ध्येयम् । अनुगतेति । अभावप्रतियोगीत्यादिव्यवहारो

नारायणी

नन्वेवमभावप्रतियोगीत्याद्यनुगतव्यवहारो न स्यादित्यत आह अनुगतव्यवहारस्त्विवति अभावप्रतियोगीत्यादिव्यवहार इत्यर्थः। टीकायां प्रतियोगित्वादिकमित्यत्रादिपदसंग्राह्यमाह व्यावृत्तत्वस्योपग्रह इति ।

भेदप्रतियोगितावच्छेदकत्वस्योपग्रह इत्यर्थः। अभावादीत्यादिपदग्राह्यमाह प्रतियोगीति तेन=आदिपदात्प्रतियोगिव्यक्तीनामुपग्रहेण । यावत्त्वेति । यावान्नास्तीत्याकारकाभावस्य तस्य=यावान्नास्तीत्याकारकाभावस्य नैकम्=यावन्निष्ठप्रतियोगिताया अपि प्रत्येकव्यक्तिभिन्नत्वात् तत्=यावान्नास्तीत्यभावप्रतियोगित्वम्। केवलान्वयि स्यादिति तथाच यावान्नास्तीत्यभावप्रतियोगित्वं यद्येकं स्यात् तदा तादृशप्रतियोगित्वस्य सर्वत्र वर्त्तमानतया तस्यैव केवलान्वयिलक्षणलक्ष्यत्वं सम्भवति । अतः प्रतियोगिव्यक्तीनां भेदेऽपि प्रतियोगित्वस्य भिन्नतया तत्र तत्प्रतियोगित्वाभावप्रतियोगित्वस्यैव तत्तत्प्रतियोगित्वे सर्वत्र वर्त्तमानतया अत्यन्ताभावप्रतियोगित्वरूपं केवलान्वयित्वं यावान्नास्तीत्यभावीयप्रतियोगितायां दुर्लभमित्याशयः ।

नन्वेवमभावव्यक्तिभेदात्प्रतियोगित्वस्यापि भिन्नत्वे अभावप्रतियोगीत्यनुगतव्यवहारो न स्यादतस्तादृशव्यवहारं प्रदर्शयन् अनुगतव्यवहारप्रयोजकं दीधितिकारोक्तं प्रदर्शयति । अभावत्वादेरनुगमादित्यर्थः इति । तथाच अयमभावप्रतियोगीति व्यवहारस्तु अभावत्वादेरनुगतत्वात्सम्भवतीति हृदयम । कथञ्चिदित्याद्यभिधानप्रयोजनमाह अनुगतेति प्रयो-

दीधितिः

हीत्याद्यभ्युपगमवादः । वस्तुतो भूतलादिदेशे समये च तस्य वर्त्तमानत्वादाकाशाभावतुल्यत्वाच्च । अभावाभावस्येति साव-

जागदीशी

विशेषणतावच्छेदकस्य अभावत्वादेरनुगमादित्यर्थः । अनुगतगोचरो व्यवहार एव नास्ति अभावत्वादेरपि तत्तत्स्वरूपसम्बन्धरूपत्वादित्याशयेनोक्तं कथञ्चिदिति । एवञ्चेति । अत्यन्ताभावप्रतियोगित्वादेर्नानात्वे चेत्यर्थः । इत्याशङ्कत इति । एवञ्च मूले तत्र इत्यस्य अत्यन्ताभावप्रतियोगित्वादीनां नानात्व इत्यर्थं इति ध्येयम् ।

नारायणी

जकस्यानुगतत्वाभावादनुगत एव व्यवहारो न सम्भवतीत्यर्थः। कुत इत्याकाङ्क्षायामाह अभावत्वादेरपीति आदिपदात्प्रतियोगितात्वानुयोगितात्वादिपरिग्रहः। तत्तदिति अभावत्वप्रतियोगितात्वादिरूपस्वरूपसम्बन्धविशेषपरत्वादित्यर्थः। कथञ्चिदिति कथञ्चिदित्युक्तं दीधितिकृतेति शेषः। अत्यन्ताभावप्रतियोगित्वादेरित्यत्रादिना व्यावृत्तत्वरूपभेदप्रतियोगितावच्छेदकत्वस्योपग्रहः। नानात्व इति तथाच तत्तत्प्रतियोगित्वाद्यभावमादायैव प्रतियोगित्वादेः केवलान्वयित्वभङ्ग इति भावः। मूलोक्ततत्रेत्यस्य तात्पर्यमाह अत्यन्तेति मूले तत्रेति अत्यन्ताभावप्रतियोगित्वस्य भेदप्रतियोगितावच्छेदकत्वस्य च नानात्वे इत्यर्थः। अव्याप्यवृत्त्यभावः= कपिसंयोगाभावः। तस्य=कपिसंयोगाभावस्य। प्रतियोग्यवच्छिन्ने= कपिसंयोगवद्देशावच्छिन्ने अत्यन्ताभावात्=कपिसंयोगाभावाभावस्य सत्त्वात् ।

नन्वेवं तथापि कपिसंयोगाभावस्य कथं न केवलान्वयित्वमित्यत आह अत्यन्तेति तथाच कपिसंयोगाभावाभावप्रतियोगितायाः कपिसंयोगाभावे सत्त्वात् कपिसंयोगाभावाभावे न केवलान्वयीति भावः।

चिन्तामणिः

वर्त्तते तत्र न तदत्यन्ताभावो वर्त्तते, तथाच नाशस्य प्रागभावो यत्र नाशप्रतियोगिसमानदेशे वर्त्तते तत्र कथं नाशात्यन्ताभावो वर्त्तताम्, तर्हि नाशस्य तत्र वृत्तिः स्यादिति चेन्न, पूर्वं तत्र नाशप्रागभावस्यैव सत्त्वादुत्तरकाले आश्रय-

दीधितिः

धारणम्। भावत्वात् = प्रतियोगित्वात्। यदाहुराचार्य्याः,

जागदीशी

अत्यन्ताभावस्य प्रागभावेन समं विरोधस्य नव्यैरुपेक्षितत्वादाह

नारायणी

पुनः शङ्कते मूले नाप्येतिनापि घटनाशजन्यो यो रूपादिरूपगुणनाशः तदत्यन्ताभावः केवलान्वयीति पूर्वेण सम्बन्धः। नापि वाच्यमित्यस्य हेतुमनुक्त्वैव तटस्थः शङ्कते यत्रेति यस्मिन्नधिकरणे इत्यर्थः। प्रतियोगिनो रूपनाशस्य प्रागभावो वर्त्तत इत्यर्थः। अत्यन्ताभावस्य त्रितयप्रतियोगिकत्वमतेनेदम्। तत्र = रूपनाशप्रागभावाधिकरणे न तदत्यन्ताभावः = न तादृशरूपनाशात्यन्ताभावः। तादृशात्यन्ताभावप्रतियोगित्वस्य रूपादिगुणनाश इव गुणनाशप्रागभावेऽपि सत्त्वं प्राचीनमतसिद्धमिति हृदयम्।

उपसंहरति तथाचेति नाशस्येति गुणादिनाशस्येत्यर्थः। यत्र = यस्मिन् नाशेति रूपादिनाशप्रतियोगिरूपाद्यधिकरणे इत्यर्थः। कथमिति तथाच रूपनाशात्यन्ताभावोऽपि रूपनाशप्रतियोगिरूपवति न वर्त्तते इति कथं तदत्यन्ताभावस्य केवलान्वयित्वं तस्य सर्वत्रावर्त्तमानत्वादिति भावः। रूपनाशप्रागभाववति रूपाधिकरणे यदि रूपनाशात्यन्ताभावो वर्त्तते तदा तादृशनाशस्यापि तत्र वृत्तिर्निराबाधा इत्याह तर्हीति-इति

दीधितिः

'स्वाभावविरहात्मत्वं वस्तुनः प्रतियोगिते'ति । प्रतियोग्येवेति ।

जागदीशी

यत्र हीत्यादिति । तत् किं तादृशनाशात्यन्ताभावः केवलान्वयीत्यतः स्वयं दूषणमाह वस्तुतः इति । तस्येति । तादृशगुणनाशस्येत्यर्थः । तथा च इह भूतले घटनाशाद् गुणो नष्ट

नारायणी

वादिनः। पूर्वपक्षं समाधत्ते चेन्नेति पूर्वं = नाशात्पूर्वम् । तत्र = नाशप्रतियोगिसमानदेशे । उत्तरकाले = घटनाशोत्तरकाले । आश्रयस्य = घटादेः। तथाच गुणनाशप्रागभावस्य पूर्वं घटादौ सत्त्वेऽपि घटविनाशकाले तत्र घटस्यैवाभावान्न घटप्रागभावस्यापि तत्र सत्त्वमिति घटनाशात्यन्ताभावस्य गगनाभावतुल्यतया सर्वत्र वर्त्तमानत्वात् केवलान्वयित्वं दुर्वारमित्याशयः । यत्रहीत्यादिदीधितिमवतारयति टीकायामत्यन्ताभावस्येति। प्रागभावेन समं = स्वप्रतियोगिप्रागभावेन समं । विरोधस्य = प्रतियोगिप्रागभावप्रतियोग्यत्यन्ताभावयोरेकत्रावर्त्तमानत्वस्य । नव्यैः दीधितिकारप्रभृतिभिः । एवं सति विरोधाभावे व्यवस्थापिते आश्रयनाशजन्यगुणनाशात्यन्ताभावस्य केवलान्वयित्वं दुर्वारमिति नाप्याकाशेत्यादिमूलग्रन्थानुत्थितिप्रसङ्गः इत्यतस्तादृशनाशात्यन्ताभावस्य केवलान्वयित्वनिराकरणपरं वस्तुत इत्यादिग्रन्थमवतारयति तत्किमिति । प्रश्नार्थकं किम्पदमित्यवधेयम्। तादृशेति आश्रयनाशजन्यगुणनाशात्यन्ताभाव इत्यर्थः । स्वयम् = दीधितिकारः । दूषणं = केवलान्वयित्वनिराकरणम् तादृशेति घटादिरूपाश्रयनाशजन्यरूपादिरूपगुणनाशात्यन्ताभावस्येत्यर्थः। गुणनाशस्य भूतलादिदेशे गुणनाशस्य सत्त्वमुपपादयति तथाचेति इत्यादिप्रतीत्या इत्यत्रादिपदात् इदानीं घटनाशाद्-

चिन्तामणिः

स्यैवाभावात्। नाप्याकाशात्यन्ताभावः केवलान्वयी, तस्यापि प्रतियोगिरूपात्यन्ताभावप्रतियोगित्वात् । अभावात्यन्ता-

दीधितिः

प्रागभावादेरत्यन्ताभावाभावरूपत्वनयेऽपि न क्षतिः । तन्मतेऽ

जागदीशी

इत्यादिप्रतीत्या भूतलादावेव तादृशगुणनाशात्यन्ताभावस्य असत्त्वात् कुतस्तस्य केवलान्वयित्वमिति । वर्त्तमानत्वादित्यस्य नापि तादृश-गुणनाशात्यन्ताभावः केवलान्वयीति मूलेनान्वयः, नातः पञ्चम्यस-

नारायणी

गुणो नष्ट इत्यादिप्रतीतिपरिग्रहः। भूतलादावेवेत्यत्र आदिपदादेतत्काला-दिपरिग्रहः। तादृशेति आश्रयनाशजन्यगुणनाशात्यन्ताभावस्येत्यर्थः । असत्त्वादिति तादृशनाशात्यन्ताभावप्रतियोगिनो नाशस्यैव भूतलादौ सत्त्वान्न तादृशनाशात्यन्ताभावस्तत्र वर्त्तते इत्याशयः। तस्य = तादृश-नाशात्यन्ताभावस्य। केवलान्वयित्वमिति। तथाच घटादिनाशजन्य-गुणनाशस्य भूतलादौ कालेऽपि वर्त्तमानतया तदत्यन्ताभावस्य तत्रा-सत्त्वात्कथं तादृशात्यन्ताभावस्य केवलान्वयित्वं सम्भवतीति हृदयम्।

ननु तस्य वर्त्तमानत्वादिति पञ्चम्यसङ्गतिः हेतुत्वार्थकपञ्चम्या अन्व-यासम्भवात् इत्यत आह केवलान्वयीतीति तथाच मूले आश्रयनाश-जन्यनाशात्यन्ताभावः केवलान्वयीति तादृशनाशात्यन्ताभावस्य केवलान्वयित्वाभावे हेत्वनभिधानाद् दीधितौ हेतुत्वार्थकपञ्चम्यभिधा-नम्, नापि केवलान्वयीत्यनेन तादृशार्थस्यान्वय इति भावः।

पञ्चम्येति हेतुत्वार्थकेत्यादिः । इदानीं घटनाशाद् गुणो नष्टः इत्यादिप्रतीतेः कालिकसम्बन्धेन तादृशगुणनाशाधिकरणत्वावगाहि-

जागदीशी

ङ्गतिः । ननूक्तप्रतीतेरवच्छेदकत्वाख्यपरम्पराकालिकसम्बन्धा-भ्यामेव देशकालयोर्नाशवत्त्वावगाहित्वेनोपपत्तौ दैशिकविशेषणतया देशकालयोस्तादृशगुणनाशवत्त्वे मानाभावः,तथा च दैशिकसंबंधा-

नारायणी

त्वमेव स्वीकरणीयम्, एवमिह भूतले घटनाशाद् गुणो नष्ट इत्यादिप्रतीतेरपि अवच्छेदकतासम्बन्धेन तादृशगुणनाशवत्त्वावगाहित्वमेव कल्पनीयं नतु स्वरूपसन्बन्धेन तादृशगुणनाशवत्त्वं भूतलादौ कथमभ्युपगन्तव्यम् । एवञ्च स्वरूपसम्बन्धावच्छिन्नतादृशगुणनाशत्वावच्छिन्नप्रतियोगिताकात्यन्ताभावो भवति केवलान्वयी,तेन सम्बन्धेन तादृशगुणनाशस्य कुत्राप्यवर्त्तमानतया तदभावस्य सर्वत्र सत्त्वादित्येवं गगनाभावतुल्यत्वादित्यादि दीधितेरवतरणमाह ननूक्तेति इह भूतले घटनाशाद् गुणो नष्ट इति प्रतीतेः इदानीं घटनाशाद् गुणो नष्टः इति प्रतीतेश्चेत्यर्थः। अवच्छेदकत्वेतिक्रमात्पूर्वप्रतीतेरवच्छेदकत्वाख्यपरम्परासम्बन्धेन भूतलादिदेशस्य नाशवत्त्वावगाहित्वं द्वितीयप्रतीतेश्च कालिकसम्बन्धेन तादृशनाशवत्त्वावगाहित्वमवगन्तव्यम् ।

ननु स्वरूपसम्बन्धेनैव तादृशदेशकालयोर्नाशवत्त्वावगाहित्वमुक्तप्रतीतेर्वाच्यमित्यत आह दैशिकेति स्वरूपसंबन्धेनेत्यर्थः। देशकालयोः= भूतलसमययोः तादृशेति घटनाशजन्यगुणनाशाधिकरणत्वे इत्यर्थः। मानाभाव इति उक्तप्रतीतेः स्वरूपसम्बन्धातिरिक्तसम्बन्धेन देशकालयोर्नाशवत्त्वावगाहित्वसम्भवे प्रमाणान्तरेण स्वरूपसम्बन्धेन देशकालयोः तादृशनाशवत्त्वावगाहिप्रतीत्यन्तरस्यासिद्धत्वादिति भावः।

उपसंहरति तथाचेति दैशिकसम्बन्धेति स्वरूपसम्बन्धार्थकम् ।

जागदीशी

वच्छिन्नप्रतियोगिताकताद्दशगुणनाशस्य अत्यन्ताभावः तत्र स्थास्यत्येव अत आह आकाशेति। तस्येत्यनुषज्यते। तथा च आकाशात्यन्ताभाव इव प्रतियोगिस्वरूपात्यन्ताभावस्यैव प्रतियोगित्वं ताद्दशगुणनाशात्यन्ताभावेऽपि स्थास्यतीति तस्य केवलान्वयित्वं दुर्घटमिति भावः। यत्र यद्भावस्य अभावत्वं तत्र तद्भावप्रति-

नारायणी

तस्येत्यनुषज्यत इति घटनाशजन्यगुणनाशात्यन्ताभावस्येत्यनुषज्यते इत्यर्थः। भावमाह तथाचेति अयमभिप्रायः घटनाशजन्यगुणनाशस्य कुत्राप्यवर्त्तमानतया तदत्यन्ताभावः गगनाभावतुल्यः। एवञ्च गगनाभावाभावस्य प्रतियोगित्वं गगनाभावे स्थास्यतीति यथा तस्य न केवलान्वयित्वं तथा घटनाशजन्यगुणनाशात्यन्ताभावस्यापि गगनाभावस्वरूपतया ताद्दशनाशाभावाभावप्रतियोगिताया अपि ताद्दशनाशाभावे वर्त्तमानतया आश्रयनाशजन्यगुणनाशात्यन्ताभावोऽपि न केवलान्वयी, अत्यन्ताभावाप्रतियोगिन एव तथात्वात् इति। प्रतियोगिरूपेति गगनरूपेत्यर्थकम्। तस्य = आश्रयनाशजन्यगुणनाशात्यन्ताभावस्य। दुर्घटमिति गगनाभावाभावमभ्युपगच्छतां मते निरुक्तगुणनाशात्यन्ताभावाभावोऽपि सिद्ध एवेति कुतस्ताद्दशनाशात्यन्ताभावस्य केवलान्वयित्वं सम्भवतीति हृदयम्।

गगने अभावाभावत्वसिद्ध्यर्थमाह अभावेति तथाच गगनस्य भावत्वेन तत्रात्यन्ताभावाभावत्वं निष्प्रत्यूहमिति गगनाभावोऽपि न केवलान्वयी, गगनाभावाभावप्रतियोगिताया गगनाभावे सत्त्वादिति भावः। अभावाभावस्येत्यादिदीधितिमवतारयति यत्रेत्यादि एवं च-यत्र = यस्मिन् यद्भावाभावत्वं वर्त्तते तत्र = तद्भावप्रतियोगित्वमिति यदि व्याप्तिः स्यात् तदा अनया व्याप्त्या गगनस्य गगनाभावाभा-

जागदीशी

योगित्वम् इत्येवंनियमात् नाकाशस्य स्वाभावाभावत्वसिद्धिरिति आह सावधारणमिति तथा च अभावाभावस्यैव भावत्वादित्यन्वयात् भावत्वान्यथानुपपत्त्यैव गगनस्य स्वाभावाभावत्वसिद्धिरिति

नारायणी

वत्वसिद्धिर्न स्याद् घटादावेव घटाभावाभावत्वस्य वर्त्तमानतायाः सर्ववादिसिद्धतया घटादौ घटाभावप्रतियोगित्वस्यैव सिद्धेः। अतः आकाशस्याकाशाभावाभावत्वसिद्ध्यर्थं दीधितिकृत् अभावाभावस्येत्यादेः सावधारणपरत्वं प्रकाशयति इति तु यथाश्रुतटीकाग्रन्थतात्पर्य्यम् भावत्वेति=गगननिष्ठस्य भावत्वस्यान्यथा प्रकारेणोपपत्त्यसम्भवेनेत्यर्थः। स्वाभावेति गगनाभावाभावत्वसिद्धिरित्यर्थः। तथाच गगनं गगनाभावाभावः भावत्वात् इत्येवं व्याप्तिरादरणीया। सामान्यतश्च व्याप्तिरग्रे व्यक्तीभविष्यतीति तु तत्त्वम्।

यदि च यत्र यादृशं भावत्वं तत्र तादृशभावस्य योऽभावस्तदभावत्वमित्येवं सामान्यतो व्याप्त्या गगनादौ गगनाभावाभावत्वसिद्धिरित्युच्यते तदा निरुक्तभावत्वहेतोः प्रमेयत्वादावपि वर्त्तमानतया तत्र व्यभिचारः स्यात्, प्रमेयत्वाभावस्याप्रसिद्धत्वात्। नच घटवृत्तित्वविशिष्टप्रमेयत्वाभावाभावत्वस्य प्रमेयत्वादौ सत्त्वात् कुतो व्यभिचार इति वाच्यम्, विशेष्यवति विशिष्टाभावस्य विशेषणप्रतियोगिकतया तादृशाभावाभावत्वस्य विशेषण एव पर्यवसितत्वात् उक्तव्यभिचारस्य वारणासम्भवात्। समवायावच्छिन्नप्रमेयत्वाभावस्य गगनाभावतुल्यतया तदभावतायाः पक्षसमे प्रमेयत्वे वर्त्तमानत्वेऽपि स्वरूपेण वृत्तिमत्प्रमेयत्वादौ व्यभिचारस्य वारयितुमशक्यत्वात्।

ननु यो यदभावप्रतियोगी भावः स तदभावाभावः इति सामान्यव्याप्त्यादरे नोक्तप्रमेयत्वादौ व्यभिचारः, यदभावप्रतियोगिभावपदेन तस्य धत्तमशक्यत्वात् तत्र हेतोरेवासत्त्वात् तदा निरुक्तव्यभिचारवारणेऽपि

जागदीशी

भाव: । ननु अभावाभावस्यैवेति यथाश्रुतं प्रमेयत्वादौ व्यभिचारि, यो यदभावप्रतियोगी स तदभावाभाव इति भावत्वान्तर्भावेण व्याप्तौ चाप्रयोजकत्वं भावपदवैयर्थ्यञ्च, अतो व्याचष्टे प्रतियो-

नारायणी

विपक्षबाधकतर्काभावेन निरुक्तहेतोरप्रयोजकत्वशङ्काकवलितत्वं दुर्वारं स्यात् । अयं हेतुर्यदि व्यभिचारी स्यात्तर्हि उपाधिमानपि स्यादित्याकारकस्यैव विपक्षबाधकस्य सम्भवेऽपि न निस्तारः, निरुक्तहेतुघटकभावपदस्य व्यर्थतापत्तेः । यो यदभावप्रतियोगी स तदभावाभावः इत्यस्यैव सम्यक्त्वात् इत्याशङ्क्य भावत्वात् प्रतियोगित्वादिति दीधितिमवतारयितुमाह ननु अभावेति यथाश्रुतमिति मूलोक्तमित्यादिः शक्तिभ्रमाद्यजन्यशाब्दबोधविषयीभूतमित्यर्थः । प्रमेयत्वादाविति आदिपदाद् वाच्यत्वपरिग्रहः । निरुक्तव्यभिचारवारणायाह—यो यदभावेति । भावत्वान्तर्भावेण=भावत्वस्य हेतुघटकत्वाभ्युपगमेन । अप्रयोजकत्वम् = अनुकूलतर्काराहित्यम् । भावपदवैयर्थ्यञ्चेति यदभावप्रतियोगिभावत्वत्वसमानाधिकरणप्रकृतसाध्यव्याप्यतावच्छेदकयदभावप्रतियोगितात्वघटितधर्मवत्त्वस्य भावत्वहेतोः सत्त्वाद् यदभावप्रतियोगिभावत्वहेतोर्व्यर्थत्वमित्याशयः ।

ननु यो यदभावप्रतियोगी स तदभावाभावः इत्यादौ साध्यहेत्वोरविशेषप्रसङ्गः, तत्तन्निष्ठप्रतियोगित्वस्य तदभावाभावत्वस्वरूपत्वाद्, अत

शक्तिः

यथाश्रुतमिति–यो भावत्ववान् स यावत्सम्बन्धवान् इत्येवं व्याप्तिरादरणीया। सम्बन्धवत्त्वञ्च स्वावच्छिन्नोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकाभावाभावत्वसम्बन्धेन । स्वं सम्बन्धः । इत्थञ्च मेयत्वादौ विरुक्तसम्बन्धेन यावदन्तर्गतस्वरूपसम्बन्धस्य सत्त्वात् न व्यभिचारः ।

जागदीशी

गित्वादिति । प्रतियोगित्वेन व्यवह्रियमाणत्वादित्यर्थः। नातः साध्याविशेषः । तदभावप्रतियोगित्वस्य तदभावाभावत्वव्याप्यतायां मानमाह यदाहुरिति। प्रतियोगिता प्रतियोगित्वव्यवहारप्रयोजक-

नारायणी

एव दीधितिकृता अभावविरहात्मत्वमित्याचार्यसंवादोऽप्युपन्यस्त इति निरुक्ता व्याप्तिरेव न सम्भवति इत्यत आह—प्रतियोगित्वेनेति तथाच यो यदभावप्रतियोगित्वेन व्यवह्रियमाणः स तदभावाभाव इत्येवं व्याप्तिरादरणीयेति भावः। नातः इति। निरुक्तव्यवह्रियमाणत्वस्य हेतुत्वादित्यर्थः। साध्याविशेष इति अभावाभावत्वस्यापि प्रतियोगिस्वरूपतया प्रतियोगित्वस्य हेतुत्वे साध्यहेत्वोरविशेषप्रसङ्गः स्यात्। न चेष्टापत्तिरिति वाच्यम्, तथा सति साध्यव्याप्यहेतुमान् पक्ष इत्याकारकपरामर्शस्यैव साध्यनिश्चयात्मकसिद्धिस्वरूपतया परामर्शमात्रादनुमित्यनुपपत्तेः। अविशेषितधर्मावच्छिन्नसाध्यानुमितौ विशेषधर्मावच्छिन्नसाध्यनिश्चयस्य प्रतिबन्धकतायाः पक्षताग्रन्थे स्वयमभिहितत्वात्। तेन परामर्शांशे व्याप्त्यादेरधिकस्यभानेऽपि न निस्तार इति ध्येयम्।

**तदभावेति** घटाद्यभावप्रतियोगित्वेन व्यवह्रियमाणत्वस्येत्यर्थः। तदभावाभावेति घटाद्यभावाभावव्याप्यतायामित्यर्थः। यदाहुरितीति दीधितौ आचार्य्या इति उदयनाचार्य्या इत्यर्थः। ननु अभावविरहात्मत्वं वस्तुनः प्रतियोगितेत्यत्र प्रतियोगिताशब्दस्याभावाभावत्वस्वरूपतयाऽभेदान्वयानुपपत्तिरित्यतः प्रतियोगिताशब्दार्थमाह । प्रतियोगित्वेति प्रतियोगित्वप्रकारकशब्दोच्चारणरूपव्यवहारप्रयोजको धर्मः प्रतियोगिता इत्यर्थः।

चिन्तामणिः

भावस्य भावत्वात्। अथाभावात्यन्ताभावो न प्रतियोगिरूपः, तथा सत्यन्योन्याभावात्यन्ताभावः प्रतियोगिरूप इति

दीधितिः

त्यन्ताभावस्यापि तदभावरूपतया तस्यापि प्रतियोगित्वात्।

जागदीशी

धर्मः। अथात्यन्ताभावात्यन्ताभावः प्रतियोग्येव इत्यसङ्गतम्, प्रतियोगिभिन्नयोर्ध्वंसप्रागभावयोरपि अत्यन्ताभावाभावत्वस्य प्राचीनैः स्वीकारात्, अत आह प्रागभावेति। तदभावरूपतया प्रागभावात्यन्ताभावरूपतया। तस्यापि प्रागभावादेरपि। प्रतियोगि-

नारायणी

अत्यन्ताभावात्यन्ताभावः प्रतियोग्येवेति यथाश्रुतमूलमसङ्गतं घटात्यन्ताभावाभावस्य प्राचीनमते घटध्वंसघटप्रागभावरूपत्वात् तयोर्घटरूपप्रतियोगिभिन्नत्वात् इत्याशङ्क्य घटादिप्रागभावादेरपि प्राचीनमते घटात्यन्ताभावप्रतियोगितया तत्रात्यन्ताभावाभावत्वसत्त्वेऽपि न निरुक्तमूलमसङ्गतमित्याशयपरं प्रागभावेत्यादि दीधितिग्रन्थमवतारयितुमाह **अथेति** नन्वित्यर्थः। मूलस्यासङ्गतत्वे हेतुमाह **प्रतियोगिभिन्नयोरिति** घटात्यन्ताभावप्रतियोगिघटभिन्नयोरित्यर्थः। कयोरित्याकाङ्क्षायामाह ध्वंसप्रागभावयोरपीति घटेत्यादिः। अत्रापिना घटस्य घटात्यन्ताभावाभावत्वं सर्वसम्मतमिति सूचितम्। प्राचीनैः = उदयनाचार्यप्रभृतिभिः। तदभावरूपतयेत्यादेर्व्याख्यानमाह **घटप्रागभावेति** प्राचीनमतेऽत्यन्ताभावस्य त्रितयप्रतियोगिकतया घटात्यन्ताभावो घटध्वंसघटप्रागभावाभावस्वरूप इति हृदयम्। **प्रागभावादेरपीति** घटध्वंसघटप्रागभावयोरपीत्यर्थः **प्रतियोगित्वादिति** तथा चात्यन्ताभावा-

जाह्नवी

त्वादिति । तथा च प्रतियोगित्वरूपेणेत्र प्रागभावादेरपि उपग्रहात् नैवकारार्थबाध इति भावः । एवं सत्त्वानतिरिक्तस्य विशिष्टसत्त्वस्यातिप्रसक्त्या द्रव्यत्वस्यैव विशिष्टसत्ताभावाभावत्वस्वीकारेऽपि नैवकारार्थबाधः, विशिष्टसत्ताभावस्यैव द्रव्यत्वाभावतया

नारायणी

त्यन्ताभावः प्रतियोग्येवेति नासङ्गतम् घटात्यन्ताभावप्रतियोगित्वस्य घट इव घटध्वंसप्रागभावयोरपि वर्त्तमानतायाः प्राचीनमतसिद्धत्वादित्याशयः । भावमाह तथाचेति प्रागभावादेरत्यन्ताभावप्रतियोगित्वे चेत्यर्थः । प्रतियोगित्वेति घटाद्यभावप्रतियोगित्वधर्मेणेत्यर्थः प्रागभावेति घटादिप्रागभावतद्ध्वंसयोरपीत्यर्थः। उपग्रहात् = संग्रहसम्भवात् । नैवकारार्थेति प्रतियोगिभिन्नस्यात्यन्ताभावाभावत्वं एव एवकारार्थस्य बाधः सम्भवति । प्रागभावादेस्तु न प्रतियोगिभिन्नत्वं शङ्कास्पदं प्राचीनमतेऽत्यन्ताभावस्य त्रितयप्रतियोगिकत्वादिति तत्त्वम् । ननु विशिष्टसत्ताऽभावाभावस्य न विशिष्टसत्तास्वरूपत्वम् ,तथासति विशिष्टसत्तायाः सत्तानतिरिक्ततया गुणेऽपि विशिष्टसत्ताऽभावो नास्तीति प्रत्ययापत्तिः स्यात्,अतः विशिष्टसत्ताभावाभावो द्रव्यत्वस्वरूप एव वाच्यः। एवं चैवकारार्थबाधो दुर्वारः, प्रतियोगिभिन्नस्या द्रव्यत्वस्यापि विशिष्टसत्ताऽभावाभावस्वरूपत्वात् , एवकारस्येतरव्यवच्छेदपरत्वात् इत्यत आह एवमिति निरुक्तरीत्या प्रागभावादिकमादाय बाधासम्भवेऽपीत्यर्थः । सत्तेति सत्तास्वरूपविशिष्टसत्त्वस्येत्यर्थः । अतिप्रसक्त्या = विशिष्टसत्ताऽभावाभावस्य गुणादावापत्तिप्रसक्त्या द्रव्यत्वस्यैवेत्यत्र एवकारेण विशिष्टसत्ताया विशिष्टसत्ताभावभावत्वस्वीकारव्यवच्छेदः। एवकारार्थस्य बाधाभावे हेतुमाह विशिष्टसत्ताभावस्यैवेति । गुणकर्मान्यत्वविशिष्टसत्ताभावस्यैवेत्यर्थः द्रव्यत्वाभावतया = द्रव्यत्वाभावाभिन्नतया। द्रष्टव्यमिति ।

चिन्तामणिः

प्रतियोगिसमानदेशोऽन्योन्याभावो न स्यादिति चेन्न । अत्यन्ताभावात्यन्ताभावः प्रतियोग्येव, अन्योन्याभावात्यन्ताभावस्तु प्रतियोगिवृत्तिरसाधारणो धर्म इति ।

दीधितिः

असाधारण इति । प्रतियोगितावच्छेदक इति तु तत्त्वम् ।

जागदीशी

द्रव्यत्वस्यापि विशिष्टसत्ताभावप्रतियोगित्वादित्यपि द्रष्टव्यम् । असाधरणस्यापि कम्बुग्रीवादिमत्त्वप्रभृतेर्घटादिभेदात्यन्ताभावत्व-

नारायणी

तथाच गुणकर्मान्यत्वविशिष्टसत्ताभावाभावस्य द्रव्यत्वस्वरूपतया द्रव्यत्वस्यापि विशिष्टसत्ताभावप्रतियोगित्वमिति नैवकारार्थबाध इत्याशयः।

अन्योन्याभावात्यन्ताभावो यदि प्रतियोगिवृत्त्यसाधारणधर्मस्तदा घटभेदात्यन्ताभावो कम्बुग्रीवादिमत्त्वस्वरूपः स्यात् , तस्यापि घटासाधारणधर्मत्वात्—इत्याशङ्क्य प्रतियोगितावच्छेदकेति दीधितिमवतारयितुमाह असाधारणस्यापीति। घटेतरावृत्तिघटमात्रवृत्तिधर्मस्यापीत्यर्थः। अपिना घटत्वपरिग्रहः । कम्बुग्रीवादिमत्त्वप्रभृतेरिति प्रभृतिशब्देन धूमासाधारणधर्मादेः प्रमेयधूमत्वादेः परिग्रहः । घटादीति घटत्वादेरेव-घटभेदात्यन्ताभावत्वस्य सर्वसम्मतत्वादिति हृदयम्। आहेति दीधितिकार इति शेषः। प्रतियोगितेति तथाच गुरुधर्मस्य प्रतियोगितावच्छेदकत्वानभ्युपगमात् कम्बुग्रीवादिमत्त्वादेर्घटाद्यसाधारणधर्मत्वेऽपि तस्य घटभेदप्रतियोगितानवच्छेदकतया तत्र न घटभेदात्यन्ताभावत्वमिति भावः ।

जागदीशी

विरहादाह प्रतियोगितावच्छेदकेति । यद्यपि सर्वत्र अभावस्याभावः प्रतियोग्येव तस्यापि प्रतियोगितावच्छेदकसम्बन्धेनैव अभावविरोधित्वात् घटाद्यन्योन्याभाववत्यपि संयोगादिसम्बन्धेन प्रतियोगिनो घटादेः सत्त्वे बाधकाभावः इत्यपि सुवचम्, तथापि

नारायणी

ननु अन्योन्याभावात्यन्ताभावोऽपि प्रतियोगिस्वरूप एव प्रतियोगितावच्छेदकसम्बन्धेन यत्र प्रतियोगी वर्त्तते तन्निष्ठाधिकरणतया सार्द्धमेवाभावस्य विरोधितया सर्वत्रैवाभावाभावस्य प्रतियोगिस्वरूपत्वेऽपि न क्षतिरिति घटान्योन्याभावात्यन्ताभावस्य घटस्वरूपत्वे घटवति देशे घटान्योन्याभावस्य सत्त्वानुपपत्तिरूपदोषदानं मूलकृतामनुचितम् । स्वप्रतियोगितावच्छेदकतादात्म्यसम्बन्धेन घटसम्बन्धिताया एव घटान्योन्याभावविरोधित्वात्, संयोगसमवायादिना घटादिमति देशे घटान्योन्याभावसत्त्वे बाधकाभावादित्याशङ्कते । यद्यपीति सर्वत्र अत्यन्ताभावान्योन्याभावस्थले । अभावस्याभावः अभावत्वावच्छिन्नप्रतियोगिताकात्यन्ताभावः । प्रतियोग्येवेत्यत्र एवकारादन्योन्याभावात्यन्ताभावस्य प्रतियोगितावच्छेदकस्वरूपत्वव्यवच्छेदः । तस्यापि = प्रतियोगिनोऽपि । प्रतियोगितेति स्वस्वप्रतियोगितावच्छेदकसम्बन्धेनैवेत्यर्थः। एवकारेण प्रतियोगितावच्छेदकसंसर्गातिरिक्तसम्बन्धव्यवच्छेदः । अभावेति अभावाधिकरणावृत्तित्वादित्यर्थः घटान्यान्येति घटभेदाधिकरणतावतीत्यर्थः। संयोगेति तादात्म्यातिरिक्तेत्यादिः बाधकाभाव इति तादात्म्येन घटादसम्बन्धितायाः घटभेदवति घटादिसंयोगादिमत्यसत्त्वादिति भावः। सुवचमिति तथाचात्यन्ताभावस्यात्यन्ताभावः प्रतियोग्येव । अन्योन्याभावात्यन्ताभावः प्रतियोगितावच्छेदकस्वरूप इत्यभिधानं न युक्तमित्याशयः

### जागदीशी

घटे घटभेदो नास्ति इत्याधाराधेयभावप्रतीतेः तादात्म्यसम्बन्धेन कर्त्तुमशक्यत्वात्, बहूनां प्रतियोगिनामन्योन्याभावाभावत्वकल्पनामपेक्ष्य लाघवेन एकस्य प्रतियोगितावच्छेदकस्यैव तथात्वौचित्यात् नैष प्रकारः सम्भवतीति भावः।

### नारायणी

उत्तरयति तथापीति। घटे घटभेदो नास्तीति प्रतीतिस्तु प्रात्यक्षिकी ग्राह्या, अन्यथा निरुक्तप्रतीतेः शाब्दत्वाभ्युपगमे घटेऽधिकरणत्वघटभेदाभावे चाधेयत्वावगाहित्वं तादृशप्रतीतेर्न सम्भवति। प्रथमान्तार्थमुख्यविशेष्यकशाब्दबोधाद्यनुरोधेन घटनिरूपितवृत्तितावदत्यन्ताभावप्रतियोगित्वस्यैव घटभेदे शाब्दबोधेनावगाहनसम्भवादिति ध्येयम्। इत्याधारेति घटाधिकरणताकघटभेदाभाव इति घटनिष्ठाधिकरणत्वस्य घटभेदाभावनिष्ठाधेयत्वस्यावगाहित्वविशिष्टप्रतीतेरित्यर्थः। कर्तुमशक्यत्वादिति घटभेदाभावो यदि घटस्वरूपस्तदा वृत्त्यनियामकसम्बन्धेनाधिकरणताया अपसिद्धान्तकवलिततया घटे घट इति प्रतीतिवद् घटे घटभेदाभाव इत्यपि प्रतीतेर्घटाधिकरणतावगाहितया वक्तुमशक्यत्वादन्योन्याभावात्यन्ताभावः प्रतियोगितावच्छेदकस्वरूप एवेति तत्त्वम्।

ननु घटे घटभेदो नास्ति घटे घटभेदाभावो वा इत्याकारकप्रतीतिर्घटनिष्ठसम्बन्धित्वमेवावगाहते नतु घटधिकरणत्वावगाहिनी सेति नानुपपत्तिरित्यत आह बहूनामिति घटादिप्रतियोगिनामित्यर्थः। लाघवेन = अनन्तप्रतियोगिनि घटभेदाभावत्वकल्पनामपेक्ष्यैकस्यैव घटत्वे प्रतियोगितावच्छेदकघटत्वादेस्तथात्वकल्पने महल्लाघवमिति भावः। तथात्वौचित्यात् = अन्योन्याभावात्यन्ताभावत्वौचित्यात्। नैष प्रकारः = सर्वत्राभावाभावः प्रतियोगिस्वरूप इति प्रकारः सम्भवतीति तथाच मूलाभिधानं सयुक्तिकमेवेति हृदयम।

**दीधितिः**

अथान्योन्यात्यन्ताभावसाधारणः प्रतियोगितावच्छेदकसम्बन्ध एवाभावाभावः, स च क्वचित्तादात्म्यं, क्वचिच्च संयोगादिरिति चेत्, यद्वत्त्वे हि ज्ञाते यद्वत्त्वं न प्रतीयते

**जागदीशी**

मिश्रोक्तमाशङ्कते अथेति। स चेति। प्रतियोगितावच्छेद-

**नारायणी**

मिश्रास्तु अत्यन्ताभावाभावस्य अनन्तप्रतियोगिस्वरूपत्वमन्योन्याभावात्यन्ताभावस्य च प्रतियोगितावच्छेदकस्वरूपत्वमङ्गीकृत्य गगनाभावाभावस्य गगनस्वरूपत्वस्वीकारे महागौरवं स्यात्, अतो लाघवात्सर्वत्राभावाभावः प्रतियोगितावच्छेदकसम्बन्धस्वरूप एव स्वीकरणीयः, अन्योन्याभावात्यन्ताभावस्तु तादात्म्यसम्बन्धस्वरूपः। अत्यन्ताभावात्यन्ताभावस्तु यथायथं संयोगसमवायादिरूप इति प्रतियोगितावच्छेदकसम्बन्धत्वेन लाघवसम्भवाद् विभिन्नरूपेणाभावाभावाभ्युपगमो निरर्थकः इति वदन्ति। तन्मतं दूषयितुं शङ्कते दीधितौ **अथेति। सचेति** प्रतियोगितावच्छेदकसम्बन्धश्चेत्यर्थः। क्वचित् अन्योन्याभावात्यन्ताभावस्थले क्वचिच्च अत्यन्ताभावात्यन्ताभावस्थले **संयोगादिरिति**। आदिना समवायादिपरिग्रहः। तथाच समवायेन घटात्यन्ताभावाभावः समवायः, संयोगेन घटाभावाभावस्तु संयोगः, तादात्म्येन घटान्योन्याभावाभावस्तादात्म्यमेवेत्याशयः। निरुक्तं मतं दूषयति **यद्वत्त्वेहीति** येन सम्बन्धेनेत्यादिः। यत्सम्बन्धावच्छिन्नतयान्निष्ठप्रकारताककिञ्चिद्धर्मावच्छिन्नविशेष्यकज्ञानदशायामित्यर्थः। तेन निर्द्धर्मितावच्छेदकज्ञानस्याप्रतिबन्धकत्वेऽपि न क्षतिः। **यद्वत्त्वं न प्रतीयत इति** तत्सम्बन्धावच्छिन्नतन्निष्ठप्रतियोगिताकाभावप्रकारकतादृशधर्मावच्छिन्नविशेष्यकज्ञानोत्पत्तिर्न जायते

दीधितिः

तदभाववत्त्वञ्च व्यवह्रियते तस्यैव तदभावात्मकत्वमुपेयते प्रतियोगितदभाववत्त्वबुद्ध्योश्च मिथस्तथात्त्वमानुभविकम् । न च तत्सम्बन्धवत्त्वञ्च तद्विषयः । सम्बन्धसम्बन्धवत्ताबुद्धि-

जागदीशी

कश्चेत्यर्थः । क्व चित् भेदस्थले । क्व चित् अत्यन्ताभावस्थले । न प्रतीयते इति । तस्यैव इत्यग्रिमान्वयि । ननु तद्वत्ताप्रतीति-विरोधिन एव तदभावात्मकत्वे तद्व्याप्यस्यापि तदभावाभावत्वा-

नारायणी

इत्यर्थः । तस्यैवेति यदभावप्रकारकज्ञानानुदयस्तस्यैवेत्यर्थः । तदभावाभावत्वं यदभावप्रकारकज्ञानानुत्पत्तिस्तदभावाभावत्वमिति फलितम् ।

ननु यत्प्रकारकज्ञानदशायां यदभावप्रकारकज्ञानानुत्पादस्तस्यैव तदभावाभावत्वाभ्युपगमे घटव्याप्यस्यापि घटाभावाभावत्वापत्तिः,घटव्याप्यप्रकारकनिश्चयकाले घटाभावज्ञानानुदयात् । अत आह तदभावत्वञ्च व्यवह्रियते इति। यत्प्रकारकज्ञानदशायां यदभावाभावत्वप्रकारक व्यवहारोदयः तस्यैव तदभावाभावत्वमित्यर्थः पर्य्यवसितः । घटव्याप्यज्ञानकाले घटाभावाभावः इत्याकारकव्यवहारो न भवति, घटज्ञानकाल एव घटाभावाभाव इति व्यवहारजननात् व्यवहारं प्रति व्यवहर्त्तव्यार्थज्ञानस्य हेतुत्वात् घटज्ञानकाले घटाभावाभावव्यवहारोत्पत्तौ घटस्यैव घटाभावाभावत्वमिति पर्य्यवसितं तात्पर्य्यम् ।

क्वचिदित्यादेर्व्याख्यानमाह टीकायां भेदस्थल इति । तादात्म्यस्यैव भेदप्रतियोगितावच्छेदकसम्बन्धत्वमिति हृदयम् न प्रतीयत इतीति यत्प्रकारकज्ञानं न जायते तस्यैव तदभावाभावत्वमित्यर्थः । तदभावत्वञ्च व्यवह्रियत इत्यादेरवतरणमाह नन्विति यत्सम्बन्धावच्छिन्नयन्निष्ठ-

जागदीशी

पत्तिः, अत आह तदभाववत्त्वञ्चेति । प्रतियोगितदभावयोरिति भेदप्रतियोगितावच्छेदकयोरपि उपलक्षकम् । तथात्वं विरोधित्वम्, तत्सम्बन्धत्वं प्रतियोगितावच्छेदकसम्बन्धवत्त्वम् । तद्विषयः प्रतियोगिमत्ताबोधप्रकारः । तत्र सम्बन्धस्य संसर्गविधयैव भाना-

नारायणी

प्रतियोगिताकाभावप्रतीतिप्रतिबन्धकतावच्छेदकप्रकारताश्रयस्येत्यर्थः । तदभावात्मकत्वे = घटाद्यभावाभावात्मकत्वे तद्व्याप्यस्यापि = घटादिव्याप्यस्यापि । तदभावेति घटाद्यभावाभावत्वापत्तिरित्यर्थः । तदभावत्वञ्चेति यज्ज्ञानदशायां घटाभावाभावव्यवहारः तस्यैव घटाद्यभावाभावत्वमिति नियमात् तदभावाभावव्यवहारप्रयोजकज्ञानीयविशेष्यताश्रयस्यैव तदभावाभावत्वमिति पर्य्यवसितम् । प्रतियोगीति प्रतियोगिनो घटादेः तदभावस्य = घटाद्यभावस्य । यथा परस्परविरोधित्वं तथा भेदप्रतियोगितावच्छेदकयोरपि परस्परविरोधित्वमानुभविकमित्याह भेदेति विरोधित्वमिति प्रतियोगिप्रकारकं ज्ञानं प्रतियोग्यभावबुद्धौ प्रतिबन्धकं प्रतियोग्यभावप्रकारकं ज्ञानञ्च प्रतियोगिप्रकारकज्ञानप्रतिबन्धकमिति भावः। प्रतियोगितेति तादात्म्यसंयोगादिरूपप्रतियोगितावच्छेदकसम्बन्धवत्त्वञ्चेत्यर्थः । प्रतियोगीति प्रतियोगिप्रकारकज्ञानीयप्रकारताश्रय इत्यर्थः । तत्र = प्रतियोगिप्रकारकज्ञाने सम्बन्धस्य = प्रतियोगितावच्छेदकसम्बन्धस्य । संसर्गविधयैव = संसर्गत्वेनैव । भानादिति । तथा-च यत्सम्बन्धावच्छिन्नयन्निष्ठप्रतियोगिताकाभावप्रकारकबुद्धिप्रतिबन्धकतावच्छेदकप्रकारताश्रयस्यैव तदभावाभावत्वस्य कल्पनीयतया सम्बन्धादौ प्रकारत्वविरहेण तादृशबुद्धिप्रतिबन्धकतावच्छेदकप्रकारताश्रयत्वस्य तत्र विरहान्न प्रतियोगितावच्छेदकसम्बन्धादेस्तदभावाभावत्वं कथमपि सम्भवतीति हृदयम् ।

दीधितिः

वत् क्वचित्सम्बन्धबुद्धिर्विशेषदर्शनतयोपयुज्यते। न च स्वतः, मानाभावात। अथ सम्बन्धान्तरावच्छिन्नाभाववति सम्बन्धान्तरेण प्रतियोगिनो वृत्तेर्न तदभावविरोधित्वमिति चेत्।

जागदीशी

दिति भावः। अथ अभावव्यावृत्तत्वेन ज्ञातस्य प्रतियोगिसम्बन्धवत्त्वस्यापि अभाववत्ताबोधविरोधित्वमस्त्येव अत आह सम्बन्ध-

नारायणी

घटसंयोगवान् घटवान् घटसंयोगवच्च भूतलमित्याकारकज्ञानविशिष्टज्ञानस्यापि घटाभावबुद्धिप्रतिबन्धकतया घटाभावप्रतियोगितावच्छेदकीभूतसंयोगनिष्ठप्रकारताया अपि घटाभावबुद्धिप्रतिबन्धकतावच्छेदकतया घटाभावबुद्धिप्रतिबन्धकतावच्छेदकप्रकारताश्रयत्वेन घटसंयोगस्यापि घटाभावाभावत्वं निर्विवादम्। अथ घटसंयोगसमवायवान् घटवान् घटसंयोगसमवायवच्च भूतलमित्याकारकज्ञानविशिष्टज्ञानीय घटाभावबुद्धिप्रतिबन्धकतावच्छेदकघटसंयोगसमवायस्यापि घटाभावाभावत्वं स्यात्, न स्यात्, यदभावप्रकारताशालिबुद्धित्वावच्छिन्नप्रतिबध्यतानिरूपितज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकतावच्छेदकप्रकारताश्रयस्यैव तदभावाभावत्वमित्यस्य विवक्षितत्वात् इति चेत् घटाभावप्रतियोगितावच्छेदकघटसंयोगस्यापि ज्ञानवैशिष्ट्यानवच्छिन्नघटाभावबुद्धिप्रतिबन्धकतावच्छेदकप्रकारताश्रयत्वविरहात् कुतः प्रतियोगितावच्छेदकसम्बन्धस्य प्रतियोग्यभावाभावत्वं सेत्स्यतीत्येवमाशङ्क्य सम्बन्धसम्बन्धवत्त्वेत्यादिदीधितिमवतारयति **अथेति** **अभावेति** घटाद्यभावव्यावृत्तत्वेन घटाभावावच्छेदकत्वेनेत्यर्थः। ज्ञातस्य निश्चयविषयीभूतस्य **प्रतियोगीति** घटादिरूपप्रतियोगिसंयोगादिमत्त्वस्यापीत्यर्थः। **अभावेति** घटाद्यभावप्रकारकज्ञानप्रतिबन्धकतावच्छेदकप्र-

जागदीशी

सम्बन्धवदिति। तथाच तद्व्यावृत्तत्वाद्यविषयकं यद्गोचरज्ञानं अभाववत्ताबोधप्रतिबन्धकं तस्यैव अभावविरहत्वं परेणापि वाच्यम्। अन्यथा तन्मतेनापि प्रतियोगिसम्बन्धीयसम्बन्धस्य अभावविरहत्वापत्तेः। न चेदं प्रतियोगिसम्बन्धेऽस्तीति भावः।

नारायणी

कारताश्रयत्वमस्त्येवेत्यर्थः। सम्बन्धसम्बन्धवदिति घटादिसंयोगसमवायसम्बधवदित्यर्थः। भावमाह तथाचेति तद्व्यावृत्तत्वेति घटाद्यभावव्यावृत्तत्वाद्यविषयकमित्यर्थः। यद्गोचरज्ञानं = यत्प्रकारताकनिश्चयः अभाववत्त्वेति घटाद्यभावबुद्धिप्रतिबन्धकमित्यर्थः। ज्ञानवैशिष्ट्यानवच्छिन्नयन्निष्ठप्रकारताकनिश्चयः यदभावधीप्रतिबन्धकः तस्यैव तदभावाभावत्वमिति तु फलितम्। तस्यैव = तत्प्रकारताश्रयस्यैव। अभावविरहत्वम् = अभावाभावत्वम्। परेणापि = मिश्रेणापि। अन्यथा प्रतिबन्धकतायां ज्ञानवैशिष्ट्यानवच्छिन्नत्वानिवेशे। तन्मतेनापि = मिश्रमतेनापि। प्रतियोगीति संयोगेन घटाभावप्रतियोगिघटसंयोगसमवायस्येत्यर्थः। अभावेति घटाद्यभावाभावत्वापत्तेरित्यर्थः। घटसंयोगसमवायवान् घटवान् घटसंयोगसमवायवच्च भूतलमित्याकारकज्ञानविशिष्टज्ञानीयघटाभावबोधप्रतिबन्धकतावच्छेदकप्रकारताश्रयत्वस्य घटसंयोगसमवायेऽपि वर्त्तमानतया घटसंयोगसमवायस्य घटाभावाभावत्वापत्तिवारणाय ज्ञानवैशिष्ट्यानवच्छिन्नघटाभावधीप्रतिबन्धकतावच्छेदकप्रकारताश्रयस्यैव घटाभावाभावत्वं मिश्रेणावश्यं वक्तव्यमित्यत आह नचेदमिति ज्ञानवैशिष्ट्यानवच्छिन्नघटाभावबोधप्रतिबन्धकतावच्छेदकप्रकारताश्रयत्वमित्यर्थः प्रतियोगिसम्बन्धे घटसंयोगेऽपि अस्तीत्यर्थः।

दीधितिः

प्रयोगितावच्छेदकसम्बन्धस्याभाववति सम्बन्धान्तरेण वृत्तेर्न तथात्वम्। सम्बन्धविशेषेण च विरोधित्वं तुल्यमेव। अनतिप्रसक्तये च स्वप्रतियोगितावच्छेदकसम्बन्धत्वेनाभावत्व-

जागदीशी

उपयुज्यत इत्यस्य अभावधीप्रतिबन्ध इत्यादिः। न स्वतः न सम्बन्धवत्ताबुद्धित्वेन। तस्य प्रतियोगिनः। प्रतिबन्दिमुद्रया निराचष्टे प्रतियोगितेति। न तथात्वं नाभावविरोधित्वं। तथा च घटाद्यभावप्रतियोगितावच्छेदकीभूतसंयोगादिसम्बन्धस्य कालिक-

नारायणी

**अभावधीति** अभावबुद्धेरनुत्पादे इत्यर्थः। न स्वतः=न साक्षात् न अभावप्रकारकनिश्चयत्वेनेत्यर्थः। अथ यदि घटाभावाभावो घटरूपप्रतियोगिस्वरूपः तदा संयोगेन घटाद्यभावः स्पन्दादौ न तिष्ठेत्, कालिकसम्बन्धेन घटस्य स्पन्दादौ वर्त्तमानतया प्रतियोगितावच्छेदकविशिष्टाधिकरणतया सार्द्धमत्यन्ताभावस्य विरोधात् संयोगावच्छिन्नघटाधिकरणतायाः स्पन्दनिष्ठताया वक्तुमशक्यत्वादिति चेद् भवतामपि तुल्यमेव, प्रतियोगितावच्छेदकसम्बन्धस्याभावाभावत्वमतेऽपि संयोगेन घटाद्यभावः स्पन्दादौ मा तिष्ठेत्, घटसंयोगस्यापि कालिकसम्बन्धेन स्पन्दादौ वर्त्तमानत्वात्। यदि च प्रतियोगितावच्छेदकसंसर्गतानियामकसम्बन्धेनैव प्रतियोगितावच्छेदकसम्बन्धवति प्रतियोग्यभावो न वर्त्तते इत्युच्यते तदा प्रतियोगिनोऽभावाभावत्वेऽपि न क्षतिः, प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोगिमत्येव प्रतियोग्यभावाधिकरणताया अनभ्युपगमादित्येव दीधितिकृता प्रदर्शितां प्रतिबन्दीं व्याचष्टे **न तथात्वमिति नाभावेति** न प्रतियोगितावच्छेदकसम्बन्धमात्रस्यैवाभावविरोधित्वमित्यर्थः। भावमाह **तथाचेति** स्पन्दादावित्यत्रादिपदात् महाकाल-

जागदीशी

सम्बन्धेन स्पन्दादौ वर्त्तमानत्वात् संयोगादिसम्बन्धावच्छिन्नघटाद्यभावोऽपि स्पन्दादौ न तिष्ठेदिति भावः। यदि च प्रतियोगितावच्छेदकसम्बन्धस्य संसर्गतानियामकसम्बन्धेन अभावविरोधित्वमुच्यते तदा मयापि प्रतियोगितावच्छेदकसम्बन्धेनैव प्रतियोगिनस्तथात्वं वाच्यमित्याह सम्बन्धविशेषेण चेति। अन्योन्याभावात्यन्ताभावसाधारणेत्युक्तिलब्धमनुगतत्वं निरस्यति अनतीति। यथाकथञ्चित् प्रतियोगितावच्छेदकसम्बन्धमात्रस्यैव तथात्वे

नारायणी

परिग्रहः। संयोगादीति आदिना समवायादिपरिग्रहः। संसर्गतानियामक इति संसर्गविशिष्टधीनियामकसम्बन्धेनेत्यर्थः। अभावेति अभावप्रकारकज्ञानप्रतिबन्धकतावच्छेदकविषयताश्रयत्वमित्यथः। मयापि = प्रतियोगिनः अभावाभावत्ववादिनाऽपि तथात्वम् = अभावधीप्रतिबन्धकतावच्छेदकप्रकारताश्रयत्वम्।

मिश्रमते अन्योन्यात्यन्ताभावसाधारणप्रतियोगितावच्छेदकसम्बन्धस्यानुगमो यदि अभावबोधप्रतिबन्धकतावच्छेदकविषयताश्रयत्वमात्रम् तदा विशेष्यादेरपि तादृशानुगतरूपेणाभावाभावत्वप्रसङ्गः स्यात्, अतः अभावधीप्रतिबन्धकतावच्छेदकसांसर्गिकविषयताश्रयत्वेनैवानुगमः करणीयः। नच तादृशविषयताश्रयत्वं प्रतियोगितावच्छेदकताघटकसम्बन्धेऽप्यस्तीति वाच्यम्, अभावप्रतियोगितावच्छेदकसंसर्गत्वाख्यविषयताश्रयत्वेनानुगमसम्भवादित्युक्तावपि न निस्तारः-इत्यभिप्रायकं स्वस्येति दीधितिग्रन्थमवतारयति अन्योन्येति अतिप्रसङ्गमाह-यथाकथञ्चिदिति सामान्यत इत्यर्थः। तथात्वे = अभावाभावत्वे।

दीधितिः

कल्पने क्वानुगमसम्भावनापीति । व्यधिकरणसम्बन्धस्यापि प्रतियोगितावच्छेदकत्वात्तद्वत्यत्यन्ताभावविलयप्रसङ्गो, भवतां, तदभावविलोपप्रसङ्गो वेति । लक्षणं परिष्कुरुते

जागदीशी

संयोगेन घटाद्यभावः कपालादौ न स्यात्, अभावान्तरप्रतियोगितावच्छेदकीभूतस्यैव घटसमवायस्य तत्र सत्त्वात्, अतः स्वप्रतियोगितावच्छेदकसम्बन्धस्यैव तथात्वं वाच्यमिति क्वाऽनुगम इत्यर्थः । ननु प्राचां मते स्वत्वमनुगतमेव इत्युक्तावपि आह व्यधिकरणेति ।

नारायणी

कपालादाविति आदिना कालादिपरिग्रहः। न स्यादिति तथाच सामान्यतः प्रतियोगितावच्छेदकसम्बन्धस्याभावविरोधित्वे समवायकालिकादिसम्बन्धानामपि प्रतियोगितावच्छेदकसम्बन्धत्वानपायात, संयोगेन घटस्याभावः कपाले न वर्त्ततां समवायेन घटाद्यभावीयप्रतियोगितावच्छेदकीभूतघटसमवायस्य कपाले सत्त्वादिति भावः।

निषेधे हेतुमाह प्रतियोगितेति सामान्यत इत्यादिः। तत्र=कपाले। अतः=निरुक्तातिप्रसङ्गवारणतः। स्वप्रतियोगितेति स्वनिरूपितप्रतियोगितावच्छेदकसम्बन्धस्यैवेत्यर्थः। तथात्वम्=अभावाभावत्वम् स्वाभावाभावत्वमिति यावत्। वाच्यमिति तथाच स्वत्वस्यैकस्यासम्भवात्स्वपदेनात्यन्ताभावोपादानेऽन्योन्याभावप्रतियोगितावच्छेदकसम्बन्धस्यासंग्रहः, स्वपदेनान्योन्याभावोपादाने तु अत्यन्ताभावप्रतियोगितावच्छेदकसम्बन्धस्यासंग्रहः इति मिश्रमतेऽनुगमो दुर्लभ एवेति भावः। व्यधिकरणेत्यादिदीधितिमवतारयति नन्विति नव्यैः स्वत्वस्यानुगतत्वानभ्युपगमादाह प्राचामिति स्वत्वमनुगतमिति तथाच स्वनिष्ठप्रकारताकबुद्धित्वा-

### जागदीशी

संयोगसम्बन्धावच्छिन्नघटाद्यभावस्थले प्रतियोगिनिरूपितस्यैव संयोगस्य प्रतियोगितावच्छेदकसम्बन्धत्वमावश्यकत्वात् न तु प्रतियोग्यनिरूपितस्य, मानाभावादित्युक्तौ नैष दोषः सम्भवतीति

### नारायणी

वाच्छिन्नप्रतिवध्यतानिरूपितप्रतिबन्धकतावच्छेदकविषयतावत्त्वस्वनिरूपितप्रतियोगितावच्छेदकसंसर्गत्वोभयसम्बन्धेनाभावविशिष्टस्यैवाभावाभावत्वं वक्तव्यम, तत्रच स्वत्वस्य संसर्गकोटिप्रविष्टतया नाननुगमः इति भावः। इत्युक्तावपि इत्यत्रापिकारेण इत्युक्तौ न निस्तार इति पर्य्यवसितम्। व्यधिकरणपर्य्यन्तानुसरणप्रयोजनमाह **संयोगेति** संयोगसम्बन्धावच्छिन्नप्रतियोगिताकेत्यर्थकम्, तेनाभावस्य संयोगसम्बन्धावच्छिन्नत्वाभावेऽपि न क्षतिः। **प्रतियोगीति**। स्वप्रतियोगिप्रतियोगिकस्यैवेत्यर्थः **प्रतियोगितेति** स्वनिरूपितप्रतियोगितावच्छेदकसम्बन्धत्वमित्यर्थः। निरूपितत्वस्यैवेत्यत्र एवकारार्थं स्पष्टयति **नत्विति प्रतियोग्येति** स्वप्रतियोगिप्रतियोगिकत्वाभावविशिष्टस्येत्यर्थः। **मानाभावादिति** सामान्यतः संयोगमात्रस्य संयोगेन घटाभावस्थले प्रतियोगितावच्छेदकसंबन्धत्वं निष्प्रामाणिकमिति हृदयम। **नैष दोष इति** अयमभिप्रायः व्यधिकरणसंयोगेन रूपं नास्तीत्यभावप्रतियोगितावच्छदकसंयोगवति भूतलादौ तादृशाभावो मिश्रमते न तिष्ठेत् अभावविरोधिनस्तन्मतसिद्धस्याभावप्रतियोगितावच्छेदकसम्बन्धस्य संयोगस्य भूतलादौ सत्त्वादित्येवं दीधितिकृता मिश्रमते दोषोऽभिहितः। तत्रेयमाशङ्का सम्भवति संयोगेन घटाभावस्यापि वस्त्रादिसंयोगादिमति वृत्तित्वं न सम्भवति विरोधिनः प्रतियोगितावच्छेदकसंबन्धस्य संयोगस्य वस्त्रादिसंयोगादिमति गृहेऽपि

जागदीशी

व्यधिकरणपर्य्यन्तानुसरणम् । तद्वति व्यधिकरणसंयोगवति । तत्सम्बन्धावच्छिन्नरूपाद्यभावस्य विलयप्रसङ्ग इति भावः । अभावविरोधिनः प्रतियोगितावच्छेदकसम्बन्धस्य तत्र सत्त्वादिति भावः।

नारायणी

सत्त्वात्, अतः व्यधिकरणसंयोगपर्य्योन्तानुसरणं दीधितिकृतामनुचितं समानाधिकरणसंयोगस्थलेऽपि तादृशदोषस्य सम्भवादिति तादृशाशङ्कानिवारणार्थमाह संयोगेन घटाभावस्थले तु घटप्रतियोगिकसंयोगस्यैव प्रतियोगितावच्छेदकसम्बन्धत्वं न तु घटाप्रतियोगिकवस्त्रादिप्रतियोगिकसंयोगस्यापि तथात्वम्। तथाच घटप्रतियोगिकसंयोगवति घटाधिकरण एव संयोगेन घटाभावो न तिष्ठेत् वस्त्रादिसंयोगवति घटाभावस्य वृत्तौ च न किमपि बाधकमित्यतो व्यधिकरणसंयोगपर्य्योन्तानुसरणमिति। संयोगेन रूपं नास्तीत्यभावस्थले संयोगमात्रस्यैव प्रतियोगितावच्छेदकसम्बन्धत्वं वक्तव्यं न तु प्रतियोगिप्रतियोगिकस्य, रूपप्रतियोगिकसंयोगस्याप्रसिद्धत्वादिति । संयोगमात्राधिकरणे संयोगेन रूपाभावो मिश्रमते न वर्त्तातामित्येवमनुपपत्तिरूपो दोषो दीधितिकृताऽभिहित इति ।

व्यधिकरणेति स्वप्रतियोगित्वाधिकरणावर्त्तमानसंयोगवतीत्यर्थः । तत्सम्बन्धेति संयोगसम्बन्धावच्छिन्नप्रतियोगिताकरूपाद्यभावस्येत्यर्थः। विलयप्रसङ्ग इति तादृशरूपाभावस्य केवलान्वयितया विलयो नेष्ट इत्याशयः। तादृशविलये हेतुमाह अभावेति मिश्रमतसिद्धस्येत्यादिः। प्रतियोगितेति प्रतियोगितावच्छेदकीभूतसंयोगमात्रस्येत्यर्थः। तत्र= संयोगाधिकरणे। यदिच स्वप्रतियोगिप्रतियोगिकसम्बन्धस्यैव प्रतियो-

भागवीशो

ननु प्रतियोगिनिरूपितस्यैव प्रतियोगितावच्छेदकसम्बन्धस्य तथात्वं वाच्यम्, न तु प्रतियोगिनिरूपितो व्यधिकरणसम्बन्धोऽस्तीति, अतो न तदवच्छिन्नाभावस्य विलय इत्यत आह भवतामिति। तदभावेति। व्यधिकरणसम्बन्धावच्छिन्नाभावस्याभावः त्वन्मते न स्याद्, प्रतियोगिनिरूपिततादृशसम्बन्धस्य अप्रसिद्धत्वात्। अस्मा-

नारायणी

गितावच्छेदकसम्बन्धत्वं वाच्यं व्यधिकरणसंयोगसम्बन्धावच्छिन्नरूपाद्यभावप्रतियोगिप्रतियोगिकसम्बन्धस्त्वप्रसिद्धः, तथाच तादृशसम्बन्धस्याभावविरोधिनोऽप्रसिद्धया सर्वत्रैव व्यधिकरणसम्बन्धावच्छिन्नरूपाद्यभावो वर्त्तत एवेति न तस्य विलयः सम्भवतीत्युच्यते तथापि न निस्तारः—इत्याशङ्कायामाह नन्विति। प्रतियोगीति। प्रतियोगिप्रतियोगिकस्यैवेत्यर्थः। तदवच्छिन्नेति। व्यधिकरणसंयोगसम्बन्धावच्छिन्नरूपाद्यभावस्येत्यर्थः, आह दीधितिकार इति शेषः। भवताम् = मिश्राणाम्। व्यधिकरणेति संयोगसम्बन्धावच्छिन्नरूपाद्यभावाभावः इत्यर्थः, तन्मते = मिश्रमते। न स्यादित्यत्र हेतुमाह प्रतियोगीति। प्रतियोगिरूपप्रतियोगिकसंयोगसम्बन्धस्येत्यर्थः। अप्रसिद्धत्वादिति यदि प्रतियोगिप्रतियोगिकसम्बन्ध एव प्रतियोग्यभावाभाव इत्युच्यते तदा व्यधिकरणसंयोगसम्बन्धावच्छिन्नप्रतियोगिताकरूपाभावाभावः कथमपि न सम्भवति, रूपाभावप्रतियोगिरूपप्रतियोगिकसंयोगस्याप्रसिद्धत्वादित्याशयः।

नन्वेवमभावाभावस्य प्रतियोगिस्वरूपत्ववादिनां मते कथं तादृशरूपाभावाभावः सम्भवतीत्यत आह अस्माकं त्विति—अभावाभावस्य

जागदीशी

किन्तु गगनस्य स्वाभावविरहत्ववत् प्रतियोगिन एव तादृशाभाव-विरहत्वं तथाविधाभावस्य अनभ्युपगम एव नेति भावः। न च प्रतियोगिनः स्वाभावविरहत्वेन संयोगसम्बन्धावच्छिन्नघटाभावः कपाले नास्तीति प्रमा स्यात्, घटात्मकतादृशघटाभावविरहस्य सम-वायेनैव कपाले सत्त्वात् इति वाच्यम्। कपालस्य समवायेन घट-

नारायणी

प्रतियोगिस्वरूपत्वमङ्गीकुर्वतामित्यर्थः। दृष्टान्तमाह गगनस्येति तथाच गगनस्यावृत्तित्वेऽपि गगनस्य गगनाभावप्रतियोगित्वानपायाद् गगना-भावाभावत्वं यथा गगने सम्भवति तथा व्यधिकरणसंयोगसम्बन्धा-वच्छिन्नरूपाभावाभावत्वमपि संयोगेनावर्त्तमानस्य रूपस्य निर्विवादं, संयोगावच्छिन्नरूपाभावप्रतियोगित्वस्यापि रूपे सत्त्वादिति भावः।

स्वाभावेति गगनाभावाभावत्ववदित्यर्थः। प्रतियोगिन एव= रूपादेरेव। तादृशेति व्यधिकरणसंयोगसम्बन्धावच्छिन्नरूपाभावा-भावत्वम् तथाविधेति संयोगसम्बन्धावच्छिन्नरूपाभावाभावस्येत्यर्थः। अनभ्युपगम एव नेत्यस्माकमित्यनेन सम्बन्धः।

ननु संयोगसम्बन्धावच्छिन्नप्रतियोगिताकघटाभावाभावो यदि घट-स्वरूपः तदा घटस्य समवायेन कपाले वर्त्तमानतया संयोगसम्बन्धाव-च्छिन्नप्रतियोगिताकघटाभावाभाववत्कपालमित्याकारकं ज्ञानं प्रमा स्यात्। निरुक्तज्ञानस्य घटाभावाभावत्मकघटवति घटप्रकारकत्वात् तद्वति तत्प्रकारकज्ञानस्यैव प्रमात्वादित्याशङ्कते—नचेति वाच्यमिति परेणान्वयः। प्रतियोगिनः=घटादेः। स्वाभावेति घटाद्यात्मकप्रतियो-ग्यभावाभावत्वेनेत्यर्थः। प्रमा स्यादित्यत्र हेतुमाह घटात्मकेति घटा-त्मकसंयोगसम्बन्धावच्छिन्नप्रतियोगिताकघटाभावाभावस्येत्यर्थः।

जागदीशी

त्वावच्छिन्नवत्त्वेऽपि समवायेन संयोगसम्बन्धावच्छिन्नघटाभावाभावत्वावच्छिन्नवत्त्वाप्रसिद्ध्यैव ताद्रूप्येण प्रमात्वासम्भवात्। संयोगादिसम्बन्धेनैव तादृशघटाभावाभावत्वावच्छिन्नाधिकरणतायाः पारमार्थिकत्वात् तद्धर्मप्रकारेण प्रमात्वस्य तद्धर्मावच्छिन्नवद्विशेष्य-

नारायणी

समवायेनैवेत्यत्र एवकारेण संयोगादेरेव व्यवच्छेदः। तेन कालिकेन घटस्य कपाले सत्त्वेऽपि न क्षतिरिति ध्येयम्। समवायेन घटत्वावच्छिन्नवत्त्वस्य कपाले सत्त्वेऽपि तद्धर्मावच्छिन्नवति तद्धर्मावच्छिन्नप्रकारकज्ञानस्यैव प्रमात्वेन संयोगसम्बन्धावच्छिन्नप्रतियोगिताकघटाभावाभावत्वावच्छिन्नवति तादृशघटाभावाभावत्वावच्छिन्नप्रकारकज्ञानस्यैव संयोगसम्बन्धावच्छिन्नप्रतियोगिताकघटाभावः कपाले नास्तीत्याकारकतया तादृशज्ञानस्य प्रमात्वासम्भवात्, संयोगावच्छिन्नघटाभावाभावत्वावच्छिन्नवत्त्वस्य कपाले बाधात् इत्याशयेन समाधत्ते कपालस्येत्यादि। संयोगेति संयोगसम्बन्धावच्छिन्नत्वविशिष्टप्रतियोगिताकघटाभावाभावत्वावच्छिन्नवत्त्वस्याप्रसिद्ध्यैवेत्यर्थः। तादृशघटाभावाभावत्वावच्छिन्नसमवायावच्छिन्नाधिकरणतायाः पारमार्थिकत्वाभावे युक्तिमाह ताद्रूप्येणेति संयोगसम्बन्धावच्छिन्नघटाभावत्वावच्छिन्नाभावत्वेन रूपेणेत्यर्थः। प्रमात्वासम्भवादिति तद्रूपावच्छिन्नवति तद्रूपावच्छिन्नप्रकारकज्ञानस्यैव प्रमात्वादित्याशयः। संयोगादिसम्बन्धेनैवेत्यत्र एवकारेण संयोगातिरिक्तसम्बन्धव्यवच्छेदः। तादृशेति संयोगसम्बन्धावच्छिन्नप्रतियोगिताकेत्यर्थकम्। पारमार्थिकत्वादिति तथाच तद्धर्मपर्य्याप्तावच्छेदकताकनिरूपकताकाधिकरणत्वाभिन्नविशेष्यतानिरूपिततद्धर्मपर्याप्तावच्छेदकताकप्रकारताकज्ञानं प्रमेति भावः। तद्धर्मावच्छि-

जागदीशी

कत्वघटितत्वात् । अन्यथा विशिष्टसत्तायाः सत्तानतिरिक्तत्वेन गुणो विशिष्टसत्तावान् इत्यादिप्रतीतेः प्रमात्वापत्तेरिति ध्येयम् ।

इति केवलान्वय्यनुमानपूर्वपक्षः ।

नारायणी

न्ननिरूपकताकाधिकरणत्वाभिन्नविशेष्यतायाः प्रमात्वघटकत्वमाह— तद्धर्मावच्छिन्नेति । तद्धर्मपर्याप्तावच्छेदकताकनिरूपकताकाधिकरणरूप-विशेष्यकत्वघटितत्वादित्यर्थः ।

अन्यथेति तद्वन्निष्ठविशेष्यतानिरूपिततन्निष्ठप्रकारताकज्ञानस्य प्रमात्वे। सत्तेति सत्तास्वरूपत्वेनेत्यर्थः । प्रमात्वापत्तिरिति प्रमात्वं यदि तदाश्रयनिष्ठविशेष्यतानिरूपिततन्निष्ठप्रकारताकं ज्ञानं तदा गुणो विशिष्ट-सत्तावानित्याकारकज्ञानस्यापि प्रमात्वं स्यात्, विशिष्टसत्ताऽनतिरिक्त-सत्ताश्रयगुणनिष्ठविशेष्यताकत्वस्य तादृशविशिष्टसत्तानिष्ठप्रकारताकत्व-स्य च तादृशज्ञाने सत्त्वात्। अतः तद्धर्मपर्याप्तावच्छेदकताकनिरूपकता-काधिकरणताश्रयनिष्ठविशेष्यतानिरूपिततद्धर्मपर्याप्तावच्छेदकताकप्रका-रताकज्ञानस्यैव प्रमात्वं वाच्यम्, वैशिष्ट्यसत्तात्वावच्छिन्ननिरूपकता-काधिकरणताया गुणे विरहादस्मन्मते गुणो विशिष्टसत्तावानित्याकार-कज्ञानस्य न प्रमात्वापत्तिः। न चैवं जलपर्वतो वह्निमानित्याकारकानुमितेः प्रमात्वापत्तिः जलत्वत्वस्यानुपस्थिततया तद्धर्मपदेन तदुपादानासम्भ-वादिति वाच्यम्, लक्ष्यभेदेन लक्षणस्य नानात्वान्निरुक्तस्थले तद्वति तत्प्रकारकज्ञानस्यैव प्रमात्वस्य विवक्षितत्वात्। निरुक्तानुमितेः जलत्व-वति जलत्वप्रकारकत्वाभावेन प्रमात्वासम्भवादिति ध्येयमिति दिक्।

इति केवलान्वय्यनुमानपूर्वपक्षः ।

———

चिन्तामणिः

उच्यते । वृत्तिमदत्यन्ताभावाप्रतियोगित्वं केवलान्वयित्वम्, आकाशात्यन्ताभावो यद्यपि प्रतियोगिरूपा-

दीधितिः

वृत्तिमदित्यादि । आकाशस्य तदभावाभावत्वमित्यभ्युपगम-

जागदीशी

परिष्कुरुते इति । लक्ष्याप्रसिद्धिनिबन्धनस्य असम्भवस्य विशेषणान्तरप्रक्षेपेण वारणमेवास्य परिष्कारः। न चेह तथेति । न चाकाश-

नारायणी

वृत्तिमदत्यन्ताभावाप्रतियोगित्वमिति मूलं न केवलान्वयिनो लक्षणाभिधानपरं लक्षणस्य पूर्वमभिहितत्वात्, किन्तु यथोक्तलक्षणे व्यक्तिविशेषस्य केवलान्वयित्वसम्पत्तये लक्षणे विशेषणान्तरप्रक्षेपप्रदर्शनपरम्, अत एव दीधितिकृता केवलान्वयिनो लक्षणमाह इत्यनभिधाय परिष्कुरुते इत्येवाभिहितमिति । परिष्कारपदार्थं व्याचष्टे टीकायां लक्ष्याप्रसिद्धीति लक्ष्यस्याप्रसिद्धिप्रयुक्तस्येत्यर्थः । असम्भवस्येति लक्षणेत्यादिः । विशेषणान्तरेति वृत्तिमत्त्वरूपविशेषणान्तरस्य यः प्रक्षेपः लक्षणघटकत्वं तेनेत्यर्थः परिष्कार इति दीधितिस्थपरिष्कारशब्दस्यार्थ इति भावः। तथोच वृत्तिमत्त्वविशिष्टो योऽत्यन्ताभवस्तदप्रतियोगित्वं केवलान्वयित्वमिति यथाश्रुतमूललक्षणार्थः पर्य्यवसितः । भवति हि प्रमेयत्ववाच्यत्वादौ लक्षणसमन्वयः, प्रमेयत्वादेः स्वरूपसम्बन्धेन सर्वत्र वर्त्तमानतया तदभावस्याप्रसिद्धया वृत्तिमदत्यन्ताभावपदेन घटाभावादेरेव धर्त्तव्यतया तदप्रतियोगित्वस्य प्रमेयत्वादौ सत्त्वात्।

वृत्तिमत्त्वस्यात्यन्ताभावविशेषणत्वानुपादाने गगनाभावरूपकेवलान्वयिन्यव्याप्तिः, गगनाभावाभावस्यापि प्राचीनमतसिद्धतया तत्प्रति-

जागदीशी

वति आकाशाभावस्य असत्त्वप्रतीतिः, आकाशवत एवाप्रसिद्धत्वादित्यर्थः। अन्यथा प्रमेयत्वाद्यभावत्वमपि गगनादेः स्यात्, अविशेषा-

नारायणी

योगित्वस्यैव गगनाभावेऽनपायात्। तदुपादाने तु न तत्राव्याप्तिः, गगनाभावाभावस्य गगनस्य वृत्तिमत्त्वाभावेन धर्त्तुमशक्यतया तादृशघटाद्यभावाप्रतियोगित्वस्य गगनाभावेऽप्यक्षतत्वादिति तु समुदितमूलतात्पर्य्यमवसेयम्। ) १५८)

नव्यमतमनुसृत्याह दीधितौ आकाशस्येति। तदभावाभावत्वं = आकाशाभावाभावत्वम् अभ्युपगमेति प्राचीनमतस्वीकारमात्रमित्यर्थः। भाववति = घटादिमति। तदभावेतिघटाद्यभावस्यावर्त्तमानत्वप्रतीत्येत्यर्थः। भावस्य घटादेः। स्वाभावाभावत्वं = घटाद्यभावाभावत्वम्। नचेह तथेत्यादिदीधितिं विवृणोति टीकायां नचाकाशेति। आकाशवति आकाशस्यासत्त्वप्रतीत्यभावे हेतुमाह आकाशवत इति आकाशाधिकरणस्येत्यर्थः, तेन यथाकथंचित्सम्बन्धेनाकाशसम्बन्धिनः प्रसिद्धत्वेऽपि न क्षतिः। अप्रसिद्धत्वादिति (१५८ आकाशादेः सिद्धान्ते वृत्तिमत्त्वानभ्युपगमादिति हृदयम्। अन्यथेति तदधिकरणस्याप्रसिद्धावपि तस्य तदभावाभावत्वाद्यभ्युपगमे इत्यर्थः। प्रमेयत्वेति समवायादिसम्बन्धावच्छिन्नप्रमेयत्वाद्यभावत्वमपीत्यर्थः। तेन स्वरूपेण प्रमेयत्वाद्यभावस्यालीकतया तदभावापादनमसङ्गतमित्यपि पूर्वपक्षो निरस्त इति )१८ ध्येयम्। आदिना वाच्यत्वादिपरिग्रहः, गगनादेरेति आदिना आत्मादिपरिग्रहः। स्यादिति (वस्तुतो गगनं यदि प्रतियोगितासम्बन्धेन किञ्चिद्विशिष्टाभावत्ववत्स्यात् तदा स्वरूपादिसम्बन्धावच्छिन्नप्रतियोगितासम्बन्धेन प्रमेयत्वादिमदपि स्यात् इत्यपाद्याभावेनापादकाभावसिद्धौ तात्पर्य्यमिति भावः। अविशेषादिति गगनस्याधिकरणाप्रसिद्धावपि तस्य

चिन्तामणिः

त्यन्ताभावप्रतियोगी तथापि स न वृत्तिमानित्याकाङ्क्षा-

दीधितिः

मात्रम्, भाववति तदभावासत्त्वप्रतीत्या हि भावस्य स्वाभावा-
भावत्वं कल्प्यते, न चेह तथा, अभावप्रतियोगित्वं स्वरूप-
सम्बन्ध एवेत्युक्तमधस्तात्, अभावप्रतियोगित्वञ्चाप्रयो-

जागदीशी

दिति भावः। ननु प्रतियोगित्वान्यथानुपपत्त्यैव गगनस्य
स्वाभावाभावत्वं सेत्स्यतीत्यत आह अभावप्रतियोगित्वमिति। उक्त-
मिति। अभावविरहत्वस्य प्रतियोगितात्वे भेदप्रतियोगिनि अ-
व्याप्त्यापत्तेः, तथा तत्त्वावच्छेदकयोरतिव्याप्त्यापत्तेरिति भावः।

नारायणी

तदभावाभावत्वाभ्युपगमे गगनस्य तस्य कस्याप्यभावत्वमपि स्यात्,
उभयत्र निर्युक्तिकतायास्तुल्यत्त्वादिति परमार्थः। ) १८४ )
यदि च गगननिष्ठं गगनाभावीयप्रतियोगित्वं गगनाभावभावत्वरू-
पमेव, अभावाभावत्वस्य प्रतियोगितास्वरूपताया आचार्य्यैरभिहितत्वा-
दिति गगनस्याभावाभावत्वे निर्विवादमित्याशङ्क्याभावप्रतियोगि-
त्वमित्यादिदीधितिमवतारयति नन्विति प्रतियोगित्वेति गगनादिनिष्ठ-
प्रतियोगित्वस्य गगनादौ गगन ह्यभावाभावत्वसिद्धिं विनाऽनुपपत्त्यैवे-
त्यर्थः। स्वाभावेति गगनाभावाभावत्वमित्यर्थः। अधस्ताद् दीधिति-
कृता किमुक्तमित्याकाङ्क्षायां भावमाहाभावेति-अभावाभावत्वस्येत्यर्थः।
प्रतियोगितात्वे = प्रतियोगितास्वरूपत्वे। क्वचित्तथैव पाठः। भेदेति घटा-
दिभेदस्य प्रतियोगिनि घटादौ तत्प्रतियोगितेति घटादिभेदप्रतियोगिता-
-वच्छेदके घटत्वादावित्यर्थः। अव्याप्त्यतिव्याप्त्यापत्तेरिति घटादिभेदा-

जागदीशी

ननु यो यदत्यन्ताभावस्य प्रतियोगी सोऽवश्यं तदत्यन्ताभावस्याभाव इति सामान्यव्याप्त्या गगनाभावप्रतियोगित्वहेतुनैव गगनस्य स्वाभावाभावत्वं साधनीयमत आह अभावप्रतियोगित्वमिति ।

नारायणी

भावत्वस्य घटादिनिष्ठतया तस्य घटादौ विरहाद् घटादिभेदप्रतियोगिनि घटादावव्याप्तिः स्यात् । घटादिभेदाभावत्वस्य घटत्वादावेव वर्त्तमानतया घटत्वादौ घटादिभेदप्रतियोगितावच्छेदकेऽतिव्याप्तिश्च स्यात् यद्यभावाभावत्वरूपमेव प्रतियोगित्वं स्यादिति भावः ।

गगनाभावाभावत्वस्य गगनादावुभयवाद्यसिद्धतया तेन सह गगनाभावप्रतियोगित्वस्य व्याप्तिनिश्चयासम्भवाद् विशेषव्याप्तौ दृष्टान्तासम्भवाच्च विशेषव्याप्तिमुपेक्ष्य सामान्यव्याप्तिमाह यो यदत्यन्तेति तथाच साधनसजातीये घटाभावप्रतियोगित्वे साध्यसजातीयस्य घटाभावाभावत्वस्य व्याप्तिग्रहानन्तरं प्रकृतसाधने गगनाभावप्रतियोगित्वेऽपि प्रकृतसाध्यस्य गगनाभावाभावत्वस्य व्याप्तिग्रहोत्पत्त्या गगनं गगनाभावाभावः गगनाभावप्रतियोगित्वादित्याकारकानुमानाद् गगनस्य गगनाभावाभावत्वसिद्धिः सम्भवतीत्याशयः । साधनीयमिति तथाच वृत्तिमत्पदं सार्थकमेवेति हृदयम् । दीधितिकारोक्ताभावप्रतियोगित्वमित्यत्राभावपदस्यात्यन्तान्योन्याभावसाधारणाभावत्वेनाभावमात्रपरत्वे व्यभिचारेण यो यदत्यन्तेति सामान्यव्याप्तिरेव न सम्भवति, घटादिभेदरूपाभावप्रतियोगिताया घटे सत्त्वेन तत्र घटभेदाभावत्वरूपसाध्यस्य विरहेण तस्य घटत्वादावेव सत्त्वाद् घटादौ व्यभिचारस्य जागरूकत्वात् । नचाभावपदस्यात्यन्ताभावपरत्वेऽपि व्यभिचारतादवस्थ्यम्, धर्मिभेदधर्मात्यन्ताभावयोरैक्याद् घटत्वात्यन्ताभावरूपघटादिभेदप्रतियोगिताया घटादौ सत्त्वेन तत्र घटत्वाभावाभावत्वरूपसाध्यस्य विरहादिति वाच्यम्, नव्यमते धर्मिभेदधर्मात्यन्ताभावयोर्भिन्नत्वात् । तयोरभि-

चिन्तामणिः

त्यन्ताभाव एव केवलान्वयी। तथा प्रमेयत्वाभिधेयत्वादि

दीधितिः

जकम् । एवञ्च यत्सम्बन्धावच्छिन्नप्रतियोगिताकाभावा-
प्रतियोगित्वं यस्य तस्य तेन सम्बन्धेन केवलान्वयित्वमिति

जागदीशी

अत्यन्ताभावप्रतियोगित्वमित्यर्थः। तेन भेदस्य प्रतियोगिनि न
व्यभिचारः। अप्रयोजकमिति। यत्तदर्थयोरननुगतत्वेन सामान्य-
व्याप्तेरसत्त्वादिति भावः। तत् किं वृत्तिमत्पदमफलमेव इत्या-

चिन्तामणि।

न्तवेऽपि यो यदत्यन्ताभावत्वनिरूपितप्रतियोगितावान् तदभावा-
भावत्ववान् इत्यस्या एव व्याप्तेर्विवक्षिततया व्यभिचारासम्भवाच्च,
घटत्वाद्यभावत्वनिरूपितप्रतियोगिताया घटादौ विरहात्। नच तथापि
घटादिध्वंसघटादिप्रागभावादावपि, घटाद्यत्यन्ताभावनिरूपितप्रति-
योगित्वस्याक्षततया तत्र व्यभिचार इति वाच्यम्, नव्यैरत्यन्ताभावस्य
त्रितयप्रतियोगिकत्वानभ्युपगमादित्यस्य दीधितिकृता पूर्वमुक्तत्वात् इत्या-
शयेनाभावपदस्यात्यन्ताभावपरत्वं व्यवस्थापयति अत्यन्तेति अत्यन्ता-
भावत्वनिरूपितप्रतियोगित्वमित्यर्थः। तेन = अभावपदस्यात्यन्ताभाव-
परत्वव्यवस्थापनेन। भेदस्येति घटादीत्यादिः। प्रतियोगिनि = घटादौ
न व्यभिचार इति घटादिभेदस्यात्यन्ताभावपदेनोपादानासम्भवादिति
हृदयम्, अधिकमभिहितं प्राक्। निरुक्तहेतोरप्रयोजकत्वे युक्तिमाह यत्तद-
र्थयोरिति अननुगतत्वेन = अनुगमासम्भवेन। सामान्यव्याप्तेरसत्त्वादिति

जागदीशी

शङ्कायामाह एवञ्चेति । तथा च उद्वृत्तो हि ग्रन्थ इत्यादिन्यायात् सम्बन्धविशेषावच्छिन्नप्रतियोगितालाभार्थमेव वृत्तिमत्पदमिति भावः । नव्याः पुनराकाशाभावो

नारायणी

यो यदत्यन्तेत्यादौ यत्पदेन घटादेरुपग्रहे स्वरूपासिद्धिः, घटाद्यभावप्रतियोगितायाः पक्षीभूते गगने विरहात् । गगनादेरुपग्रहे तु दृष्टान्तासिद्धिः, गगनाद्यभावप्रतियोगिताया घटादौ विरहादित्याशयः ।

वृत्तिमत्पदं सार्थकीकर्त्तुं भावमाह तथा चेति उद्‌वृत्तो हीत्यादि उद्वृत्तो हि ग्रन्थः । अधिकफलमाचष्टे इति न्यायादित्यर्थः, उद्वृत्तो = अधिकः यथाविवक्षितफलाप्रयोजक इति तु न्यायः, आदिना लक्षणयाऽपि वृत्तिमत्पदस्य सम्बन्धविशेषावच्छिन्नपरत्वोपग्रहः । कथन्तानिवृत्त्यर्थमाह सम्बन्धेति केवलान्वयिताघटकसम्बन्धावच्छिन्नप्रतियोगितालाभार्थमेवेत्यर्थः वृत्तिमत्पदमिति तथाच केवलान्वयिताघटकसम्बन्धावच्छिन्ना या अभावप्रतियोगिता तदभाववत्त्वं केवलान्वयित्वमिति समुदितलक्षणार्थः पर्यवसितः ।

प्रकारान्तरेण वृत्तिमत्पदं सार्थकीकुर्वतां नव्यानां मतमाह नव्याः पुनरिति अयमाशयः यथाश्रुतवृत्तिमत्पदेन गगनाभावस्य केवलान्वयित्वोपपादनं न सम्भवति, विशिष्टस्य शुद्धानतिरिक्ततया गगनाभावस्य घटादिवृत्तित्वविशिष्टगगनाभावात्मकत्वेन तादृशविशिष्टाभावस्वरूपगगनाभावप्रतियोगी वृत्तिमान् यो घटादिवृत्तित्वविशिष्टगगनाभावाभावः तत्प्रतियोगितायाः घटादिवृत्तित्वविशिष्टगगनाभावे सत्त्वादेव गगनाभावेऽप्यक्षतत्वात् वृत्तिमदत्यन्ताभावाप्रतियोगित्वस्य गगनाभावे उपपादयितुमशक्यत्वात् । अतो वृत्तिमदत्यन्ताभावपदेन स्वप्रतियोगित्वाश्रयानधिकरणवृत्तिमदत्यन्ताभाव एव विवक्षणीयः। एवञ्च न गगनाभा-

जागदीशी

यद्यपि विशिष्टस्वाभावात्मकप्रतियोगिस्वरूपाभावस्य प्रतियोगी, तथापि विशिष्टाभावात्मकस्वप्रतियोगिस्वरूपाभावो न वृत्तिमान्, न प्रतियोग्यनधिकरणे वृत्तिमान्, वृत्तिमत्पदेन प्रतियोग्यनधिकरणवृत्तिमत्त्वस्यैव उक्तत्वात्-इत्येवं क्रमेण मूलव्याख्याने गगनस्य स्वभावा-

नारायणी

वस्य केवलान्वयित्वानुपपत्तिः, घटादिवृत्तित्वविशिष्टगगनाभावाभावस्य वृत्तिमत्त्वेऽपि तस्य स्वप्रतियोगित्वाश्रयानधिकरणवृत्तित्वासम्भवात्, तादृशाभावप्रतियोगित्वाश्रयगगनाभावस्यानधिकरणताया एवाप्रसिद्धेरिति। यद्यपीति तथापीति परेण सम्बन्धः। विशिष्टेति घटादिवृत्तित्वविशिष्टं यत् स्वमाकाशाभावः तदभावात्मको य आकाशाभावस्य प्रतियोगी विशिष्टाकाशाभावाभावः तस्येत्यर्थः। घटादिवृत्तित्वविशिष्टाकाशाभावाभावस्य योऽभावः तस्य घटादिवृत्तित्वविशिष्टाकाशाभावस्वरूपतया आकाशाभावस्य प्रतियोगिताया आकाश इव घटादिवृत्तित्वविशिष्टाकाशाभावाभावेऽपि सत्त्वस्यावश्यकत्वात्, घटादिवृत्तित्वविशिष्टाकाशाभावस्य शुद्धाकाशाभावानतिरिक्तत्वादिति हृदयम्।

विशिष्टेति घटादिवृत्तित्वविशिष्टं यत् स्वम् आकाशाभावस्तत्प्रतियोगिस्वरूपो यो घटादिवृत्तित्वविशिष्टाकाशाभावाभावः स इत्यर्थः। न वृत्तिमानिति मूलं विवृणोति न प्रतियोग्येति न स्वप्रतियोगित्वाश्रयानधिकरणवृत्तिमानित्यर्थः। तादृशघटादिवृत्तित्वविशिष्टाकाशाभावाभावप्रतियोगिनः आकाशाभावस्यानधिकरणताया एवाप्रसिद्धेरिति भावः। वृत्तिमत्पदेनेति मूलोक्तस्येत्यादिः प्रतियोग्येति स्वप्रतियोगित्वाश्रयानधिकरणवृत्तिमत्त्वस्येत्यर्थः। उक्तत्वात्=विवक्षितत्वात्। इत्येवंक्रमेण=इत्येवंरीत्या। मूलव्याख्याने=यद्यपीत्यादिमूलव्याख्याने।

चिन्तामणिः

केवलान्वयि, वृत्तिमतोऽत्यन्ताभावस्याप्रतियोगित्वात् ।

दीधितिः

सूचयितुं वृत्तिमदिति । अत एव ज्ञानस्य ज्ञानत्वस्य च समवायेन ज्ञानविषयत्वादेश्च व्यधिकरणसमवायादिना सम्बन्धेनाभावप्रतियोगित्वेऽपि विषयतया परम्परासम्बन्धेन स्वरूप-

जागदीशी

भावत्वविरहेऽपि न मूलासङ्गतिरित्याहुः । सम्बन्धनिवेशस्य फलमाह अत एवेति । ज्ञानस्य समवायसम्बन्धेन अभावप्रतियोगित्वेऽपि

नारायणी

स्वाभावेति। गगनाभावाभावत्वस्य विरहेऽपीत्यर्थः। न मूलासङ्गतिरिति। न मूलोक्तवृत्तिमत्पदस्य व्यर्थता कथमपि शङ्कनीयेत्याशयः। संयोगाभावस्य केवलान्वयित्वोपपत्तये लक्षणघटकाभावे स्वप्रतियोगित्वाश्रयानधिकरणवृत्तितायाः अवश्यं विवक्षणीयतया गगनाभावसंग्राहकवृत्तिमत्पदस्य निरुक्तार्थकतायाः निर्युक्तिकत्वादाहुरित्युक्तमिति ध्येयम् इति श्रीचरणभट्टाचार्य्यपादाः ।

सम्बन्धेति = केवलान्वयिताघटकसबन्धावच्छिन्नप्रतियोगितानिवेशस्येत्यर्थः। ज्ञानस्य समवायसम्बन्धेनेत्यादि। तथाच केवलान्वयिताघटकसम्बन्धावच्छिन्नप्रतियोगितापर्य्यन्ताविवक्षणे विषयतासम्बन्धेन ज्ञानस्य केवलान्वयित्वानुपपत्तिः, समवायेन ज्ञानसामान्याभावप्रतियोगितायाः ज्ञाने सत्त्वात्। अतः केवलान्वयिताघटकसम्बन्धावच्छिन्नत्वेन प्रतियोगिता विशेषणीया। अत्रच केवलान्वयिताघटकसम्बन्धावच्छिन्नत्वेन प्रतियोगितायाः अविवक्षणे यत्किञ्चित्सम्बन्धावच्छिन्नप्रतियोगित्वाभाव एव विवक्षणीयः। एवञ्च समवायेनापि ज्ञानाभावस्यापि धर्त्तुं शक्यतया तत्प्रतियोगित्वस्य ज्ञाने सत्त्वाद् भवत्यव्याप्तिरि-

जागदीशी

विषयतया केवलान्वयित्वमिति योजना। अत्र ज्ञानं सर्वगोचरं ग्राह्यम्। तत्तन्मात्रविषयकज्ञानस्य विषयतासम्बन्धेन सर्वत्र असत्त्वात् तस्य अलक्ष्यत्वादिति ध्येयम्। साक्षात्सम्बन्धेन केवलान्वयित्वमुक्त्वा परम्परासम्बन्धेन तमाह ज्ञानत्वस्येति।

नारायणी

त्याशयः। सम्बन्धसामान्यावच्छिन्नप्रतियोगित्वाभावविवक्षणे तु सम्बन्धसामान्यपदेन संयोगासमवायविषयत्वाद्यन्यतमसम्बन्धस्यैव विवक्षणीयतया तादृशान्यतमसम्बन्धेन ज्ञानाभावस्य धर्त्तुमशक्यत्वेऽपि घटपटादेरपि केवलान्वयित्वापत्तिः, तादृशान्यतमसम्बन्धेन घटादेरभावस्य धर्त्तुमशक्यत्वात् इति तु परमार्थः।

ननु अस्मदादिज्ञानस्य विषयतया सर्वत्रासत्त्वात्कथं तस्य केवलान्वयित्वमित्यत आह अत्रेति दीधितिग्रन्थे इत्यर्थः। घटकत्वं सप्तम्यर्थः। तस्य च ज्ञानमित्यनेनान्वयः। तथाच दीधितिग्रन्थघटकीभूतं ज्ञानं सर्वविषयकं ग्राह्यमिति तु फलितार्थः। तत्तदिति अस्मदीययत्किञ्चित्पदार्थविषयकज्ञानस्येत्यर्थः। सवत्र अत्त्वादिति। तथाच तस्य केवलान्वयित्वं न कस्यापि सम्मतमिति भावः। साक्षात्सम्बन्धेनेति संयोगसमवायस्वरूपकालिकविषयत्वविषयित्वान्यतमत्वव्याप्यसम्बन्धत्वं साक्षात्सम्बन्धत्वं तादृशविषयतारूपसाक्षात्सम्बन्धेनेत्यर्थः। परम्परेति तादृशव्याप्यभिन्नसम्बन्धेनेत्यर्थः। तमाह = केवलान्वयित्वमाह। तथाच केवलान्वयिताघटकसम्बन्धावच्छिन्नत्वाविवक्षणे स्वाश्रयविषयत्वरूपपरम्परासम्बन्धेन ज्ञानत्वस्य केवलान्वयित्वं न स्यात्। समवायसम्बन्धेन ज्ञानत्वाभावे प्रतियोगितायाः ज्ञानत्वे सत्त्वात्। अतः केवलान्वयिताघटकसम्बन्धावच्छिन्नत्वं प्रतियोगिताविशेषणमिति भावः।

जागदीशी

समवायेन अभावप्रतियोगित्वेऽपि स्वाश्रयविषयत्वरूपपरम्परा-सम्बन्धेन केवलान्वयित्वमित्यन्वयः। स्वाश्रयविषयत्वादिसम्बन्धस्य वृत्त्यनियामकतया तादृशसम्बन्धावच्छिन्नप्रतियोगित्वाप्रसिद्धया तत्सम्बन्धेन ज्ञानत्वादेः केवलान्वयित्वासम्भवमनुसृत्याह

नारायणी

अथ विषयत्वस्वाश्रयविषयत्वयोर्वृत्त्यनियामकतया तत्सम्बन्धावच्छिन्नप्रतियोगित्वस्याप्रसिद्धया कथं विषयतया स्वाश्रयविषयतया च ज्ञानज्ञानत्वयोः = केवलान्वयित्वं सम्भवति इति चेन्न, केवलान्वयिताघटकसंसर्गातिरिक्तसम्बन्धावच्छिन्नत्व-केवलान्वयिनिष्ठत्वोभयाभावस्य प्रतियोगितायां विवक्षितत्वात्। एवञ्च संयोगेन घटाद्यभावमादायैव ज्ञानादेः केवलान्वयित्वोपपत्तिरिति ध्येयम्।

**समवायेनेत्यादि** समवायसम्बन्धावच्छिन्नज्ञानाभावज्ञानत्वाभावयोः प्रतियोगितया ज्ञाने ज्ञानत्वे सत्त्वेऽपीत्यर्थः। **स्वाश्रयेति** स्वं ज्ञानत्वं तदाश्रयविषयत्वरूपपरम्परासम्बन्धेनेत्यर्थः। केवलान्वयित्वमिति दीधितिस्थमेव योजितम्, अधिकस्य व्यर्थतापत्तेः। विषयत्वस्य स्वरूपसम्बन्धेन केवलान्वयित्वानुपपत्तिः स्याद् यदि केवलान्वयिताघटकसम्बन्धावच्छिन्नप्रतियोगितानिवेशो न स्यात् इत्याशयेन ज्ञानविषयत्वादेरित्यादिदीधितिमवतारयति **स्वाश्रयेति** अत्रादिना विषयतासम्बन्धस्य परिग्रहः। तत्सम्बन्धेन = वृत्त्यनियामकस्वाश्रयविषयत्वादिसम्बन्धेन **ज्ञानत्वादेरिति** आदिना ज्ञानादिपरिग्रहः। तथाच विषयतया स्वाश्रयविषयतया वा ज्ञानज्ञानत्वयोः केवलान्वयित्वं न युक्तिसहमित्याशयः। नच केवलान्वयिताघटकसंसर्गातिरिक्तसम्बन्धानवच्छिन्नत्वकेवलान्वयिनिष्ठत्वोभयाभावस्य प्रतियोगितायां विवक्षाणान्न ज्ञानादेर्विषयतया केवलान्वयित्वानुपपत्तिरिति वाच्यम्, केवलान्व-

जागदीशी

ज्ञानविषयत्वादेश्चेति । आदिना गगनाद्यभावस्य संग्रहः । तेन विषयभेदेन विषयताया अननुगतत्वेन अलक्ष्यत्वेऽपि न क्षतिः । वक्ष्यमाणावच्छेदकगर्भलक्षणाभिप्रायेण ज्ञानविषय-

नारायणी

यिताघटकसंसर्गातिरिक्तसमानाधिकरणसम्बन्धानवच्छिन्नप्रतियोगिता-विवक्षणे ज्ञानज्ञानत्वादौ अव्याप्तिविरहाद् ज्ञानविषयत्वादेः समवाया-दिनाऽभावमादाय केवलान्वयित्वानुपपत्तेरभिधीयमानत्वात्। विषयत्वा-देरित्यत्रादिपदसंग्राह्यमाह गगनाद्यभावस्येति अत्राप्यादिनाऽऽत्मादेः परिग्रहः। तेन = आदिना गगनाभावादेः संग्रहेण, विषयभेदेन घटादि-रूपविषयभेदेन अननुगतत्वेन = विषयताया भिन्नत्वेन, अलक्ष्यत्वेऽपीति तथाच विषयताया भिन्नत्वादेकविषयत्वस्यापरविषयेऽभावसत्त्वात् तस्य केवलान्वयित्वं न सम्भवयुक्तिकमिति विषयतायाः केवलान्वयिलक्ष-णालक्ष्यत्वमेव युक्तमित्याशयः। न क्षतिरिति तथाच केवलान्वयिता-घटकसम्बन्धावच्छिन्नप्रतियोगित्वाविवक्षणे स्वरूपसम्बन्धेन गगनाभा-वादेरपि केवलान्वयित्वं न स्यात्, कालिकेन गगनाभावाभावस्यात्मादौ वर्त्तमानत्वात् तत्प्रतियोगिताया गगनाभावे सत्त्वात् इति विषयतायाः केवलान्वयित्वाभावेऽपि केवलान्वयिताघटकसम्बन्धावच्छिन्नप्रतियो-गितानिवेशस्य व्यावृत्तेर्नासङ्गतिरिति हृदयम्। कश्चित्तु—विषयताया भि-न्नत्वेऽपि वक्ष्यमाणताद्दशात्यन्ताभावप्रतियोगितानवच्छेदकधर्मवत्त्वमेव केवलान्वयित्वमिति लक्षणमभिप्रेत्यैव केवलान्वयिताघटकसम्बन्धाव-च्छिन्नप्रतियोगिताया अविवक्षणे विज्ञानविषयत्व एव अव्याप्तिर्दीधिति-कृताऽभिहिता। तत्तद्विषयत्वाभावस्य धर्त्तुं शक्यत्वेऽपि विषयत्वसा-मान्याभावस्य धर्त्तुमशक्यत्वादत्यन्ताभावप्रतियोगितावच्छेदकताप-र्याप्त्यनधिकरणधर्मताद्दशविषयतास्वरूपमादायैव विषयत्वे केवला-न्वयिलक्षणसङ्गतिरित्याह तन्मतमुपन्यस्यति वक्ष्यमाणेति। दीधिति-

जागदीशी

त्वस्य उपादानमित्यपि कश्चित् । व्यधिकरणेत्युपलक्षणम् । समानाधिकरणकालिकादिसम्बन्धेनापि गगनादौ ज्ञानविषयत्वादेरभावसत्त्वे बाधकाभाव इत्यपि द्रष्टव्यम् । [ वस्तुतो ननु केवलान्वयिताघटकान्यसमानाधिकरणसंसर्गानवच्छिन्नाया एव प्रतियोगितायाा निवेश्यत्वान्न समवायेन ज्ञानादेरभावमादायाऽव्याप्तिरत आह ज्ञानविषयत्वादेश्चेति । आदिना ज्ञानज्ञानत्वाद्युपग्रहः । ]

नारायणी

कृता वक्ष्यमाणं यत् तादृशात्यन्ताभावप्रतियोगितानवच्छेदकधर्मवत्त्वरूपावच्छेदकगर्भलक्षणं तदभिप्रायेणेत्यर्थः । उपादानमिति दीधितिकृता कृतमिति शेषः । अप्रतियोगित्वगर्भलक्षणमभिप्रेत्यैव ज्ञानादेः केवलान्वयिताघटकसम्बन्धेन प्रतियोगित्वाविवक्षणे ज्ञानादेः केवलान्वयित्वानुपपत्तेरभिहिततया केवलं ज्ञानविषयत्वस्थले वक्ष्यमाणलक्षणादरो न समीचीन इत्याशयेन कश्चिदित्युक्तम् ।

ननु व्यधिकरणसमवायादिना ज्ञानविषयत्वादेरभावमादायाव्याप्तिदानं न युक्तम्, समानाधिकरणकालिकादिसम्बन्धेनापि ज्ञानविषयत्वाभावस्य गगनादौ वर्तमानतया केवलान्वयिताघटकसम्बन्धाविवक्षणे समानाधिकरणकालिकादिसम्बन्धेनाप्यभावमादायाव्याप्तिसम्भव इत्यत आह व्यधिकरण इति । समानाधिकरणेति स्वप्रतियोगितासमानाधिकरणेत्यर्थकम्, कालिकादीत्यादिना दिक्कृतविशेषणतापरिग्रहः । गगनादावित्यत्रादिनाऽऽत्मादिपरिग्रहः । अभावसम्भवादिति गगननिष्ठस्य कालिकादिसम्बन्धेन गगनाभावाद्यभावप्रतियोगिताया गगनाभावेऽप्यनपायादिति भावः ।

यथाश्रुतमूलोक्तलक्षणं संयोगाभावेऽव्याप्तम्, द्रव्यनिष्ठस्य संयोगाभावाभावस्य संयोगस्य प्रतियोगितायाः संयोगाभावे सत्त्वात् । अतो दीधि-

जागदीशी

संयोगाद्यभावेति । यद्यपि प्रमेयत्वादेरपि वैशिष्ट्याद्यवच्छिन्नाभाव-प्रतियोगित्वात् असम्भववारणाय इत्येव वक्तुमुचितम्, तथापि विशेष्यादिमति विशिष्टाभावादेर्न विशेष्यादिप्रतियोगित्वमिति प्राचां

नारायणी

तिकृता संयोगाभावेऽव्याप्तिवारणप्रयोजनकं लक्षणघटकाभावे प्रतियोगिवैयधिकरण्यं विवक्षितम् तदसङ्गतं स्यात्, तादृशाभावे प्रतियोगिवैयधिकरण्यविवक्षणेऽसम्भवस्यैव सम्भवात् इत्याक्षिपति यद्यपीति । प्रमेयत्वादेरपीत्यत्रादिना वाच्यत्वादिपरिग्रहः। वैशिष्ट्येति घटत्व-वैशिष्ट्यावच्छिन्नप्रमेयत्वाभावप्रतियोगितायाः प्रमेयत्वादौ सत्त्वात्। अत्राप्यादिना गगनप्रमेयत्वोभयत्वावच्छिन्नाभावपरिग्रहः। असम्भवेति सर्वत्रैव विशिष्टाभावोभयाभावमादायासम्भवस्य सम्भवात्तद्वारणाय प्रतियोगिवैयधिकरण्यं विवक्षणीयम्—इत्येवं वक्तुमुचितम्।

प्रतियोगिवैयधिकरण्यविवक्षणे तु प्रतियोगित्वानधिकरणवृत्त्य-भावस्यैव विवक्षणीयतया घटत्वविशिष्टप्रमेयत्वाभावस्य गगनप्रमेय-त्वोभयाभावस्य च धर्त्तुमशक्यत्वात् तादृशाभावप्रतियोगित्वाश्रयप्रमेय-त्वानधिकरणाप्रसिद्धेः तादृशघटाभावप्रतियोगित्वाभावस्य च प्रमेयत्वा-दावक्षतत्वात् इति तु शङ्काभिप्रायः। उत्तरयति— तथापीति विशेष्या-दिमति=घटत्वविशिष्टप्रमेयत्वरूपविशिष्टस्य विशेष्यीभूतप्रमेयत्वादिमति पटादौ । विशिष्टेति घटत्वविशिष्टप्रमेयत्वाभावादेः। न विशेष्येति न प्रमेयत्वादिप्रतियोगिकत्वमित्यर्थः। उभयाभावस्यापि यदभावप्रयु-क्तोभयाभावः तत्प्रतियोगिकत्वमेवेति मन्तव्यम। इति प्राचां मतेन= इत्याकारकप्राचीनमतानुसारेण। तथाच घटत्वविशिष्टप्रमेयत्वाभाव-प्रतियोगित्वं विशेषणीभूतघटत्व एव न तु विशेष्ये प्रमेयत्वादौ। गगन-प्रमेयत्वोभयाभावप्रतियोगित्वमपि गगनादावेव नतु प्रमेयत्वादौ इति

दीधितिः

सम्बन्धेन च केवलान्वयित्वम् । संयोगाद्यभावोपसंग्रहाय च

जागदीशी

मतेन वैशिष्ट्याद्यनवच्छिन्नप्रतियोगित्वनिवेशाभिप्रायेण वा संयोगाद्यभावानुसरणम् । प्रतियोग्येति । प्रतियोग्यनधिकरणवृत्तित्वेनेत्यर्थः । तथा च स्वावच्छेदकसम्बन्धेन स्वाश्रयानधिकरणवृत्त्यभावीयतत्सम्बन्धावच्छिन्नप्रतियोगित्वाभाव एव तत्सम्बन्धेन केवलान्वयित्वमिति फलितम् । तेन घटाद्यभावस्यैव घटादिविशिष्ट-

नारायणी

तादृशाभावप्रतियोगित्वाभावस्य प्रमेयत्वादौ वर्त्तमानतया नासम्भवो दीधितिकृताऽभिहित इति परमार्थः ।

ननु घटत्वविशिष्टप्रमेयत्वाद्यभावप्रतियोगित्वं यदि घटत्वादौ स्वीक्रियते तदा घटत्वविशिष्टप्र प्रमेयत्वं तादृशाभावप्रतियोगीति व्यवहारो न स्यात्, अभावाभावत्वरूपप्रतियोगित्वस्य घटत्वादौ विरहाच्चेति नव्यमतमनुसृत्याह वैशिष्ट्येति । वैशिष्ट्यव्यासज्यवृत्तिधर्मानवच्छिन्नाभावप्रतियोगित्वाभाववत्त्वस्य केवलान्वयित्वाभिप्रायेणेवेत्यर्थः । संयोगाद्यभावानुसरणमिति तथाच संयोगाभावेऽव्याप्तिवारणमात्रप्रयोजनकमेव प्रतियोगिवैयधिकरण्यमिति भावः ।

प्रतियोगिवैयधिकरण्यपदार्थं निरूपयति तथाचेति स्वावच्छेदकेति प्रतियोगितावच्छेदकार्थकम्, स्वाश्रयेति प्रतियोगित्वाश्रयार्थकम्, फलितमिति तथा च प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोगित्वाश्रयानधिकरणे वर्त्तमानो योऽभावस्तन्निरूपितकेवलान्वयिताघटकसम्बन्धावच्छिन्नप्रतियोगित्वाभाववत्त्वं केवलान्वयित्वम्—इति समुदितलक्षणार्थः पर्य्यवसितः । तेन स्वावच्छेदकेत्यादिना स्वपदघटितलक्षणार्थनिर्वचनेन । घटादिविशिष्टेति सामानाधिकरण्यसम्बन्धेन घटादि-

जागदीशी

वाच्यत्वाद्यभावत्वमतेऽपि न प्रतियोग्यनधिकरणवृत्त्यभावस्याप्रसिद्धिः, स्वपदस्य अग्रिमप्रतियोगित्वपरत्वादिति ध्येयम् ।

नारायणी

विशिष्टं यद् वाच्यत्वं तदभावत्वमतेऽपीत्यर्थः। **न प्रतियोग्येति** न प्रतियोगित्वाश्रयानधिकरणवृत्त्यभावस्याप्रसिद्धिरित्यर्थः । प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोगित्वाश्रयानधिकरणवृत्त्यभावपर्य्यन्तमात्रविवक्षणे तादृशाभावस्याप्रसिद्धिः, समनियताभावयोरैक्यात् संयोगेन घटाभावस्यैव सामानाधिकरण्यसम्बन्धेन घटविशिष्टवाच्यत्वाभावस्वरूपतया घटाभावप्रतियोगिताया वाच्यत्वेऽपि सत्त्वेन घटाभावप्रतियोगित्वाश्रयवाच्यत्वानधिकरणाप्रसिद्ध्या प्रतियोगिव्यधिकरणाभावाप्रसिद्ध्यैव सर्वत्र केवलान्वयिन्यसम्भवः स्यात्, अतः स्वावच्छेदकेत्यादिना स्वपदघटितमेव लक्षणार्थनिर्वचनं कृतम् एवञ्च घटाभावस्य घटविशिष्टवाच्यत्वाभावरूपत्वेऽपि स्वपदेन घटनिष्ठप्रतियोगिताया एव धर्त्तव्यतया तदवच्छेदकसंयोगसम्बन्धेन घटानधिकरणे वर्त्तमानस्य घटाभावस्य यत्संयोगावच्छिन्नं प्रतियोगित्वं तदभाववत्त्वस्य सर्वत्र केवलान्वयिनि प्रमेयत्वादौ सत्त्वात् नासम्भवः । न चाभावव्यक्तेरभिन्नत्वेऽपि प्रतियोगिताया ऐक्यं शङ्कनीयम्, प्रतियोगितावच्छेदकभेदेनैव प्रतियोगिताया भिन्नत्वात्। अन्यथा घटपटाद्यभावप्रतियोगिताया अप्यैक्यापत्तिरिति तु तत्त्वम् ।

स्वपदग्राह्यमाह **स्वपदस्येति** निरुक्तस्वावच्छेदकेत्यादिनाऽभिहितस्वपदस्येत्यर्थः । **अग्रिमेति** स्वाश्रयानधिकरणवृत्त्यभावीयकेवलान्वयिताघटकसम्बन्धावच्छिन्नप्रतियोगिताबोधेच्छया उच्चरितत्वादित्यर्थः ।

जागदीशी

ननु गगनस्याधिकरणस्य अप्रसिद्ध्या तदभावस्य प्रतियोगिवैयधिकरण्यविरहात् तादृशघटाद्यभावस्य अप्रतियोगित्वं गगनस्यापीति तत्रातिव्याप्तिः, स्वरूपसम्बन्धात्मनः प्रतियोगित्वस्य प्रतियोगिभेदेन

नारायणी

संयोगाभावनिष्ठस्वरूपसम्बन्धावच्छिन्नप्रतियोगित्वाश्रयसंयोगाभावानधिकरणाप्रसिद्ध्या स्वपदेन स्वरूपसम्बन्धावच्छिन्नसंयोगाभावनिष्ठप्रतियोगितायाः धर्त्तुमशक्यतया तादृशस्वरूपसम्बन्धावच्छिन्नगगनत्वाद्यभावीयप्रतियोगिताशून्यतायाः संयोगाभावे सत्त्वेन तत्र प्रतियोगिवैयधिकरण्यघटितनिरुक्तलक्षणसमन्वयाद्व्याप्तिविरहेऽपि प्रतियोगिवैयधिकरण्यविवक्षयैव समवायादिना गगनेऽतिव्याप्तिः स्यात्, समवायावच्छिन्नगगननिष्ठप्रतियोगित्वाश्रयगगनस्य समवायेनाधिकरणाप्रसिद्ध्या तदनधिकरणस्यापि अप्रसिद्धत्वात् स्वपदेन गगननिष्ठप्रतियोगिताया धर्त्तुमशक्यत्वात्, समवायावच्छिन्नघटनिष्ठप्रतियोगिताया धर्त्तुं शक्यत्वेऽपि तज्जन्यत्वस्यापि गगनेऽक्षतत्वात् इत्याशङ्क्य आकाशाभावोऽपीति दीधितिग्रन्थमवतारयितुमाह नन्विति अधिकरणस्येति समवायादिनेत्यादिनेत्यादिः। तदभावस्य = समवायादिना गगनाद्यभावस्य प्रतियोगीति यथोक्तप्रतियोगिवैयधिकरण्यविरहादित्यर्थः। तादृशेति स्वावच्छेदकसम्बन्धेन स्वाश्रयानधिकरणवृत्तिघटाद्यभावस्येत्यर्थः। अप्रतियोगित्वम् = प्रतियोगित्वाभाववत्त्वम् तत्र = गगने। अतिव्याप्तिरिति। प्रतियोगिवैयधिकरण्यनिवेशादेव यथोक्तरीत्या गगनेऽतिव्याप्तिः। तदनिवेशे तु संयोगाभावेऽव्याप्तिरिति हृदयम्।

ननु समवायादिसम्बन्धेन द्रव्यसामान्याभावमादायैव गगने नातिव्याप्तिः = समवायादिसम्बन्धेन द्रव्यानधिकरणवृत्तिद्रव्यसामान्याभावप्रतियोगितायाः द्रव्यसामान्ये सत्त्वेन तस्य गगनेऽपि सत्त्वात् इत्यत आह स्वरूपेति स्वरूपसम्बन्धात्मिकायाः प्रतियोगिताया इत्यर्थः। प्रतियोगि-

जागदीशी

भिन्नतया द्रव्यसामान्याभावीयस्यापि गगननिष्ठप्रतियोगित्वस्य अतथात्वात् तदाश्रयस्य गगनस्याधिकरणस्य अप्रसिद्धेः, अभावविरहत्वरूपप्रतियोगित्वस्य लक्षणघटकत्वे गगनादेर्द्रव्यसामान्याभावाभावत्वविरहेण तत्प्रतियोगित्वासम्भवाच्च इत्यत आह

नारायणी

भेदेन=द्रव्यादिभेदेन भिन्नतयेति तथाच स्वपदेन यदि द्रव्यसामान्याभावीया प्रतियोगिता घटादिनिष्ठव ग्राह्या स्यात् तदा तादृशप्रतियोगित्वाभाववत्त्वेन गगनेऽतिव्याप्तिर्दुर्वारा स्याद्। यदितु स्वपदेन गगननिष्ठप्रतियोगिता ग्राह्या तदा तादृशप्रतियोगित्वाश्रयगगनस्याधिकरणाप्रसिद्धया तदनधिकरणस्याप्यप्रसिद्धिः। अतः द्रव्यसामान्याभावमादायाऽपि गगनेऽतिव्याप्तिवारणं न सम्भवतीति भावः। अतथात्वात्=स्वपदेन धर्त्तुमशक्यत्वात् कुत इत्याकाङ्क्षायामाह तदाश्रयस्येति द्रव्यसामान्याभावीयगगननिष्ठप्रतियोगित्वाश्रयस्येत्यर्थः। अप्रसिद्धेरिति अनधिकरणत्वघटकप्रतियोग्यधिकरणस्याप्रसिद्धया गगनानधिकरणस्याप्यप्रसिद्धिर्द्रष्टव्या। द्रव्येति द्रव्यसामान्याभावाभावस्य द्रव्यसामान्यस्य।

ननु एकधर्मावच्छिन्नप्रतियोगित्वमेकमेव, अतएव सिद्धान्तलक्षणे स्वयमेवोक्तम् एकधर्मावच्छिन्नप्रतियोगिताया ऐक्यमिति। तथाच द्रव्यत्वरूपैकधर्मावच्छिन्नप्रतियोगिताया ऐक्यात् तादृशद्रव्यसामान्याभावीयप्रतियोगित्वस्य द्रव्यसामान्ये सत्त्वेन गगनेऽपि सत्त्वात्कुतोऽतिव्याप्तिरिति यदि ब्रूयात् तदाऽप्याह अभावविरहत्वेति। अभावाभावत्वरूपप्रतियोगित्वस्येत्यर्थः। लक्षणघटकत्वे=अप्रतियोगित्वघटकप्रतियोगितापदार्थत्वे। गगनादेरिति आदिनाऽऽत्मादिपरिग्रहः। द्रव्येति द्रव्यसामान्याभावाभावत्वस्य द्रव्य एव सत्त्वाद् गगनादेर्द्रव्यसामान्याभावप्रतियोगित्वं द्रव्यसामान्याभावाभावत्वरूपं न सम्भवतीति हृदयम्। तत्प्रतियोगित्वेति

दीधितिः

प्रतियोग्यसमाधिकरणत्वेनाभावो विशेष्यः आकाशाभावोऽपि च यथा प्रतियोग्यसमानाधिकरणस्तथोक्तमधस्तात् । वृत्ति-

जागदीशी

आकाशाभावोऽपीति । तथा च यादृशसम्बन्धसामान्ये यद्यत्प्रतियोगिताश्रयप्रतियोगिकत्वयत्किञ्चिदधिकरणानुयोगिकत्वोभयाभावः तत्तत्प्रतियोगित्वाभावकूटवत्त्वं तादृशसम्बन्धेन केवलान्वयित्वं वाच्यम् । गगनस्य तु तादृशप्रतियोगितासत्त्वात् न केनापि सम्बन्धेन तस्य केवलान्वयित्वमिति भावः । उभयाभावस्य अप्रवेशेन

नारायणी

द्रव्यसामान्याभावप्रतियोगित्वस्यासम्भवाच्चेत्यर्थः । तथाच गगने अतिव्याप्तिः सुदृढैवेति भावः।

सिद्धान्तलक्षणोक्तरीत्या गगनाभावस्य प्रतियोगिवैयधिकरण्यं व्यवस्थापयति तथाचेति यादृशेति केवलान्वयिताघटकसम्बन्धसामान्ये इत्यर्थः । यद्यादिति अभावनिरूपितयद्यत्प्रतियोगिताश्रयप्रतियोगिकत्वयत्किञ्चिदधिकरणानुयोगिकत्वोभयाभाव इत्यर्थः । तत्तत्प्रतियोगित्वाभावकूटवत्त्वं यत्र तस्य केवलान्वयिताघटकसम्बन्धेन केवलान्वयित्वमित्यर्थः। गगनेऽतिव्याप्तिं वारयति गगनस्येति । तादृशेति यथोक्तप्रतियोगितासत्त्वादित्यर्थः। न केनापि सम्बन्धेन = न संयोगसमवायादिना तस्य = गगनस्य केवलान्वयित्वमिति तथाच संयोगादिसम्बन्धसामान्य एव यत्किञ्चिद् घटाद्यधिकरणानुयोगिकत्वसत्त्वेऽपि गगनाभावीयगगननिष्ठप्रतियोगित्वाश्रयप्रतियोगिकत्वविरहादुभयाभावस्य तत्राक्षततया तादृश गगननिष्ठप्रतियोगित्वाभावस्य गगनेऽसत्त्वात् न गगनस्य केवलान्वयित्वम् इति भावः ।

## नारायणी

अत्र स्वाश्रयतादात्म्यसम्बन्धेनापि अभिधेयत्वस्य केवलान्वयित्वमते तेन सम्बन्धेन तस्य केवलान्वयित्वानुपपत्तिः स्यात्, तादृशसंसर्गत्वाश्रये शुद्धतादात्म्येऽभिधेयत्वप्रतियोगिकत्वसत्त्वेऽपि यत्किञ्चिदधिकरणानुयोगिकत्वविरहेणोभयाभावस्याक्षततया तादृशाभिधेयत्वनिष्ठप्रतियोगित्वाभाववत्त्वस्याभिधेयत्वे विरहात्, अतः यद्रूपपर्य्याप्तावच्छेदकताकसंसर्गताश्रयसामान्ये इत्यर्थलाभाय यत्सम्बन्धसामान्ये इत्यपहाय यादृशसम्बन्धसामान्ये इत्युक्तम्।

सामान्यपदानुपादाने संयोगाभावस्य स्वरूपेण केवलान्वयित्वानुपपत्तिः, प्रमेयत्वप्रतियोगिकस्वरूपसम्बन्धे संयोगाभावनिष्ठप्रतियोगित्वाश्रयसंयोगाभावप्रतियोगिकत्वविरहात् तादृशप्रतियोगित्वाभावस्य च संयोगाभावे विरहात् अतः सामान्यपदं पूरितम्। स्वरूपसामान्ये संयोगाभावप्रतियोगिकत्वाभावासत्त्वेन सामान्यपदोपादानान्न तत्राव्याप्तिः। नच संसर्गतावच्छेदकतायाः पर्याप्तिनिवेशात् प्रमेयत्वप्रतियोगिकस्वरूपस्य धर्त्तुमशक्यत्वात्सामान्यपदं व्यर्थमिति वाच्यम्, तादृशावच्छेदकतायाः सामान्यपदसार्थक्याय इतरवारकपर्य्याप्तेरनिवेशादिति वदन्ति। वस्तुतः सामान्यपदोपादानाद् यत्सम्बन्धसामान्ये इत्युक्तावपि न क्षतिरिति ध्येयम्।

यद्यदितिवीप्सानादरे संयोगादिना गगनस्य केवलान्वयित्वापत्तिः, संयोगादिसामान्ये घटनिष्ठप्रतियोगित्वाश्रयप्रतियोगिकत्वसत्त्वेऽपि यत्किञ्चिदधिकरणीभूतपटाधिकरणानुयोगिकत्वविरहात् उभयाभावस्य तत्राक्षततया तादृशघटनिष्ठप्रतियोगिताशून्यत्वस्य गगने सत्त्वात्। यद्यदित्युक्तौ तु गगनस्यापि धर्त्तुं शक्यतया तत्प्रतियोगिकत्वस्य संयोगादावभावान्न तत्रातिव्याप्तिः। संयोगेन घटादेः केवलान्वयित्वापत्तिवारणाय केवलंतादृशप्रतियोगित्वाश्रयप्रतियोगिकत्वाभावमात्रनिवेशं विहायोभयाभावपर्यन्तनिवेशः। अन्यथा संयोगसामान्ये घटादिप्रतियोगिकत्वसत्त्वेन घटाद्यभावस्य लक्षणाघटकतया गगनाभावस्य लक्षणघटक-

नारायणी

त्वेऽपि तदीयप्रतियोगित्वाभावस्य घटादौ वर्त्तमानतया संयोगादि-सम्बन्धेन घटादेः केवलान्वयित्वं दुर्वारं स्यात्। अतएव तादृशान्यतराभावोऽपि न विवक्षणीयः, उक्तघटादावेवातिव्याप्तेः, घटाभावप्रतियोगित्वाश्रयप्रतियोगिकत्वस्य संयोगादौ सत्त्वेन तत्रान्यतराभावस्यासत्त्वात् यादृशसम्बन्धसामान्ये यपद्यत्प्रतियोगित्वाश्रयप्रतियोगिकत्वविशिष्ट-यदधिकरणानुयोगिकत्वाभावरूपविशिष्टाभावविवक्षणे संयोगादिना गगनस्य केवलान्वयित्वापत्तिः, गगननिष्ठप्रतियोगित्वाश्रयगगनप्रतियोगित्वविशिष्टयत्किञ्चिदधिकरणानुयोगिकत्वस्याप्रसिद्धत्वेन गगनाभावस्य लक्षणाघटकत्वात्।

न चैवं विशिष्टस्य कुत्राप्यप्रसिद्धतया तथैव नातिव्याप्तिरिति वाच्यम्, प्रमेयत्वभेदप्रतियोगित्वाश्रयप्रतियोगिकत्वविशिष्टयत्किञ्चिदधिकरणानुयोगिकत्वस्य स्वरूपादौ प्रसिद्धिसम्भवात् तदभावस्य संयोगादौ सत्त्वेनातिव्याप्तेरवारणात्। न च केवलान्वयित्वघटकसम्बन्धावच्छिन्नप्रतियोगित्वाश्रयप्रतियोगिकत्वघटितविशिष्टाभावस्य विवक्षणात् अप्रसिद्धितादवस्थ्यमिति वाच्यम्, प्रयोजनाभावेन प्रतियोगितायां केवलान्वयिताघटकसम्बन्धावच्छिन्नत्वस्यानिवेशात् विषयतया ज्ञानस्य केवलान्वयितास्थले समवायेन ज्ञानाभावप्रतियोगिताश्रयप्रतियोगिकत्वघटितविशिष्टस्य विषयतायां प्रसिद्धिसम्भवात्। अथोक्तरीत्या केवलान्वयिताघटकविषयत्वस्वरूपादावेव तादृशविशिष्टस्य प्रसिद्धतया तदभावस्य तादृशकेवलान्वयिताघटकसम्बन्धसामान्ये विरहात् असम्भव एव सम्भवतीति चेन्न, विशिष्टाभावविवक्षणे उक्तरीत्याऽतिव्याप्तेरिव असंभवस्यापि वक्तुं शक्यत्वादिति ध्येयम्।

अग्रिमप्रतियोगित्वाभावकूटाविवक्षणे गगनादावतिव्याप्तिः, घटनिष्ठप्रतियोगित्वाभावस्य तत्राक्षतत्वात्। कूटविवक्षणे तु तादृशप्रतियोगित्वाभावकूटान्तर्गतगगननिष्ठप्रतियोगित्वाभावस्य गगने विरहान्नातिव्याप्तिरिति तत्त्वम्।

जागदीशी

लाघवं वृत्तिमत्पदस्य सार्थक्यञ्च कुर्वन्नाह वृत्तिमत इति।

नारायणी

न च तथापि यद्यत्प्रतियोगित्वाश्रयप्रतियोगिकयादृशसम्बन्धसामान्ये यत्किञ्चिदधिकरणानुयोगिकत्वाभावतत्तत्प्रतियोगित्वाभावकूटस्य यत्किञ्चिदधिकरणानुयोगिकयादृशसम्बन्धसामान्ये वा यद्यत्प्रतियोगित्वाश्रयप्रतियोगिकत्वाभावः तत्तत्प्रतियोगित्वाभावकूटस्य च विवक्षणादुभयाभावानिवेशेन सर्वथा लाघवमिति वाच्यम्, प्रथमे संयोगेन गगनादेः केवलान्वयित्वापत्तेः, गगनप्रतियोगिकसंयोगाप्रसिद्धया गगनाभावस्य लक्षणाघटकतया घटाद्यभावस्य लक्षणघटकत्वसम्भवात् घटनिष्ठप्रतियोगित्वाश्रयप्रतियोगिकसंयोगसामान्ये एव यत्किञ्चिदधिकरणानुयोगिकत्वविरहात् तादृशघटनिष्ठप्रतियोगित्वाभावस्य गगनादावनपायात्। द्वितीये तु समवायेन सत्तादेः केवलान्वयित्वापत्तिः, सामान्याद्यनुयोगिकसमवायस्याप्रसिद्धतया यत्किञ्चिदधिकरणपदेन सामान्यादेरुपादानासम्भवाद् द्रव्यादेरेव यत्किञ्चिदधिकरणत्वेन धर्तुं शक्यतया द्रव्याद्यनुयोगिकसमवाये च सत्तानिष्ठप्रतियोगित्वाश्रयप्रतियोगिकत्वस्य सत्त्वाद् गगनाद्यनुयोगिकत्वविरहस्य तादृशसमवाये सत्त्वेऽपि गगननिष्ठप्रतियोगिताशून्यतायाः सत्तायामक्षतत्वात् इत्यास्तां विस्तरः॥ उभयाभावमनिवेश्य लाघवाय वृत्तिमत्त्वस्य प्रतियोगिविशेषणत्वेनापि गगनादावतिव्याप्तिवारणं वृत्तिमत्पदञ्च सार्थकं सम्भवतीत्याशयेन वृत्तिमत इत्यादिदीधितिग्रन्थमवतारयति उभयाभावस्येति। यादृशसम्बन्धसामान्ये यद्यत्प्रतियोगित्वाश्रयप्रतियोगिकत्वं यत्किञ्चिदधिकरणानुयोगिकत्वोभयाभावस्येत्यर्थः।

अप्रवेशेन = लक्षणाघटकत्वेन। लाघवमिति उभयाभावप्रतियोगितावच्छेदकस्य विभिन्नतया तद्घटितलक्षणस्य गुरुत्वमित्याशयः। वृत्तिमत्पदस्येति मूलोक्तस्येत्यादिः। वृत्तिमत इति तथाच वृत्तिमत्त्वे

दीधितिः

मतस्तादृशाभावाप्रतियोगित्वमिति वार्थः। व्याप्यवृत्तित्वार्थकं वृत्तिमत्पदमभावविशेषणमित्यपि कश्चित्। तादात्म्येना-

जागदीशी

तादृशेति। प्रतियोगिव्यधिकरणेत्यर्थः। तथा च यथाश्रुतमेव प्रतियोगिवैयधिकरण्यं निवेशनीयम्। वृत्तिमत्त्वविरहादेव च गगनादौ नातिप्रसङ्गः। वृत्तिमत्त्वञ्च केवलान्वयिताघटकसम्बन्धेन ग्राह्यम्। तेन समवायेन वृत्तिमतोऽपि घटत्वादेः संयोगसम्बन्धा-

नारायणी

सति स्वावच्छेदकसम्बन्धेन स्वाश्रयानधिकरणवृत्त्यभावप्रतियोगित्वाभाववत्त्वं केवलान्वयित्वमिति लक्षणार्थः पर्य्यवसितः। गगनादौ तादृशप्रतियोगित्वाभाववत्त्वसत्त्वेऽपि वृत्तिमत्त्वविरहादेव न तत्रातिव्याप्तिरिति भावः। तादृशपदं व्याचष्टे प्रतियोगीति स्वावच्छेदकसम्बन्धेनेत्यादिप्रतियोगिव्यधिकरण इत्यर्थः। यथोक्तोभयाभावानिवेशे यथाश्रुतमेव प्रतियोगिवैयधिकरण्यं संयोगाभावसंग्रहाय वक्तव्यमित्याह तथाचेति वृत्तिमत्त्वविरहादेव गगनादौ नातिव्याप्तिरित्याह वृत्तिमत्त्वेति।

ननु संयोगेन घटत्वस्य केवलान्वयित्वापत्तिः। संयोगेन घटत्वाभावस्य यथोक्तप्रतियोगिव्यधिकरणत्वासम्भवात्तादृशघटाद्यभावप्रतियोगित्वाभावस्य समवायेन वृत्तिमत्त्वस्य च घटत्वे सत्त्वात्। अत आह वृत्तिमत्त्वञ्चेति। येन सम्बन्धेन केवलान्वयित्वमभिप्रेतं तेनैव सम्बन्धेन वृत्तिमत्त्वं ग्राह्यमित्याह केवलान्वयितेति तेन=केवलान्वयिताघटकसम्बन्धेन वृत्तिमत्त्वविवक्षणेन समवायेन=केवलान्वयिताघटकसंयोगातिरिक्तेन समवायेन घटत्वादेरिति आदिना पटत्वादिपरिग्रहः। संयोगसम्बन्धेति स्वावच्छेदकसंयोगसम्बन्धेन घटनिष्ठप्रतियोगित्वाश्र-

जागदीशी

वच्छिन्नप्रतियोगिव्यधिकरणाभावाप्रतियोगित्वेऽपि न तस्य संयो-

नारायणी

यानधिकरणवृत्तिघटाद्यभावप्रतियोगित्वाभाववत्त्वेऽपीत्यर्थः। न तस्य = न घटत्वादेः। संयोगादिनेति आदिना स्वरूपादिपरिग्रहः। केवलान्वयित्वमिति। तथा च संयोगेन घटत्वाधिकरणाप्रसिद्ध्या तेन सम्बन्धेन घटत्वनिष्ठप्रतियोगित्वाश्रयानधिकरणत्वस्याप्यप्रसिद्धतया यथोक्तप्रतियोगिव्यधिकरणाभावपदेन घटत्वाभावादेर्धर्तुमशक्यत्वेऽपि न संयोगेन घटत्वादेः केवलान्वयित्वं, संयोगेन घटत्वादेः वृत्तिमत्त्वासम्भवात् इति भावः।

स्वाश्रयविषयत्वादिसम्बन्धेन ज्ञानत्वादेः केवलान्वयित्वं दीधितिकृतैवोक्तं तथा सति तुल्ययुक्त्या स्ववृत्तिप्रमेयत्ववत्त्वसम्बन्धेनापि ज्ञानत्वादेर्घटादेर्वा केवलान्वयित्वमनुभवसिद्धमेव, तेन सम्बन्धेन घटादेः सर्वत्र सत्त्वात्। एवञ्च ज्ञानत्वादिवृत्तिप्रमेयत्ववत्त्वसम्बन्धस्य पटादिव्यधिकरणसम्बन्धतया तत्सम्बन्धेन पटाद्यभावस्य प्रसिद्धत्वेऽपि तेन सम्बन्धेन पटाद्यधिकरणाप्रसिद्ध्या तदभावस्य प्रतियोगिव्यधिकरणत्वासम्भवेन तत्संसर्गकप्रतियोगिव्यधिकरणाभावस्यैवाप्रसिद्ध्या स्ववृत्तिप्रमेयत्वादिमत्त्वसम्बन्धेन घटादेः केवलान्वयित्वं न स्यात्। नच लक्षणघटकप्रतियोगितायां केवलान्वयिताघटकसम्बन्धानवच्छिन्नत्वस्य विवक्षणीयतया संयोगेन पटाद्यभावस्यैव स्वावच्छेदकसम्बन्धेन स्वाश्रयानधिकरणत्वघटितप्रतियोगिवैयधिकरण्यसम्भवात् न स्ववृत्तिप्रमेयत्वादिमत्त्वसम्बन्धेन केवलान्वयित्वानुपपत्तिरिति वाच्यम्, तथा सति समवायेन ज्ञानत्वाभावमादाय स्वाश्रयविषयत्वसम्बन्धेनापि ज्ञानत्वादेः केवलान्वयित्वानुपपत्तेः। नच केवलान्वयिताघटकसंसर्गातिरिक्तसम्बन्धानवच्छिन्नत्वकेवलान्वयिनिष्ठत्वोभयाभावस्य निरुक्तप्रतियोगितायां विवक्षणान्न समवायेन ज्ञानत्वाभावमादाय ज्ञानत्वस्य केवलान्वयित्वानुप-

जागदीशी

गेन केवलान्वयित्वम् । यदि च ज्ञानत्वादेः स्वाश्रयविषयत्वादि-सम्बन्धेन इव स्ववृत्तिप्रमेयत्ववत्त्वादिसम्बन्धेनापि केवलान्वयि-त्वम् एकशेषस्य दुःशक्यत्वात्, तथा च तादृशसम्बन्धेन प्रतियो-गिव्यधिकरणाभावाप्रसिद्ध्या तत्राव्याप्तिरिति विभाव्यते, तदा

नारायणी

पत्तिरिति वाच्यम्, केवलान्वयित्वस्य केवलान्वयित्वघटितत्वे आत्मा-श्रयापत्तेः, केवलान्वयिनिष्ठत्वस्थाने जगद्वृत्तिनिष्ठत्वनिवेशेऽप्यन्योन्या-श्रयापत्तेः, केवलान्वयित्वज्ञानाद् जगद्वृत्तित्वज्ञानं जगद्वृत्तित्वज्ञानाच्च केवलान्वयित्वज्ञानमित्यन्योन्याश्रयादेर्वारयितुमशक्यत्वात् इति मनसि विभाव्य शङ्कते **यदि चेति** स्वाश्रयविषयत्वसम्बन्धेन ज्ञानत्वादेः केवला-न्वयितायाः सर्ववादिसिद्धतया तस्यैव दृष्टान्तत्वमाह **ज्ञानत्वादेरिति** । आदिना इच्छात्वादिपरिग्रहः। स्ववृत्तिप्रमेयत्वादिमत्त्वेत्यत्रादिना वाच्य-त्वादिपरिग्रहः । **एकशेषस्येति** । स्वाश्रयविषयत्वसम्बन्धेनैव ज्ञानत्वं केवलान्वयि नतु स्ववृत्तिप्रमेयत्वादिमत्त्वसम्बन्धेनेत्यस्येत्यर्थः। दुःशक्य-त्वात्=वक्तुमशक्यत्वात् । निरुक्तसम्बन्धेन ज्ञानत्वादेः केवलान्वयित्वा-नुपपत्तिमुपपादयति **तथा चेति** एकशेषस्य दुःशक्यत्वे चेत्यर्थः । तादृश-सम्बन्धेन=स्ववृत्तिप्रमेयत्वादिमत्त्वसम्बन्धेन व्यधिकरणसम्बन्धेन पटाद्यभावस्यापि प्रसिद्धिसम्भवादाह **प्रतियोगीति** । स्ववृत्तिप्रमेयत्वादि-मत्त्वसम्बन्धेन पटाद्यधिकरणाप्रसिद्ध्या प्रतियोगिव्यधिकरणाभाव-मात्रस्याप्रसिद्धिरिति भावः। तत्र=ज्ञानत्वादौ । **अव्याप्तिरिति** संयोगा-भावसंग्रहाय लक्षणघटकाभावस्य प्रतियोगिव्यधिकरणत्वेनावश्यं विव-क्षणीयतया तादृशाभावस्याप्रसिद्ध्या निरुक्तसम्बन्धेन ज्ञानत्वादावव्या-प्तिरित्याशयः ।

जागदीशी

यत्सम्बन्धावच्छिन्नयद्वन्निष्ठप्रतियोगिव्यधिकरणाभावस्य प्रतियोगित्वाभाववत्त्वावच्छेदेन प्रतियोगिव्यधिकरणाभावप्रतियोगित्वा-

नारायणी

समाधत्ते तदेति यत्सम्बन्धेति तथाच स्वरूपसम्बन्धेन प्रतियोगित्वाश्रयानधिकरणं यत् केवलान्वयिताघटकसंसर्गत्वेनाभिमतसम्बन्धावच्छिन्नं यद्वस्तुनिष्ठाधेयतानिरूपकाधिकरणं तन्निष्ठाभावीयतादृशप्रतियोगित्वाभाववत्त्वव्यापकं सामान्यतः स्वरूपसम्बन्धेन प्रतियोगित्वाश्रयानधिकरणवृत्त्यभावीयप्रतियोगित्वाभाववत्त्वं तत्सम्बन्धेन तद् वस्तु केवलान्वयि भवतीति लक्षणार्थः पर्य्यवसितः। भवतिहि प्रमेयत्ववाच्यत्वादौ लक्षणसमन्वयः, स्वरूपेण घटाधिकरणत्वाभावीयप्रतियोगित्वाश्रयघटाधिकरणत्वानधिकरणस्वरूपेण प्रमेयत्वाधिकरणपटनिष्ठतादृशघटाधिकरणत्वाभावप्रतियोगित्वाभाववत्त्वं यत्र यत्र प्रमेयत्वादौ तत्र तत्रैव सामान्यतः स्वरूपेण प्रतियोगित्वाश्रयाधिकरणवृत्तिघटाधिकरणत्वाभावप्रतियोगित्वाभाववत्त्वस्य सत्त्वेन प्रमेयत्ववन्निष्ठस्वरूपेण प्रतियोगिव्यधिकरणाभावीयप्रतियोगित्वाभाववत्त्वव्यापकतायाः सामान्यतः स्वरूपेण प्रतियोगिव्यधिकरणाभावीयप्रतियोगित्वाभाववत्त्वेऽक्षततया यद्वस्तुपदेन स्वरूपसम्बन्धावच्छिन्नप्रमेयत्वादेरुपादानसम्भवात्। एवं ज्ञानत्वादेरपि स्ववृत्तिप्रमेयत्ववत्त्वसम्बन्धेन केवलान्वयित्वं नानुपपन्नम्, स्वरूपसम्बन्धेन घटाधिकरणत्वाभावीयप्रतियोगित्वाश्रयानधिकरणीभूतस्ववृत्तिप्रमेयत्ववत्त्वसम्बन्धेन ज्ञानत्ववत्पटादिनिष्ठतादृशघटाधिकरणत्वाभावप्रतियोगित्वाभाववत्त्वव्यापकतायाः

शक्तिः

यद्वन्निष्ठेत्यादि—ननु प्रतियोगिव्यधिकरणाभावत्वव्यापकं यद्वन्निष्ठप्रतियोगिव्यधिकरणाभावत्वमित्येव लाघवात्कुतो नोक्तमिति चेन्न, सर्वस्यैवाभावस्य स्वाश्रयतत्तद्व्यक्तिवृत्तित्वविशिष्टं यत्स्वं तदभावात्मकस्वप्रतियोगिना समं

## नारायणी

सामान्यतः स्वरूपसम्बन्धेन प्रतियोगिव्यधिकरणघटाधिकरणत्वाभावप्रतियोगित्वाभाववत्त्वे सत्त्वाद् यद्वस्तुपदेन स्ववृत्तिप्रमेयत्ववत्त्वसम्बन्धावच्छिन्नज्ञानत्वस्यापि धर्त्तुं शक्यत्वात्। एवमनयैव रीत्या लक्षणसमन्वयः स्वयमूहनीयः। सामान्यतः स्वरूपसम्बन्धेन प्रतियोगिव्यधिकरणाभावप्रतियोगित्वाभाववत्त्वं केवलान्वयित्वमित्येतावन्मात्रोक्तौ स्ववृत्तिप्रमेयत्वादिमत्त्वसम्बन्धेन घटाधिकरणत्वादेः केवलान्वयित्वानुपपत्तिः, सामान्यतः स्वरूपेण प्रतियोगिव्यधिकरणघटाधिकरणत्वाभावस्य घटाधिकरणत्वे विरहात्, अतः यत्सम्बन्धेन यद्वन्निष्ठस्वरूपेण प्रतियोगिव्यधिकरणाभावप्रतियोगित्वाभाववत्त्वव्यापकत्वं सामान्यतः स्वरूपेण प्रतियोगिव्यधिकरणाभावप्रतियोगित्वाभाववत्त्वे विवक्षितम्।

यत्सम्बन्धेन यद्वन्निष्ठस्वरूपसम्बन्धेन प्रतियोगिव्यधिकरणाभावप्रतियोगित्वाभाववत्त्वं तत्सम्बन्धेन तत्केवलान्वयीत्येतावन्मात्रोक्तौ संयोगेन घटादेः केवलान्वयित्वापत्तिः स्यात्, संयोगेन घटवन्निष्ठस्वरूपसम्बन्धावच्छिन्नप्रतियोगिव्यधिकरणपटाद्यधिकरणत्वाभावप्रतियोगित्वाभाववत्त्वस्य घटादिप्रमेयादिनिष्ठतया यत्पदेन संयोगावच्छिन्नघटादेर्धर्त्तुं शक्यत्वात्, अतएव यत्सम्बन्धेन यद्वन्निष्ठप्रतियोगिव्यधिकरणाभावप्रतियोगित्वाभाववत्त्वसमानाधिकरणं सामान्यतः स्वरूपेण प्रतियोगिव्यधिकरणाभावप्रतियोगित्वाभाववत्त्वमित्यस्यैव सम्यक्त्वे तादृशप्रतियोगित्वाभाववत्त्वव्यापकत्वस्य सामान्यतः स्वरूपेण प्रतियोगिव्यधिक-

## शक्तिः

सामानाधिकरण्यात् सामान्यतः प्रतियोगिव्यधिकरणाभावाप्रसिद्धेः, अस्माकं तु यद्वद्वृत्तिप्रतियोगित्वाभावकूटस्य व्यापकत्वं वस्तुवृत्तिप्रतियोगित्वाभावकूटत्वावच्छिन्ने निवेश्यं, वृत्तित्वञ्च स्वविशिष्टाश्रयतानिरूपिताधिकरणत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसम्बन्धेन, तथाच घटाधिकरणत्वाभावीयघटाधिकरणतात्वावच्छिन्नप्रतियोगित्वस्यैव तादृशत्वान्न दोषः।

**जागदीशी**

भाववत्त्वं तत्सम्बन्धेन तत् केवलान्वयीति वाच्यम्। प्रतियोगितावृयञ्च तत्र विशेषणताविशेषावच्छिन्नं ग्राह्यमतो न कश्चिद्दोष

**नारायणी**

रणाभावप्रतियोगित्वाभाववत्त्वे विवक्षणमसङ्गतमित्यपि समाहितम्। संयोगेन घटादावेवातिव्याप्त्यापत्तेः, संयोगेन घटादिमन्निष्ठस्वरूपेण प्रतियोगिव्यधिकरणाभावप्रतियोगित्वाभाववति प्रमेयत्ववाच्यत्वादौ सामान्यतः स्वरूपेण प्रतियोगिव्यधिकरणाभावप्रतियोगित्वाभाववत्त्वस्य सत्त्वेन यत्पदेन घटादेरेवोपादानसम्भवात्। व्यापकत्वनिवेशे तु न तत्रातिव्याप्तिः, संयोगेन घटवन्निष्ठस्वरूपसम्बन्धावच्छिन्नप्रतियोगिव्यधिकरणाभावप्रतियोगित्वाभाववत्त्वस्य घटाधिकरणत्वेऽपि वर्त्तमानतया तत्र सामान्यतः स्वरूपेण प्रतियोगिव्यधिकरणाभावप्रतियोगित्वाभावस्यासत्त्वेन निरुक्तप्रतियोगित्वाभाववत्त्वस्य संयोगेन घटादिमन्निष्ठस्वरूपसम्बन्धेन प्रतियोगिव्यधिकरणाभावप्रतियोगित्वाभाववत्त्वाव्यापकत्वात्। अधिकमन्यत्रानुसन्धेयमिति।

**प्रतियोगिताद्वयञ्चेति** यत्सम्बन्धेन यद्वन्निष्ठप्रतियोगिव्यधिकरणाभावप्रतियोगित्वं सामान्यतः प्रतियागिव्यधिकरणाभावप्रतियोगित्वञ्चेत्यर्थः। तत्र = निरुक्तलक्षणेप्रतियोगिताद्वयान्वयिघटकत्वं सप्तम्यर्थः। **विशेषणतेति** स्वरूपसम्बन्धावच्छिन्नमित्यर्थः। **नकश्चिद्दोष इति।** न ज्ञानत्वघटादेः स्ववृत्तिवाच्यत्ववत्त्वसम्बन्धेन केवलान्वयित्वानुपपत्तिः, नवा प्रमेयत्वगगनाभावादावव्याप्तिः इतितु परमार्थः।

**क्षमित:**

न च तथापि वस्तुवृत्तिप्रतियोगितात्वव्यापकं यद्वद्वृत्तिप्रतियोगितात्वे वक्तव्यमिति लाघवसम्भवान्न कश्चिद्दोष इति वाच्यम्, प्रमेयवह्नित्वादिगुरुधर्मेण प्रमेयवह्न्यादेरपि केवलान्वयित्वापत्तेः, वस्तुवृत्तिप्रतियोगितावृत्तिभेदीय-

जागदीशी

इति ध्येयम् । व्याप्यवृत्तित्वेति । तथा च गगनाद्यभावो व्याप्यवृत्तिरेवेति गगने नातिप्रसङ्गः । संयोगरूपश्च अभावो न तथेति तत्प्रतियोगित्वेऽपि संयोगाद्यभावे न अप्रसङ्ग इति भावः । अत्र

नारायणी

मूलकृता गगनाभावे गगनाभावाभावमादायाव्याप्तिवारणाय वृत्तिमत्त्वं लक्षणघटकीभूताभावविशेषणं दत्तं, दीधितिकृताच संयोगाभावाभावमादाय संयोगाभावेऽव्याप्तिवारणार्थं तादृशाभावे प्रतियोगिवैयधिकरण्यं विवक्षितम् । यदि च वृत्तिमत्त्वं व्याप्यवृत्तित्वार्थकं स्यात्तदा गगनाभावे नाव्याप्तिः, गगनाभावाभावस्य गगनस्यावृत्तितया व्याप्यवृत्तित्वासम्भवेन गगनाभावाभावस्य लक्षणाघटकत्वात्, नवा प्रतियोगिवैयधिकरण्याविवक्षणेऽपि अव्याप्तिः, संयोगाभावाभावस्य संयोगस्य व्याप्यवृत्तित्वविरहेण लक्षणाघटकत्वात् तादृशव्याप्यवृत्तिघटाद्यभावप्रतियोगित्वाभावस्य गगनाभावे संयोगाभावेऽपि चाक्षतत्वात् इति कश्चिदित्यनेन दीधितिकृता प्रदर्शितं मतं दूषयितुं व्याचष्टे **तथाचेति** । निरुक्तव्याप्यवृत्तित्वविवक्षणे गगनेऽपि नातिव्याप्तिः इत्याह **गगनेति** व्याप्यवृत्तिरेवेत्यनेन गगनाभावस्य लक्षणघटकत्वमभिहितम् । **नातिप्रसङ्ग इति** व्याप्यवृत्तिगगनाभावप्रतियोगिताया गगने सत्त्वादित्याशयः। संयोगाभावेऽव्याप्तिं वारयति **संयोगरूपश्चेति** संयोगस्वरूप इत्यर्थः। **अभावः** = संयोगाभावाभावः, **नतथा** = न व्याप्यवृत्तिः, **तत्प्रतियोगित्वेऽपि** = संयोगाभावाभावप्रतियोगित्वस्य संयोगाभावे सत्त्वेऽपि, **नासंग्रह इति** तथाच प्रतियोगिवैयधिकरण्यमभावविशेषणं निरर्थकमिति भावः। कश्चिदित्यभिधानस्य प्रयोजनमाह **अत्रेति** निरुक्तलक्षणे इत्यर्थः।

दीधितिः

प्रतियोगितावच्छेदकत्वाभावरूपस्य तादृशप्रतियोगितात्वव्यापकत्वस्य प्रमेयव-

जागदीशी

व्याप्यवृत्तित्वं यदि अवच्छिन्नवृत्तिकान्यत्वं तदा संयोगस्य केव-
लान्वयित्वापत्तिः, तदभावस्य अवच्छिन्नवृत्तिकत्वात्। न च निर-

नारायणी

व्याप्यवृत्तित्वान्वयिघटकत्वं सप्तम्यर्थः। अवच्छिन्नेति। अवच्छिन्न-वृत्तिको यो यस्तदन्यत्वं यदि लक्षणघटकीभूताभावविशेषणीभूतं व्याप्यवृत्तित्वं तदेत्यर्थः। केवलान्वयित्वापत्तिरिति व्याप्यवृत्तित्वघटित-निरुक्तलक्षणे संयोगेऽतिव्याप्तिरेव स्यादित्यर्थः। कथमित्याकाङ्क्षाया-माह तदभावस्येति संयोगाभावस्येत्यर्थः। अवच्छिन्नवृत्तिकत्वादिति तथाच संयोगाभावस्य शाखाद्यवच्छेदेन वृत्तित्वादवच्छिन्नवृत्तिकया-वदभावान्तर्गतसंयोगाभावस्यापि धर्त्तुं शक्यतया तस्य लक्षणघटक-त्वात्, अवच्छिन्नवृत्तिकान्यघटत्वाद्यभावप्रतियोगिताभावस्य संयोगेऽ-नपायात्।

ननु व्याप्यवृत्तित्वं निरवच्छिन्नवृत्तिकत्वमेव, संयोगाभावस्यापि गुणादौ निरवच्छिन्नवृत्तिकतया व्याप्यवृत्त्यभावपदेन तस्य धर्त्तुं शक्य-त्वान्न संयोगेऽतिव्याप्तिः। निरवच्छिन्नवृत्तिकसंयोगाभावप्रतियोगि-ताया एव संयोगे सत्त्वात् इत्याशङ्कते नचेति वाच्यमिति परेणान्वयः।

शक्तिः

त्यधिकरणवृत्तिप्रतियोगितात्वे सत्त्वात्, प्रमेयवह्न्यधिकरणवृत्तिप्रतियोगित्वं न इत्याकारकभेदीयप्रतियोगित्वस्य लघुभूतवह्न्यधिकरणवृत्तिप्रतियोगितात्वेनै-वावच्छेद्यतया प्रमेयवह्न्यधिकरणवृत्तिप्रतियोगितात्वस्य तादृशभेदप्रतियोगिता-नवच्छेदकत्वात्। अस्माकं तु तत्कूटत्वावच्छिन्ने तत्कूटत्वावच्छिन्नव्यापकत्व-विवेशात् प्रमेयवह्न्यधिकरणवृत्त्यभावीयप्रतियोगित्वाभावत्वावच्छिन्नानुयोगि-ताकपर्य्याप्तिप्रतियोगिककूटत्वावच्छिन्नस्य वस्तुवृत्तिप्रतियोगित्वाभावकूटत्वा-वच्छिन्नाव्यापकत्वान्न दोषः इति तु तत्त्वम्।

जागदीशी

वच्छिन्नवृत्तिकत्वमेव व्याप्यवृत्तित्वं वाच्यम्, अवच्छेदकत्वादिसम्बन्धेनैव मूलादौ निरवच्छिन्नवृत्तिकस्य संयोगादेः प्रतियोगित्वेन संयोगाद्यभावाव्याप्तितादवस्थ्यात्। न च विशेषणताविशेषेण निरवच्छिन्नवृत्तिकत्वं तथा, घटाद्यभावस्यापि केवलान्व-

नारायणी

निरवच्छिन्नवृत्तिकत्वमित्यत्र एवकारेण अवच्छिन्नवृत्तिकान्यत्वस्य व्यवच्छेदः, समाधत्ते अवच्छेदकत्वेति तथाच वृत्तीयमूलेऽवच्छेदकतासम्बन्धेन संयोगस्यापि मूलादौ निरवच्छिन्नवृत्तिकतया संयोगाभावाभावस्य संयोगस्य निरवच्छिन्नवृत्तिकत्वरूपव्याप्यवृत्तित्वविशिष्टाभावपदेनोपादानसम्भवात्तादीयप्रतियोगितायाः संयोगाभावे सत्त्वेन संयोगाभावादावव्याप्तेर्दुर्वारतया निरुक्तरीत्या व्याप्यवृत्तित्वनिवेशो न सम्भवतीति भावः।

अवच्छेदकत्वेति अवच्छेदकतात्मकस्वरूपसम्बन्धेनेत्यर्थः। मूलादाविति आदिना तत्तत्शाखादिपरिग्रहः। संयोगादेरिति संयोगाभावाभावरूपस्येत्यादिः, प्रतियोगित्वेन = प्रतियोगितायाः संयोगाभावे सत्त्वेनाव्याप्तितादवस्थ्यमिति।

ननु स्वरूपसम्बन्धेन निरवच्छिन्नवृत्तिको योऽभावस्तदीयप्रतियोगित्वाभाववत्त्वमेव केवलान्वयित्वं,तथाच संयोगाभावे नाव्याप्तिः, संयोगाभावाभावस्य संयोगस्य अवच्छेदकतासम्बन्धेन निरवच्छिन्नवृत्तिकत्वेऽपि स्वरूपसम्बन्धेन तस्यावर्त्तमानत्वात् तादृशघटाद्यभावप्रतियोगित्वस्य संयोगाभावेऽसत्त्वात् इत्याशङ्क्य समाधत्ते तथासतीति। स्वरूपसम्बन्धेन निरवच्छिन्नवृत्तिकत्वविवक्षणे सतीत्यर्थः घटाभावस्यापि = समवायादिना घटाभावस्यापि तस्य केवलान्वयित्वापत्तौ हेतुमाह घटादिरूपस्येति तद-

दीधितिः

भिधेयस्य केवलान्वयित्वसम्पत्तये व्याप्तिवदखिलमालोकनीयम् ।

जागदीशी

यित्वापत्तेः, घटादिरूपस्य तदभावस्य विशेषणतया वृत्तित्वविरहात् । एवं द्वित्वावच्छिन्नस्यैव प्रमेयत्वादेरभावस्य व्याप्यवृत्तित्वात् तत्प्रतियोगित्वेन असम्भवश्च स्यात् इत्यस्वरसः कश्चिदित्युक्त्वा

नारायणी

भावस्य = घटाभावाभावस्य, विशेषणतया = स्वरूपसम्बन्धेन वृत्तित्वविरहादिति घटादेः समवायादिनैव वृत्तेः, तथाच स्वरूपेण निरवच्छिन्नवृत्तिकघटपटाद्यभावप्रतियोगित्वाभाववत्त्वस्य घटाद्यभावे सत्त्वादित्याशयः । नन्वभावत्वप्रतीतेः प्रमात्वानुरोधादभावाभावोऽतिरिक्तो व्याप्यवृत्तिरेवाभ्युपगन्तव्यः । अन्यथा मूलावच्छिन्नो वृक्षः कपिसंयोगाभावाभाववान् इत्याकारकप्रत्यय एव न स्यात्, तथाच न संयोगाभावेऽव्याप्तिः, संयोगाभावाभावस्य स्वरूपेण निरवच्छिन्नवृत्तिकतया तस्य लक्षणाघटकत्वात् इति यदि ब्रूयात्तदाऽऽह एवमिति द्वित्वावच्छिन्नस्यैव = गगनप्रमेयत्वोभयत्वावच्छिन्नस्यैव प्रमेयत्वादेरिति आदिना वाच्यत्वपरिग्रहः । प्रतियोगित्वं षष्ठ्यर्थः, तस्य निरूपकत्वसम्बन्धेनाभावस्येत्यत्राभावेऽन्वयः । व्याप्यवृत्तित्वात् = स्वरूपसम्बन्धेन निरवच्छिन्नवृत्तिकत्वात् । तत्प्रतियोगित्वेन = प्रमेयत्वगगनोभयाभावप्रतियोगित्वेन । असम्भवः स्यादिति तथाच यथोक्तप्रतियोगिवैयधिकरण्यमनिवेश्य स्वरूपसम्बन्धेन निरवच्छिन्नवृत्तिकत्वमात्रस्य लक्षणघटकाभावविशेषणत्वोपगमे कथञ्चिद् गगनादावतिव्याप्तिवारणसम्भवेऽपि सर्वत्रासम्भव एव सम्भवति, प्रमेयत्वगगनोभयाभावादेरपि स्वरूपसम्बन्धेन निरवच्छि-

जागदीशी

सूचितः । ननु वृत्त्यनियामकेन स्वविषयतादात्म्येन प्रतियोगिव्यधिकरणत्वाप्रसिद्ध्या तेन सम्बन्धेन नित्यज्ञानादेरभिधेयस्य कुतः केवलान्वयित्वमत आह तादात्म्येनेति । स्वविषयतादात्म्येनेत्यर्थः । यथाश्रुते अभिधेयमात्रस्य एव तत्तद्व्यक्तित्वावच्छिन्नभेदप्रतियो-

नारायणी

न्नवृत्तिकाभावपदेनोपादातुं शक्यतया तदीयप्रतियोगित्वस्य प्रमेयत्वादौ सत्त्वात् । प्रतियोगिवैयधिकरण्यनिवेशे तु नासम्भवः, निरुक्ताभावीयप्रतियोगित्वाश्रयप्रमेयत्वानधिकरणस्याप्रसिद्धेः, स्वावच्छेदकसम्बन्धेन स्वाश्रयानधिकरणवृत्त्यभावस्यैव प्रतियोगिव्यधिकरणत्वादित्याशयः ।

वृत्त्यनियामकसम्बन्धेनाधिकरणाप्रसिद्ध्या तेन सम्बन्धेन प्रतियोगिव्यधिकरणाभावस्याप्यप्रसिद्धिरित्याशयवतां दीधितिकृतां व्याप्तिवदखिलमालोकनीयमित्यादिग्रन्थमवतारयितुं शङ्कते नन्विति । वृत्त्यनियामकसम्बन्धपदेन स्वविषयत्वतादात्म्यद्वयोरेव परिग्रहमाह स्वविषयेति । तेन सम्बन्धेन स्वविषयतादात्म्यसम्बन्धेन । नित्यज्ञानादेरिति आदिना नित्येच्छापरिग्रहः । तथाच स्वविषयत्वसम्बन्धेन नित्यज्ञानादेस्तादात्म्यसम्बन्धेन च अभिधेयस्य केवलान्वयित्वं न स्यात्, तेन सम्बन्धेनाधिकरणाप्रसिद्ध्या अनधिकरणस्याप्यप्रसिद्धेः कस्याप्यभावस्य प्रतियोगिव्यधिकरणत्वासम्भवात् इति भावः। तादात्म्येनेत्यस्यार्थमाह स्वविषयतादात्म्येनेति । तेन नित्यज्ञानस्यैव केवलान्वयित्वानुपपत्तिर्दीधितिकृताऽव्याप्तिराशङ्किता नतु तादात्म्यमात्रेणाभिधेयस्य केवलान्वयित्वानुपपत्तिराशङ्किता इत्याशयेनाह यथाश्रुतेति अभिधेयमात्रस्य = घटपटाद्यभिधेयमात्रस्यैव । तादात्म्येन तद्व्यक्तिर्न तद्व्यक्तिर्नेत्याकारकभेदप्रतियोगिताया अभिधेयमात्रे एव सत्त्वेनाभिधेयस्य तादात्म्येन केवलान्वयित्वं न सम्भवतीत्याह तत्तद्व्यक्तित्वेति तत्तद्व्यक्तित्वावच्छिन्नभेदनिरूपितप्रतियोगितयेत्यर्थः ।

जागदीशी

गितया तादात्म्येन कस्यापि अभिधेयस्य न यावद्वृत्तित्वं कुत्रा-ऽव्याप्तिशङ्का स्यादिति ध्येयम् । (नव्यास्तु तथाच इत्यग्रिमग्रन्थो-त्तरमेव अयं पाठः, तत्र अनवच्छेदकगर्भलक्षणे अभिधेयत्वादि-प्रकारेण वस्तुमात्रस्यैव तादात्म्येन केवलान्वयित्वसम्भवादिति प्राहुः । अखिलमिति । प्रतियोग्यसमानाधिकरणेत्यत्र प्रतियोग्य-सम्बन्धित्वं वृत्तिमत इत्यत्र च सम्बन्धितामात्रं निवेश्यम्, अत्य-न्ताभावत्वादिकञ्च न प्रवेश्यमिति भावः ।)

नारायणी

ननु तादात्म्येन अभिधेयस्य सर्वत्र सत्त्वादेव तस्य केवलान्वयित्वं स्यात् न स्यादित्याह तादात्म्येनेति न यावद्वृत्तित्वं = न यावत्पदार्थ-वृत्तित्वम् ।

नव्यमतमुपन्यस्यति नव्यास्त्विति अग्रिमेति तथाच (तादृशाभावप्र-तियोगितानवच्छेदकधर्मवत्त्वमित्यादिग्रन्थोत्तरमेवेत्यर्थः । अयं पाठः = तादात्म्येनेत्यादिग्रन्थः । तथाचानवच्छेदकत्वगर्भलक्षणे तादात्म्येनाभि-धेयमात्रमपि केवलान्वयि सम्भवति तादात्म्येन तत्तद्व्यक्तित्वावच्छिन्न-भेदस्य धर्त्तुं शक्यत्वेऽपि तादृशभेदप्रतियोगितानवच्छेदकाभिधेयत्वव-त्त्वमादाय सर्वस्यैव वस्तुमात्रस्य केवलान्वयित्वं निराबाधमिति हृदयम्। अभिधेयत्वादीनि आदिना वाच्यत्वादिपरिग्रहः। तादृशाभावप्रतियोगि-तानवच्छेदकाभिधेयत्वादिप्रकारेणेत्यर्थः । वस्तुमात्रस्यैव = यावत्पदार्थ-स्यैव प्रकर्षसूचनाय आह प्राहुरिति ।

दीधितिः

प्रमाजातीयेति । तथा च तादृशाभावप्रतियोगितान-

जागदीशी

मूले प्रमाजातीयेति । घटत्वाद्यंकतरप्रमामुपादाय भ्रमसामान्यभिन्नत्वेन तत्सजातीयस्य ज्ञानस्य विषयत्वमेव प्रमेयत्वं

नारायणी

दीधितौ व्याप्तिवदिति । तथाच यथा साध्यसामानाधिकरण्यघटितव्याप्तिलक्षणे वृत्त्यनियामकतादात्म्यादिसम्बन्धेन साध्यसामानाधिकरण्यघटकसाध्याधिकरणाप्रसिद्धयाऽव्याप्तिः, अतस्तद्वारणाय तादृशलक्षणे साध्यसामानाधिकरण्यं = साध्यसम्बन्धित्वमात्रमभिहितं तथाऽत्रापि लक्षणे प्रतियोगितावच्छेदकसम्बन्धेन स्वाश्रयानधिकरणवृत्तित्वरूपप्रतियोगिवैयधिकरण्यघटकप्रतियोग्यधिकरणत्वमपि प्रतियोगिसम्बन्धित्वमेव वाच्यम्, एवञ्च न केवलान्वयिलक्षणं तादात्म्येनाभिधेयादिस्थलेऽव्याप्तं तादृशसम्बन्धेनाधिकरणाप्रसिद्धावपि सम्बन्धित्वप्रसिद्धेरिति परमार्थः । टीकायां प्रतियोग्येति प्रतियोगिस्वाश्रयाधिकरणवृत्तित्वाभावेत्यत्रेत्यर्थः। वृत्तिमत इत्यत्र वृत्तिमत्त्वे सतीति सत्यन्तदले सम्बन्धितामात्रं सम्बन्धित्वे सतीत्यर्थकम् , यथा सिद्धान्तव्याप्तिलक्षणेऽत्यन्ताभावमात्रनिवेशे गवादेस्तादात्म्येन साध्यतायां सास्नावत्त्वहेतौ तादात्म्यसम्बन्धावच्छिन्नात्यन्ताभावाप्रसिद्धयाऽव्याप्तिः । अतः हेतुसमानाधिकरणात्यन्ताभावेत्यत्र मूलोक्तमत्यन्ताभावपदमभावमात्रपरं तथाऽत्रापि लक्षणेऽत्यन्ताभावपदमभावमात्रपरमेव,अतो न तादात्म्येनाभिधेयादेः केवलान्वयित्वानुपपत्तिः, तादात्म्येन घटादिभेदमादायैव लक्षणसमन्वयसम्भवात् इत्याह । अत्यन्ताभावत्वादीति आदिपदादन्योन्याभावत्वमात्रमपि न प्रवेश्यम् इतितु तात्पर्य्यम् ।

चिन्तामणिः

नच प्रमेयत्वं प्रमाविषयत्वं तच्च न केवलान्वयि, प्रमाया विषयत्वस्य चाननुगमादिति वाच्यम्। प्रमात्वमेव हि

दीधितिः

वच्छेदकधर्मवत्त्वमर्थः। प्रतियोगितावच्छेदकावच्छिन्नासा-

जागदीशी

वाच्यमित्यर्थः। प्रमाजातीयत्वोक्त्यापि न प्रतियोगित्वगर्भलक्षणस्य प्रतीकारः, विषयत्वस्य नानात्वात् अतः प्रमाजातीयत्वेन

नारायणी

प्रमेयत्वादेः केवलान्वयित्वानुपपत्तिं पुनरपि शङ्कते मूले **नचेति** वाच्यमिति परेणान्वयः। प्रमाविषयत्वं = यथार्थज्ञानविषयत्वम्। **अननुगमादिति** तथाच प्रमाविषयत्वस्य प्रत्येकपदार्थे विभिन्नतया एकप्रमेयेऽपरप्रमेयत्वाभावमादाय सर्वस्यैव प्रमाविषयत्वरूपप्रमेयत्वस्य केवलान्वयित्वभङ्गः, तत्तदभावीयप्रतियोगितायाः प्रत्येकप्रमेयत्वनिष्ठत्वादिति भावः। समाधत्ते **प्रमात्वमेवहीति**। परम्परासम्बन्धात् = स्वाश्रयविषयत्वसम्बन्धात् **अनुगतमिति** तथाच स्वाश्रयविषयत्वसम्बन्धेन प्रमात्ववत्त्वमेव प्रमेयत्वं तस्यच सकलपदार्थनिष्ठतया जातित्वेनानुगमसम्भवान्न प्रमात्वस्याभावो लक्षणघटकः, अतो न प्रमेयत्वादेः केवलान्वयित्वानुपपत्तिरित्याशयः, यदिच प्रमात्वं न जातिः अपितु तद्वन्निष्ठविशेष्यताकत्वावच्छिन्नतत्प्रकारताकज्ञानत्वमात्रमेव तत् तस्यच प्रकारविशेष्यभेदेन भिन्नतया न प्रमात्वस्यापि केवलान्वयित्वमित्युच्यते। तदाऽप्याह **प्रमाजातीयविषयत्वंचेति** टीकायां प्रमाजातीयेत्यस्य व्याख्यानमाह **घटत्वेति** घटत्वादिप्रकारकघटादिविशेष्यकप्रमामुपादायेत्यर्थः।

**चिन्तामणिः**

परम्परासम्बन्धात् घटादौ प्रमेयत्वमनुगतं प्रमाजातीय-

**दीधितिः**

मानाधिकरण्यमेवाभावविशेषणम्, तेन द्रव्यगुणभेदयोर्द्वित्वा-

**जागदीशी**

अनुगमं कुर्वाणस्य मूलकृतोऽनवच्छेदकत्वगमलक्षणे तात्पर्य्यम-

**नारायणी**

स्ववृत्तिभ्रमसामान्यभिन्नत्वमेव तत्साजात्यमाह भ्रमसामान्येति नित्य-ज्ञानावृत्तिविषयिताशून्यत्वेनेत्यर्थः। अन्यादृशस्य भ्रमसामान्यभिन्नत्वस्य वक्तुमशक्यत्वात् पर्य्याप्त्यादिनिवेशे लाघवानवकाशादिति हृदयम्। तत्स-जातीयस्य घटत्वादिप्रकारकघटादिविशेष्यकज्ञानसजातीयस्य। ज्ञानस्य घटत्वादिप्रकारकघटादिविशेष्यकज्ञानस्य प्रमेयत्वं वाच्यमिति तथाच स्वनिष्ठनित्यज्ञानावृत्तिविषयिताशून्यत्ववज्ज्ञानीयविषयत्वमेव प्रमात्व-मिति फलितार्थः।

(दीधितिकारोक्ततथाचेत्यादिग्रन्थावतरमाह प्रमाजातीयेति निरुक्त-रीत्या प्रमेयत्वस्य निर्वचनेनापीत्यर्थः। नप्रतियोगित्वेति न वृत्तिमदत्य-न्ताभावप्रतियोगित्वरूपलक्षणस्य प्रतीकार इत्यर्थः। कुत इत्याकाङ्क्षाया-याह विषयत्वस्येति नानात्वादिति तथा चैकविषयत्ववति अपरविषय-त्वाभावमादाय निरुक्तप्रमेयत्वस्यापि नकेवलान्वयित्वमिति भावः। अतः निरुक्तप्रमेयत्वादावव्याप्तिभयतः। अनवच्छेदकत्वेति प्रतियोगिव्यधि-करणाभावप्रतियोगितानवच्छेदकधर्मवत्त्वरूपलक्षणे तात्पर्य्यम = तादृश-लक्षणार्थबाधेच्छयोच्चरितत्वम् अवधार्य = निश्चित्य, व्याचष्टे दीधिति-कार इति शेषः। तथाच प्रतियोगितावच्छेदकसम्बन्धेन स्वावच्छेदका-वच्छिन्नानधिकरणवृत्त्यभावप्रतियोगितावच्छेदकतापर्य्याप्त्यनधिकरण-

जागदीशी

वधार्य्यं व्याचष्टे तथा चेति । अत्र गुरुधर्मस्यापि प्रतियोगितावच्छेदकत्वोपगमात् न प्रमेयधूमत्वादिप्रकारेण धूमादेः केवलान्वयित्वम्, सिद्धान्तलक्षणोक्तरीत्या प्रतियोगितावच्छेदकानतिरिक्त-

नारायणी

धर्मवत्त्वं केवलान्वयित्वम् तत्रात्प्रमेयत्वाभावस्य धर्त्तुं शक्यत्वेऽपि तदीयप्रतियोगितावच्छेदकतापर्याप्त्यनधिकरणतायाः प्रमेयत्वत्वादावत्ततया निरुक्तधर्ममादायैव प्रमेयत्वादौ लक्षणसमन्वयः। एवमन्यत्राप्यनयैव रीत्या लक्षणसमन्वयः स्वयमूहनीय इतितु तत्त्वम् ।

ननूक्तलक्षणं प्रमेयकम्बुग्रीवादिमति चाऽव्याप्तं, गुरुधर्मस्य प्रतियोगितानवच्छेदकतया प्रमेयधूमाद्यभावीयप्रतियोगितावच्छेदकताया धूमत्व एव सत्त्वेन प्रमेयधूमत्वादौ तदभावात् इत्यत आह अत्रेति निरुक्तलक्षणकर्त्तुर्मते इत्यर्थः । गुरुधर्मस्यापि = प्रमेयधूमत्वकम्बुग्रीवादिमत्त्वादेरपि । प्रतियोगितेति तथाच नव्यमते प्रमेयधूमत्वादेरपि अभावप्रतियोगितावच्छेदकतया न प्रमेयधूमत्वादिना प्रमेयधूमादेः केवलान्वयित्वमित्यर्थः । नन्वेवं प्राचीनमते का गतिरित्यत आह सिद्धान्तेति तथाचावच्छेदकत्वनिरुक्तौ अनवच्छेदकत्वघटितव्याप्तिलक्षणे यथा प्रतियोगितावच्छेदकाभाववदवृत्तिधर्मस्य प्रतियोगितावच्छेदकत्वमभिहितं तथाऽत्रापि लक्षणे तादृशाभावप्रतियोगितावच्छेदकाभाववदवृत्तियो धर्मः स प्रतियोगितावच्छेदकः, तदन्यधर्मवत्त्वमेव केवलान्वयित्वं वक्तव्यम् । एवञ्च न प्रमेयधूमत्वादिप्रकारेण प्रमेयधूमादेः केवलान्वयित्वापत्तिः । प्रमेयधूमाभावप्रतियोगितावच्छेदकधूमत्वाभाववति प्रमेयधूमत्वस्यावर्त्तमानतया प्रमेयधूमत्वस्यैव तादृशाभावप्रतियोगितावच्छेदकत्वेन धर्त्तुं शक्यत्वात् इति तु समुदितग्रन्थतात्पर्यम् । तदवच्छेदकत्वम् = तादृशाभावप्रतियोगितावच्छेदकत्वम् ।

चिन्तामणिः

विषयत्वं वा। तथापि केवलान्वयिनि संशयाभावात् कथमनुमितिः, प्रमेयत्वमत्र वर्त्तते न वेति संशयश्च न प्रमेयपक्षकः किन्तु प्रमेयत्वपक्षको भिन्नविषयकः, प्रमेयत्व-

दीधितिः

दिना न केवलान्वयित्वम्। न चैवं विरुद्धयोर्धर्मयोर्द्वित्वेन केवलान्वयित्वापत्तिः, तदवच्छिन्नाधिकरणाप्रसिद्ध्या तदवच्छिन्नाभावे प्रतियोग्यसामानाधिकरण्यस्यासम्भवादिति वाच्यम्, तादृशधर्मावच्छिन्नस्य यत्किञ्चिदधिकरणवृत्ति-

जागदीशी

वृत्तित्वमेव वा तदवच्छेदकत्वं वाच्यम्। इत्थञ्चेति अवच्छेदकत्वनिवेशे चेत्यर्थः। तेनेति। अन्यथा द्रव्यभेदगुणभेदोभयत्वावच्छिन्नाभावस्य प्रतियोगिसमानाधिकरणत्वात् तदसमानाधिकरणस्य अभावान्तरस्य प्रतियोगितानवच्छेदकमेव तादृशोभयत्व-

नारायणी

अवच्छेदकत्वेति तादृशाभावप्रतियोगितानवच्छेदकत्वनिवेशे चेत्यर्थः। चकारात् तादृशाभावाप्रतियोगित्वनिवेशपक्षे द्रव्यगुणभेदोभयस्मिन्नातिव्याप्तिरिति ध्येयम्। अन्यथा = स्वावच्छेदकसम्बन्धेन स्वाश्रयानधिकरणवृत्तित्वस्य प्रतियोगिवैयधिकरण्यस्वरूपत्वे। द्रव्यभेदेति द्रव्यभेदगुणभेदोभयत्वावच्छिन्नप्रतियोगिताकाभावस्येत्यर्थः। प्रतियोगीति स्वावच्छेदकसम्बन्धेन स्वाश्रयाधिकरणवृत्तित्वादित्यर्थः। तदसमानेति स्वावच्छेदकसम्बन्धेन स्वाश्रयानधिकरणे वर्त्तमानस्येत्यर्थः। अभावान्तरस्य = घटाद्यभावस्य, तादृशोभयत्वं = द्रव्यभेदगुण-

जागदीशी

मिति ताद्रूप्येणापि केवलान्वयित्वं स्यात् इति भावः । वृत्तिमत

नारायणी

भेदोभयत्वम् । ताद्रूप्येणापि = द्रव्यभेदगुणभेदोभयत्वेन रूपेणापि । केवलान्वयित्वमिति तादृशोभयस्येत्यादिः ।

**अयमाशयः** निरुक्तलक्षणन्तु प्रतियोगितावच्छेदकसम्बन्धेन स्वावच्छेदकावच्छिन्नानधिकरणवृत्त्यभावप्रतियोगितानवच्छेदकधर्मवत्त्वरूपं दीधितिकृताऽभिहितम् । तत्र निरुक्तप्रतियोगिवैयधिकरण्यं यदि स्वावच्छेदकसम्बन्धेन स्वाश्रयानधिकरणवृत्तित्वरूपं तदा द्रव्यभेदगुणभेदोभयोस्तादृशोभयत्वेन रूपेण केवलान्वयित्वं स्यात्, द्रव्यभेदगुणभेदोभयाभावप्रतियोगित्वाश्रयद्रव्यभेदाधिकरणताया गुणे गुणभेदाधिकरणतायाश्च द्रव्ये सत्त्वेन तादृशोभयाभावप्रतियोगित्वाश्रयानधिकरणस्यैवाप्रसिद्धेः, तादृशोभयाभावस्य प्रतियोगित्वाश्रयानधिकरणवृत्त्यभावरूपप्रतियोगिव्यधिकरणाभावपदेन धर्त्तुमशक्यतया तादृशप्रतियोगित्वाश्रयानधिकरणवृत्तिघटाभावप्रतियोगितानवच्छेदकद्रव्यभेदगुणभेदोभयत्वधर्मवत्त्वस्य तादृशोभयस्मिन् सत्त्वात् । प्रतियोगित्वाश्रयानधिकरणवृत्त्यभावप्रतियोगित्वाभाववत्त्वरूपलक्षणे तु न तादृशोभयत्रातिव्याप्तिः । प्रतियोगित्वाश्रयानधिकरणाप्रसिद्धया तादृशोभयाभावस्य धर्त्तुमशक्यत्वेऽपि द्रव्यभेदाभावस्य गुणभेदाभावस्य च प्रतियोगित्वाश्रयानधिकरणे वर्त्तमानस्य धर्त्तुं शक्यतया तदीयप्रतियोगिताया द्रव्यभेदे गुणभेदे च सत्त्वात् । अतः अनवच्छेदकत्वगर्भलक्षण एव तादृशोभयस्मिन् प्रतियोगित्वाश्रयानधिकरणवृत्तित्वरूपप्रतियोगिवैयधिकरण्यनिवेशेऽतिव्याप्तिं सूचयित्वा तादृशातिव्याप्तिवारणाय प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोगितावच्छेदकावच्छिन्नानधिकरणवृत्तित्वरूपमेव प्रतियोगिवैयधिकरण्यमभावविशेषणं वक्तव्यम्, तथासति तादृशोभयत्वेन रूपेण न तादृशोभयस्मिन्नतिव्याप्तिः उभयत्वावच्छिन्नाधिकरणे द्रव्ये गुणे च तादृशोभया-

चिन्तामणिः

पक्षके चास्तित्वसाध्यस्यान्वयव्यतिरेकित्वं तथा च घटः प्रमेयो न वेति संशयो मृग्यते स च नास्त्येव ।

दीधितिः

ताया विवक्षितत्वात् । क्वचिदपि तादृशोभयवत्त्वाप्रतीतेस्त- स्याऽतथात्वात् । सन्दिग्धसाध्यवत्त्वं पक्षत्वमित्याशयेनाशङ्कते

जागदीशी

इत्यादिद्वितीयमतमालम्ब्य शङ्कते न चेति । वाच्यमित्यग्रे ऽन्वयः। एवमिति । प्रतियोगितावच्छेदकावच्छिन्नस्य असामानाधिकरण्य-

नारायणी

भावस्य वर्तमानतया प्रतियोगितावच्छेदकावच्छिन्नानधिकरणवृत्ति- तादृशोभयाभावप्रतियोगितावच्छेदकताया एव तादृशोभयत्वेऽनपा यादिति ।

प्रतियोगितावच्छेदकावच्छिन्नानधिकरणवृत्तित्वरूपप्रतियोगिवैयधि- करण्यस्य लक्षणघटकत्वे घटत्वपटत्वोभयत्वेन रूपेण घटत्वपटत्वरूप- विरुद्धधर्मद्वयस्य केवलान्वयित्वापत्तिः स्यात्, तादृशविरुद्धोभयत्वा- वच्छिन्नाधिकरणाप्रसिद्ध्याऽनधिकरणस्याप्यप्रसिद्धेस्तादृशोभयाभावस्य लक्षणाघटकत्वात्, अभावान्तरीयप्रतियोगितानवच्छेदकताया विरुद्धघ- टत्वपटत्वोभयत्वेऽनपायात् इत्याशङ्कते दीधितौ नचेति टीकायां वाच्य- मित्यग्रेणान्वय इति । तथाच वृत्तिमतस्तादृशाभावाप्रतियोगित्वमिति मतमवलम्ब्य नचवाच्यमित्यन्वयो बोध्यः । प्रतियोगितेति प्रतियोगि- त्वाश्रयानधिकरणवृत्तित्वनिवेशे तु घटत्वपटत्वादिप्रत्येकाभावमादायैव विरुद्धोभयस्मिन्नातिव्याप्तिः, अतः प्रतियोगितावच्छेदकावच्छिन्नानधि- करणवृत्तित्वरूपप्रतियोगिवैयधिकरण्यनिवेशे एवातिव्याप्तिं सम्पादयि-

दीधितिः

तथापीति । अस्तित्वसाध्यस्य—घटवृत्तित्वसाध्यस्य । साध्य-

जागदीशी

प्रवेशे इत्यर्थः । यथाश्रुते तु विरुद्धयोर्द्वयोरपि प्रतियोग्यनधिककरणवृत्तिप्रत्येकाभावप्रतियोगित्वेनैव अतिव्याप्त्यसम्भवात् इति भावः । तादृशधर्मावच्छिन्नस्येति । निरुक्तप्रतियोगितानवच्छेदकधर्मावच्छिन्नस्येत्यर्थः । विवक्षितत्वादित्यस्य वृत्तिमत्पदेन इत्यादिः । तस्य विरुद्धगोत्वाश्वत्वाद्युभयत्वस्य । अतथात्वात्

नारायणी

यथाश्रुतेत्विति । विरुद्धयोर्द्वयोरेव = घटत्वपटत्वद्वयोरेव प्रतियोग्यनधिकरणेति स्वावच्छेदकसम्बन्धेन स्वाश्रयानधिकरणवृत्तिएकैकघटत्वाद्यभावप्रतियोगित्वेनैवेत्यर्थः । निरुक्तेति प्रतियोगितावच्छेदकावच्छिन्नानधिकरणवृत्त्यभावप्रतियोगितानवच्छेदकधर्मावच्छिन्नस्येत्यर्थः। वस्तुतः तादृशाभावप्रतियोगितानवच्छेदको यो यत्किञ्चिदधिकरणव्यक्तिनिरूपितकेवलान्वयिताघटकसम्बन्धावच्छिन्नवृत्तितावच्छेदको धर्मः तद्वत्त्वं केवलान्वयित्वं वक्तव्यम । घटत्वपटत्वोभयत्वे गोत्वाश्वत्वोभयत्वे वा तादृशाभावप्रतियोगितानवच्छेदकतायाः सत्त्वेऽपि यत्किञ्चिदधिकरणव्यक्तिनिरूपितवृत्तितावच्छेदकताया विरहाद् वृत्तिमत्पदेन मूलस्थेन निरुक्तवृत्तितावच्छेदकताया एव विवक्षणीयतया नोक्तविरुद्धोभयत्वमादायोभयस्मिन्नतिव्याप्तिः। अत एवात्रापि लक्षणे गगनेऽपि नातिव्याप्तिः, गगनाभावस्य प्रतियोगितावच्छेदकावच्छिन्नानधिकरणवृत्त्यभावपदेन धर्तुमशक्यतया तादृशाभावान्तरप्रतियोगितानवच्छेदकताया गगनत्वे सत्त्वेऽपि किञ्चिदधिकरणनिरूपितवृत्तितावच्छेदकतायाः तत्र विरहात् इतितु समुदितजगदीशग्रन्थतात्पर्यम् ।

जागदीशी

यत्किञ्चिद्धर्मिकनिरूपितवृत्तितानवच्छेदकत्वात्। वस्तुतः अत्रापि यत्सम्बन्धेन यद्रूपावच्छिन्नस्य अधिकरणे वर्त्तमानस्य अभावस्य दैशिकविशेषणतावच्छिन्नप्रतियोगितानवच्छेदकसामान्यं दैशिकविशेषणतावच्छिन्नप्रतियोगितानवच्छेदकं तत्सम्बन्धेन तद्रूपाव-

नारायणी

ननु उक्तलक्षणेऽपि स्ववृत्तिवाच्यत्ववत्त्वसम्बन्धेन ज्ञानत्वादेः केवलान्वयित्वं न स्यात्, तेन सम्बन्धेन प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिन्यधिकरणाभावस्याप्रसिद्धेरित्यत आह वस्तुतः अत्रापीति निरुक्तलक्षणेऽपीत्यर्थः। वक्तव्यमिति परेणान्वयः। यत्सम्बन्धेनेत्यादि तथाच केवलान्वयिताघटकसम्बन्धत्वेनाभिमतसम्बन्धेन यद्रूपावच्छिन्नस्याधिकरणं स्वरूपसम्बन्धेन प्रतियोगितावच्छेदकावच्छिन्नानधिकरणं तद्वृत्त्यभावीयतादृशस्वरूपसम्बन्धावच्छिन्नप्रतियोगितावच्छेदकत्वाभावव्यापकसामान्यतः स्वरूपसम्बन्धेन प्रतियोगितावच्छेदकावच्छिन्नानधिकरणवृत्त्यभावीयप्रतियोगितावच्छेदकत्वाभावः तेन सम्बन्धेन तद्रूपावच्छिन्नं केवलान्वयीत्येवं वक्तव्यमित्यर्थः पर्य्यवसितः। भवति च स्ववृत्तिप्रमेयत्ववत्त्वसम्बन्धेन ज्ञानत्वादौ निरुक्तकेवलान्वयित्वलक्षणसमन्वयः। स्वरूपेण घटाधिकरणतात्वावच्छिन्नानधिकरणं यत् स्ववृत्तिप्रमेयत्वादिमत्त्वसम्बन्धेन ज्ञानत्वत्वावच्छिन्नस्याधिकरणं पटादिकं तद्वृत्तिस्वरूपेणघटाधिकरणत्वाभावीयप्रतियोगितावच्छेदकत्वाभावस्य निरुक्तज्ञानत्वस्वप्रमेयत्वत्ववाच्यत्वत्वादौ वर्त्तमानतया तत्र सामान्यतः स्वरूपसम्बन्धेन यथोक्तप्रतियोगिन्यधिकरणघटाधिकरणत्वाभावीयस्वरूपसम्बन्धावच्छिन्न प्रतियोगितावच्छेदकत्वाभावस्यावश्यकत्वात् ज्ञानत्वत्वावच्छिन्नस्य स्ववृत्तिप्रमेयत्वादिमत्त्वसम्बन्धेनाधिकरणवृत्तिस्वरूपसम्बन्धेन यथोक्तप्रतियागिन्यधिकरणाभावप्रतियोगितावच्छेदक-

जागदीशी

च्छिन्नं केवलान्वयीत्येव वक्तव्यम्। अन्यथा स्ववृत्तिप्रमेयत्ववत्त्वादिसम्बन्धेन प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिवैयधिकरण्याप्रसिद्ध्या तादृशसम्बन्धेन केवलान्वयिनि ज्ञानत्वादौ उक्तलक्षणस्य अव्याप्तिप्रसङ्गादित्यवधेयम्। ननु संशयस्य अनु-

नारायणी

त्वाभावव्यापकतायाः सामान्यतः यथोक्तप्रतियोगिव्यधिकरणाभावप्रतियोगितावच्छेदकत्वाभावेऽद्दततया यद्रूपपदेन ज्ञानत्वादेरुपग्रहसम्भवात्। एवं प्रमेयत्वत्वाद्यवच्छिन्नस्याधिकरणे पटमठादौ स्वरूपेण वर्त्तमानप्रतियोगिव्यधिकरणघटाधिकरणत्वाभावीयप्रतियोगितावच्छेदकत्वाभावव्यापकताया अपि सामान्यतः स्वरूपेण यथोक्तप्रतियोगिव्यधिकरणघटाधिकरणत्वाभावीयप्रतियोगितावच्छेदकत्वाभावे सत्त्वात् यद्रूपपदेन प्रमेयत्वत्वादिकमादायापि लक्षणसमन्वयो बोध्यः। व्यावृत्त्यादिकं पूर्ववदेवानुसन्धेयम्। अन्यथेति निरुक्तरीत्या लक्षणार्थानिर्वचने इत्यर्थः। स्ववृत्तीति ज्ञानत्वादिवृत्तीत्यर्थकम्। तादृशसम्बन्धेन = स्ववृत्तिप्रमेयत्वादिमत्त्वसम्बन्धेन उक्तलक्षणस्य = यथाश्रुतप्रतियोगिवैयधिकरण्यघटितप्रतियोगितानवच्छेदकत्वगर्भलक्षणस्य। न व्याप्तीति यथोक्तलक्षणार्थनिर्वचनेनेत्यादिः इतिदिक्।

निरुक्तलक्षणादिना स्वरूपसम्बन्धेन प्रमेयप्रमेयत्वादेः केवलान्वयित्वव्यवस्थापनेऽपि केवलान्वयिप्रमेयत्वादिसाध्यकानुमितेरप्रसिद्धिः। अनुमितिं प्रति पक्षताविधया घटः प्रमेयत्ववान्नवेत्याकारकसंशयस्य जनकतया स्वरूपेण प्रमेयत्वाभावाप्रसिद्ध्या घटपक्षक प्रमेयकोटिकप्रमेयाभावकोटिकसंशयस्याप्रसिद्धेरित्याशयपरं, तथापि केवलान्वयिनीत्यादिमूलं सन्दिग्धसाध्यवत्त्वमित्यादिग्रन्थेन दीधितिकृतां व्यवस्थापयतां सन्दिग्धसाध्यवत्त्वमिति ग्रन्थमवतारयति नन्विति। संशय-

### चिन्तामणिः

अथ पक्षः साध्यवान्न वा पक्षे साध्यमस्ति न वेति संशयौ सामानविषयकावेव, तदस्यास्त्यस्मिन्निति मतुपो विधानादिति चेन्न, विशेषणविशेष्यभावभेदेनार्थभेदात्। मैवम्, य एव हि संशयः पक्षे साध्यसिद्धिविरोधी स एवानुमानाङ्गमावश्यकत्वात् लाघवाच्च, न तु समानविष-

### दीधितिः

सिद्धिविरोधी साध्यसिद्धिनिवर्त्त्यः। विशेषणविशेष्यभावभे-

### जागदीशी

मित्यनुपयुक्तत्वात् तथापीत्यादिमूलासङ्गतिः, अत आह सन्दिग्धेति तथा च सिद्धिदशायामनुमितेर्वारणाय पक्षताविधयैव संशयस्यो-

### नारायणी

स्य=पक्षादिधर्मिकसाध्यादिसंशयस्य अनुपयुक्तत्वादिति नव्यानां मते इत्यादिः। सन्दिग्धेतीति पक्षादिधर्मिकसाध्यादिसंशयस्यैव प्राचीननये पक्षतात्वम्, नतु सन्देहविषयीभूतसाध्यवत्त्वमपि पक्षत्वं वक्तव्यम्। तथा सति जलादौ विनष्टस्य वन्ह्यादेरनुमितिर्नस्यादित्यस्य स्वयमेव पक्षताग्रन्थेऽभिहितत्वात् इति हृदयम्। भावमाह तथाचेति सिद्धिदशायां=पक्षादिधर्मिकसाध्यादिनिश्चयदशायाम्। अनुमितेर्वारणायेति सिद्धेरनुमितिप्रतिबन्धकतायाः सर्वसम्मतत्वादिति भावः। पक्षता विधयैव—पक्षतात्वेनैव संशयस्योपयोगः=संशयसत्त्वेऽनुमितेरुत्पादः, सिद्ध्युत्तरं संशयस्यानुत्पादेऽपि सिद्धिपूर्वकालीनसंशयस्यैव पक्षताविधयाऽनुमितिप्रयोजकत्वमात्रमिति तत्त्वम्।

चिन्तामणिः

यकत्वमपि तत्र तन्त्रं, गौरवात् । प्रमेयत्वं घटनिष्ठात्यन्ताभावप्रतियोगि न वेति संशयश्च घटः प्रमेय इति

दीधितिः

देऽपि विरोधिविषयतामात्रेण प्रतिबन्धकत्वमनुभवबलादा-

जागदीशी

पयोग इत्याशङ्कितुरभिप्रायः । कालसम्बन्धित्वरूपस्य अस्तित्वस्य केवलान्वयितया तत्साध्यकस्य अन्वयव्यतिरेकित्वं मूलोक्तमसङ्गतमतो व्याचष्टे घटास्तित्वेति । घटवृत्तितेति तदर्थः । साध्यसंशयस्य निश्चयं प्रति अविरोधित्वात् व्याचष्टे साध्यसिद्धेति ।

नारायणी

ननु प्रमेयत्वं घटवृत्ति नवेति संशयस्य प्रसिद्ध्या घटः प्रमेयत्ववानित्यनुमितेर्नानुपपत्तिरित्याशङ्कां मूलकृन्निराकरोति प्रमेयत्वमत्रेति । न प्रमेयपक्षकः=न घटादिप्रमेयविशेष्यकः, किन्तु प्रमेयत्वेति किन्तु प्रमेयत्वविशेष्यक इत्यर्थः । भिन्नविषयक इति तथाच घटादिप्रमेयपक्षकप्रमेयत्वसाध्यकानुमितिं प्रति घटादिप्रमेयविशेष्यकप्रमेयत्वादिकोटिकसंशयस्यैव जनकत्वमित्याशयः । सच संशयो न प्रसिद्ध्यतीत्यग्रे स्फुटीभविष्यति । प्रमेयत्वमस्ति नवा इत्याकारकसंशयोऽपि अस्तित्वस्य कालसम्बान्धित्वरूपस्यापि केवलान्वयितयाऽस्तीत्यभावाप्रसिद्धेः, अतोऽस्तित्वपदं घटास्तित्वपरं दीधितिकृदुक्तं समर्थयति टीकायां कालसम्बन्धीति । सर्वस्यैव वस्तुनः महाकाले वर्त्तमानतया भवति कालसम्बन्धित्वं केवलान्वयीति भावः । तत्साध्यकस्य=अस्तित्वमात्रसाध्यकस्य हेतोः । अन्वयव्यतिरेकित्वम्=अन्वयव्यतिरेकोभयव्याप्तिमत्त्वम् । असङ्गतमिति कालसम्बन्धित्वाभावाप्रसिद्ध्या साध्यभावव्यापकाभा-

### चिन्तामणिः

साध्यसिद्धिविरोधी भवत्येव । यद्वा संशययोग्यतैवानुमा-
नाङ्गं संशयस्य तदानीं विनाशात् । न च सापि साधक-
बाधकप्रमाणाभावः, प्रमेयत्वाभावासिद्धौ तत्प्रमाणासि-

### दीधितिः

स्थीयते । न हीदं साध्यवदत्र वा साध्यमित्येकतरनिश्चयेऽत्र

### जागदीशी

तथा च मूले साध्यसिद्धेर्यो विरोधः प्रतिबन्धस्तद्वानित्यर्थः । न

### नारायणी

वेत्यादिर्व्यतिरेकव्याप्तेरप्रसिद्धिरिति भावः। अतः=निरुक्तमूलासङ्गति-
भयतः, व्याचष्टे दीधितिकार इति शेषः ।

ननु घटः प्रमेयत्ववान्न वा घटे प्रमेयत्वमस्ति न वा इत्याकारकसंशयौ समानविषयकावेव, प्रमेयत्ववान्नवा इत्यत्र प्रमेयत्वमस्यास्तीत्यर्थे एव मतुपो विधानादित्याशङ्क्य मूलकृदेव तां निराकरोति विशेषणविशेष्येति। विशेषणत्वविशेष्यत्वयोर्भेदेन पदार्थस्यापि भेदोऽवश्यं निराबाधः। तथाच घटः प्रमेयत्ववान्नवेत्याकारकसंशयस्यैवानुमितिजनकतयां घटः प्रमेयो वाच्यत्वादित्याकारककेवलान्वयिसाध्यकानुमितेरप्रसिद्धिः। प्रमेयत्वाभावस्याप्रसिद्ध्या तादृशसंशयस्याप्रसिद्धेरिति भावः। मैव-मित्यादिना य एव हि संशयः साध्यसिद्धिविरोधी स एवानुमानाङ्गं इति-मूलकृताऽभिहितो मूलग्रन्थोऽसङ्गतः। संशयस्य साध्यसिद्धिविरोधित्वा-सम्भवात्, अतः दीधितिकृता साध्यसिद्धिविरोधीत्यस्य साध्यसिद्धिनि-वर्त्यः इत्यर्थोऽभिहितः। स चासङ्गतः, विरोधिपदस्य प्रतिबन्धकार्थक-त्वात्, इति अन्यथा मूलं टीकाकृद् व्याचष्टे। तथा चेति। साध्यसिद्ध्या पक्षधर्मिकसाध्यनिश्चयेन सह यो विरोधः=सहानवस्थाननियमः तादृश-

जागदीशी

तु साध्यसिद्धिर्विरोधिनी यस्येति बहुव्रीहिः, परपदे पुंस्त्वायोगात् नित्यं कप्रत्ययापाताच्च। साध्यसिद्धिपदञ्च साध्यधर्मिकपक्षवृत्तित्वनिश्चयपरम्, नातः केवलान्वयिनि साध्याभावाप्रसिद्ध्या साध्याभावाप्रकारकसाध्यप्रकारकज्ञानपर्य्यवसितायाः साध्यसिद्धेः पुनर-

नारायणी

निश्चयाधिकरणावृत्तित्वं तद्वान् इत्यर्थः। तथाच साध्यधर्मिकपक्षवृत्तित्वप्रकारको यो निश्चयस्तत्प्रतिबध्यतावान् यः संशयः स एवानुमानाङ्गमित्यग्रे फुटीभविष्यति।

ननु साध्यसिद्धिरेव विरोधिनी प्रतिबन्धकतावती यस्येति बहुव्रीहिसमासेन साध्यनिश्चयप्रतिबध्यसंशयलाभसम्भवः कथं परित्यक्त इत्यत आह नन्विति। परपदे = विरोधिनोपदे विरोधिपदे योगादिति कर्मधारय एव पुंस्त्वानुशासनाद् बहुव्रीहौ विरोधीति पुल्लिङ्गप्रयोगो न सम्भवतीति हृदयम्। दोषान्तरमप्याह नित्येति तथाच विरोधिनीक इत्येवं प्रयोगः स्यात्, नतु विरोधीति, नित्यकपोऽनुशासनात् इति भावः।

ननु पक्षः साध्यवानित्याकारकनिश्चयो यदि साध्यसिद्धिपदेनोपादीयते तदा तादृशनिश्चय एवाप्रसिद्धः, तदभावाप्रकारकतत्प्रकारकज्ञानस्यैव निश्चयरूपतया प्रमेयत्वाभावाप्रसिद्ध्या घटः प्रमेयत्ववानित्याकारकनिश्चयस्यैवाप्रसिद्धेरित्यत आह साध्यसिद्धिपदञ्चेति। साध्यधर्मिकेति। साध्यविशेष्यकपक्षवृत्तित्वप्रकारकनिश्चयपरमित्यर्थः। नातः साध्यसिद्धिपदस्य साध्यविशेष्यकपक्षवृत्तित्वप्रकारकनिश्चयपरत्वव्याख्यानतः केवलान्वयिनि = घटः प्रमेयत्ववानित्यादौ साध्याभावेति प्रमेयाभावेत्यर्थकम्। साध्याभावेति प्रमेयत्वाभावाप्रकारकप्रमेयत्वप्रकारकज्ञानपर्यवसिताया इत्यर्थः। साध्यसिद्धः = घटः प्रमेयत्ववानित्याकारकनिश्चयस्य। पुनरिति तेन पूर्वं [illegible] पक्षधर्मिकसाध्यप्रकारक-

जागदीशी

प्रसिद्धितादवस्थ्यमिति भावः। वस्तुतः साध्यनिष्ठप्रकारत्वान्यप्रकारत्वानिरूपितपक्षनिष्ठविशेष्यताकत्वमेव साध्यनिश्चयत्वं वाच्यम्। अन्यथा वाच्यं पक्षीकृत्य ज्ञेयस्य तादात्म्येन साध्यतायां तादृशसम्बन्धेन वाच्यवृत्तित्वाभावस्य अप्रसिद्ध्या कथितक्रमेण अप्रसिद्धितादवस्थ्यात्। न चैवं साध्यतदितरोभयप्रकारतानिरूपितपक्षनिष्ठविशेष्यताकत्वरूपसाध्यसंशयत्वस्यैव निरुक्तौ सामञ्जस्ये साध्यनिश्चयनिवर्त्यत्वेन अनुगमोक्तिर्विफलेति वाच्यम्, पक्षः साध्यवान्न वेति संशयवत्साध्यं पक्षनिष्ठाभावप्रतियोगि न वेत्यादिसंश-

नारायणी

निश्चयस्य साध्यसिद्धित्वेऽपि न क्षतिरित्याह वस्तुत इति साध्यनिष्ठेति। साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नसाध्यनिष्ठप्रकारताभिन्नप्रकारत्वानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यताकज्ञानत्वमेवेत्यर्थः। साध्यनिश्चयत्वम् = साध्यसिद्धिशब्दप्रतिपाद्यनिश्चयत्वम्। वाच्यमिति। तथाच घटः प्रमेयत्ववानित्याकारकज्ञानस्यापि साध्यनिश्चयत्वं निराबाधम्। प्रमेयत्वत्वावच्छिन्नप्रकारताभिन्नपटादिप्रकारतानिरूपितत्वस्य घटनिष्ठविशेष्यतायामक्षतत्वादिति भावः। अन्यथा = साध्यविशेष्यकपक्षवृत्तित्वप्रकारकनिश्चयस्य साध्यसिद्धिपदार्थत्वे। वाच्यमिति वाच्यं ज्ञेयं प्रमेयत्वादित्यादिस्थले इत्यर्थः। अप्रसिद्ध्येति तादात्म्येन वाच्यं ज्ञेयमित्याकारकनिश्चयस्य वाच्यनिरूपिततादात्म्यसम्बन्धावच्छिन्नवृत्तित्वाभावाप्रसिद्ध्या पक्षवृत्तित्वप्रकारकनिश्चयस्याप्यप्रसिद्धिः स्याद्, यदि साध्यनिष्ठप्रकारताभिन्नप्रकारत्वानिरूपकपक्षनिष्ठविशेष्यताकज्ञानस्यसाध्यसिद्धिपदेनोपादानं न स्यादित्याशयः।

चिन्तामणिः

द्धेस्तदभावासिद्धिरिति वाच्यम्, पक्षनिष्ठात्यन्ताभावा-
प्रतियोगित्वज्ञानस्यैव साध्यसाधकत्वेन तदभावस्यैव

दीधितिः

साध्यं न वा इदं साध्यवन्न वेति अन्यतरः सन्देह इति।
पक्षनिष्ठेत्यादि। पक्षनिष्ठाभावप्रतियोगित्वज्ञानविरोधिज्ञा-

जागदीशी

यादनुमित्युत्पादेन तदर्थमेवाऽगत्याऽभिधानादिति भावः। ननु
साध्यपक्षवृत्ति न वा इत्यादि संशयस्य असंग्रहः, भिन्नप्रकारकतया
तस्य साध्यवत्त्वनिश्चयानिवर्त्यत्वात्, अतः प्राचां मतेनोपगृह्णाति

नारायणी

नन्विति य एव हि संशय इत्यादिना साध्यं पक्षवृत्ति नवा इत्या-
दिसंशयस्यासंग्रहे घटः प्रमेयत्ववानित्यादौ संशयस्यैवाप्रसिद्धिः।
प्रमेयत्वाभावाप्रसिद्ध्या घटः प्रमेयत्ववान्न वा इत्याकारकसंशयोपादा-
नासम्भवात् इत्याह—तादृशसंशयस्यासंग्रह इति। भिन्नप्रकारतेति
पक्षवृत्तित्वाभावतादृशवृत्तित्वप्रकारकतयेत्यर्थः। साध्यवत्त्वेति घटः
प्रमेयत्ववानित्याकारकनिश्चयत्वावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिब-
ध्यतायाः पक्षवृत्तित्वसंशये विरहादित्यर्थः। समानप्रकारकज्ञानस्यैव
प्रतिबन्धकतया पक्षवृत्तित्वाभावप्रकारकबुद्धौ पक्षवृत्तित्वप्रकारकनिश्च-
यस्यैव नव्यमते प्रतिबन्धकतया घटः प्रमेयत्ववानित्याकारकनिश्चयस्य
प्रमेयत्वं घटवृत्ति नवेत्याकारकसंशयाप्रतिबन्धकत्वादिति हृदयम्।
अतः=पक्षवृत्ति नवेतीत्याकारकसंशयस्यासंग्रहतः। प्राचां मतेन=

लाघवीशी

विशेषणेत्यादि । भेदेऽपीत्यपिना प्रमेयत्वं पक्षवृत्त्यभावप्रतियोगि न वा इत्यादिमूलोक्तस्थले विषयभेदस्यापि संग्रहः । विरोधीति । विरोधिना तत्तत्संशयानुपपत्तिप्रयोजिका या विषयता तन्मात्रेणे-त्यर्थः न तु विरोधिना विषयतामात्रेणेत्यर्थः । तथासति

नारायणी

समानविषयकज्ञानस्य प्रतिबन्धकत्ववादिमतेन । उपगृह्णाति प्रमेयत्वं घटवृत्ति नवेति संशयं संगृह्णातीत्यर्थः । दीधितिकार इति शेषः । यथा प्रमेयत्वं घटवृत्ति नवेत्याकारकसंशयस्यानुमितिजनकत्वं तथा प्रमेयत्वं घटनिष्ठाभावप्रतियोगि नवेत्याकारकसंशयस्यापि तथात्वमानुभविकम्, घटः प्रमेयत्ववान् इत्याकारकनिश्चयस्य विरोधिविषयितामात्रेण उभयत्र प्रतिबन्धकतायाः सुवचत्वात् इत्याह भेदेऽपीत्यपिनेति तादृशापि-कारेणेत्यर्थः । विरोधिविषयितामात्रेण प्रतिबन्धकत्वं व्यवस्थापयति विरोधिनीति तत्तादिति· प्रमेयत्वं घटवृत्ति नवा घटनिष्ठात्यन्ताभाव-प्रतियोगि नवेत्याकारकसंशययोरनुत्पत्तिप्रयोजिकेत्यर्थः । तन्मात्रेण= तादृशानुत्पादप्रयोजकविषयतामात्रेण ।

ननु विरोधिनो ज्ञानस्य या विषयिता तन्मात्रेणैव पक्षः साध्यवा-नित्याकारकनिश्चयस्य प्रतिबन्धकत्वं वक्तव्यमित्यत आह नन्विति तथा सतीति विरोधिनो ज्ञानस्य विषयितामात्रेणेत्यर्थकरणे सतीत्यर्थः । इत्यादिसंशयस्येत्यत्रादिपदेन प्रमेयत्वं पक्षनिष्ठाभावप्रतियोगि नवेति संशयस्य संग्रहः । पक्षो घटादिः, तथाच घटः प्रमेयत्ववान् इत्याकारक-निश्चयप्रतिबध्यतायाः समानाकारकसंशये एव विद्यमानतया निरुक्त-पक्षवृत्ति नवेत्यादिसंशयादेरसंग्रहप्रसंगः स्यादिति भावः ।

संशयस्यानुमितिजनकत्वमसम्भवि संशयोत्तरं लिंगदर्शनव्याप्तिस्म-रणादिनोत्पद्यमानपरामर्शकाले संशयस्य विरहादत आह मूले यद्वेति

चिन्तामणिः

योग्यतात्वात्। प्रमेयत्वमत्यन्ताभावप्रतियोगीति भ्राम्यतः

दीधितिः

नस्य साध्यसाधकत्वेन कथञ्चित्साध्यसिद्ध्यनुगुणत्वेन, पक्षनिष्ठाभावप्रतियोगित्वज्ञानाभावस्य वा साध्यस्य साधकत्वेन, तदभावस्य तस्य साध्ये पक्षनिष्टाभावप्रतियोगित्वज्ञानस्य,

जागदीशी

प्रमेयत्वं पक्षवृत्ति न वा पक्षवृत्त्यभावप्रतियोगि न वा इत्यादिसंशयस्य पक्षः प्रमेयत्ववान् इत्यादिनिश्चयानिवर्त्यत्वे प्रकृतासङ्गतिप्रसङ्गादिति ध्येयम्। पक्षनिष्ठाभावाप्रतियोगित्वज्ञानं न साध्यसाधकं अबाधितत्वबुद्धेरनुमित्यहेतुत्वात्, हेतुत्वेऽपि तदभावो न योग्यता

नारायणी

संशययोग्यतैवेत्यत्रैवकारेण संशयस्यानुमानांगत्वव्यवच्छेदः। तदानीम् = परामर्शदशायां विनाशादिति विभुवृत्तिविशेषगुणानां स्वोत्तरगुणनाश्यत्वनियमादिति भावः।

ननु तर्हि का सा संशययोग्यता इत्यत आह नचसाऽपीति संशययोग्यताऽपीत्यर्थः। साधकेति सिद्धिबाधरूपप्रमानिश्चयस्याभाव इत्यर्थः। निषेधे हेतुमाह प्रमेयत्वेति। प्रमेयत्वाभावरूपवस्तुनोऽप्रसिद्ध्या तत्प्रमाया अपि अप्रसिद्धिरित्यर्थः। योग्यतापदार्थं निर्वक्ति मूले पक्षनिष्ठेति। पक्षनिष्ठाभावप्रतियोगित्वज्ञानाभावस्य। बाधाभावरूपतया साध्यसाधकत्वेन योग्यतात्वादित्यर्थः। पक्षनिष्ठेति चेत्यादिदीधितिमवतारयति टीकायाम्। पक्षनिष्ठेति न साध्यसाध्यकेन साध्यानुमितिजनकम्। कुत इत्याकाङ्क्षायामाह अबाधितत्वेति बाधाभावनिश्चयस्येत्यर्थः। अनुमित्यहेतुत्वात्, तदभावः = पक्षनिष्ठात्यन्ताभावाप्रतियोगित्वज्ञानाभावः।

जागदीशी

इत्युभयथापि पक्षनिष्ठेत्यादिमूलासङ्गतिः, अतो व्याचष्टे पक्षेत्यादि। अग्रे तदभावस्य इत्यत्र तच्छब्देन पक्षवृत्त्यभावप्रतियोगित्वज्ञानस्यैव परामर्शे सामञ्जस्यम्, अतो विरोधित्वलक्षणं नञर्थमन्तर्भाव्य

नारायणी

नयोग्यतेति तादृशाप्रतियोगित्वज्ञानस्य कथञ्चित्साध्यसाधकत्वेऽपि तादृशज्ञानाभावस्य साध्यसाधकत्वं निर्युक्तिकमिति हृदयम्। उभयथापि=तादृशाप्रतियोगित्वज्ञानस्य अनुमितिहेतुत्वपक्षे अनुमित्यहेतुत्वपक्षे च, अतः=यथाश्रुतमूलासङ्गतितः,व्याचष्टे=दीधितिकार इति शेषः। तदभावइत्यत्र तच्छब्दपरामर्शनीयमाह। पक्षवृत्त्यैति पक्षनिष्ठाभावप्रतियोगित्वज्ञानस्यैवेत्यर्थः। सामञ्जस्यमिति तत्पदस्य पक्षनिष्ठाभावप्रतियोगित्वज्ञानस्य परामर्शे तदभावस्य बाधनिश्चयविघटकतया साध्यसाधकत्वमिति भावः।

ननु यथाश्रुत पक्षनिष्ठाभावाप्रतियोगित्वज्ञानस्य साध्यसाधकत्वेन तदभावस्य योग्यतात्वादिति मूलेन तत्पदेन कथं पक्षनिष्ठाभावप्रतियोगित्वज्ञानस्य परामर्शः पूर्वोपस्थापितस्यैव तत्पदपरामर्शनीयत्वात् पक्षनिष्ठाभावाप्रतियोगित्वज्ञानस्यैव पूर्वोपस्थापितत्वात् अत आह अत्रेति निरुक्तेमूलग्रन्थे इत्यर्थः। विरोधित्वलक्षणं=विरोधित्वस्वरूपम्। नञर्थं=तादृशाप्रतियोगित्वघटकनञ्पदप्रतिपाद्यार्थम्। प्रतियोगित्वेति। तथाच पक्षनिष्ठाभावाप्रतियोगित्वज्ञानस्येत्यादेः। पक्षनिष्ठप्रतियोगित्वज्ञानविरोधिज्ञानार्थकतया तदेकदेशस्य बुद्ध्या परामृष्टत्वेन तत्पदेन पक्षनिष्ठाभावप्रतियोगित्वज्ञानस्य परामर्शः-इति भावः।

साक्षात्=तादृशप्रतियोगित्वज्ञानाभावस्यानुमित्यजनकत्वेऽपि बाध-

चिन्तामणिः

संशय इत्यन्ये । नन्वेकरूपविकलमिदं कथं गमकं? तत्त्वे वा व्यतिरेकविकलवत् रूपान्तरविकलमपि गमकं स्यादिति चेन्न, अन्वयव्यतिरेकव्याप्त्योरन्यतरनिश्चये-

दीधितिः

साध्ये पक्षनिष्ठाभावप्रतियोगित्वावगाहिज्ञानत्वेन साध्यविशिष्टपक्षज्ञानविरोधित्वेन वा रूपेणाभावस्य योग्यतात्वात् ।

जागदीशी

आह प्रतियोगित्वज्ञानविरोधिज्ञानस्येति । कथञ्चित् बाधापनयनद्वारा । इदञ्च भावाभावकृतं विरोधित्वमनुसृत्य । वस्तुतः साध्यधर्मिकपक्षनिष्ठाभावप्रतियोगित्वज्ञानविरोधिनः परामर्शस्यैव साध्य-

नारायणी

निश्चयविघटकतया तस्यानुमितिप्रयोजकत्वम् इत्याशयेन दीधितिकृदुक्तकथञ्चिदित्युपादानस्य सार्थक्यं व्यवस्थापयति बाधेति ।

ननु पक्षनिष्ठाभावप्रतियोगित्वज्ञानं साध्यादिविशिष्टबुद्धिं प्रत्येव प्रतिबन्धकतया प्रतियोगित्वज्ञानाभावस्य कथं पक्षनिष्ठाभावप्रतियोगित्वज्ञानविरोधित्वमित्यत आह इदञ्चेति निरुक्तविरोधित्वञ्चेत्यर्थः। भावाभावकृत्वम् = भावेऽभावस्य विरोधित्वं अभावे वा भावस्य विरोधित्वमिति मतमवलम्ब्य दीधितिकृता विरोधित्वार्थको नव्यर्थो भेदः अभिहितः ।

यथाश्रुतमूलं स्वयं सङ्गमयति वस्तुत इति साध्यधर्मिकेति साध्यतावच्छेदकावच्छिन्नविशेष्यकपक्षनिष्ठाभावप्रतियोगित्वप्रकारकज्ञानप्रतिबन्धकस्येत्यर्थः परामर्शस्य = वह्निसाध्यकधूमहेतुकस्थले वह्निव्याप्यधूमवान् पर्वत इत्याकारकवह्निसाध्यकपरामर्शादेरित्यर्थः

जागदीशी

साधकत्वसम्भवात् यथाश्रुतमेव ज्यायः । साध्यसाधकत्वं यथाश्रुतमेव विवक्षितविरोधार्थकस्यापि नञो ज्ञानविरोधित्वप्रकारेण बोधकतायाम् आधुनिकलक्षणापत्तेः पक्षान्तरमाह पक्षनिष्ठेति । तथाच घटानधिकरणमित्यादिप्रयोग इव अप्रतियोगित्वज्ञानेत्यत्रापि नञ्व्यत्यासात् ज्ञानपदेनान्वय इति भावः । द्वितीयकल्पे तदा-

नारायणी

साध्यसाधकत्वेति वन्ह्याद्यनुमितिं प्रति साक्षाज्जनकत्वसम्भवादित्यर्थः । वन्ह्यभाववत्ताबुद्धौ वह्निव्याप्यवत्तानिश्चयस्येव पर्वतनिष्ठाभावप्रतियोगी वह्निरित्याकारकबुद्धावपि तादृशव्याप्यवत्तानिश्चयस्य प्रतिबन्धकतायाः प्राचीनमतसिद्धतया पक्षनिष्ठाभावप्रतियोगित्वज्ञानविरोधित्वेन परामर्शादेरुपादातुं शक्यत्वात् । नच तदभावस्येत्यत्र तत्पदेन तादृशपरामर्शस्योपसंग्रहेऽसङ्गतिः,परामर्शाभावस्यानुमितियोग्यताया वक्तुमशक्यत्वादितिवाच्यं,तत्पदस्य पक्षनिष्ठाभावप्रतियोगित्वज्ञानविरोधिज्ञानात्मकस्याभावस्येत्यर्थकत्वेन सामञ्जस्यात् इत्येवं तात्पर्य्यमाह यथाश्रुतमेवेति। भावाभावकृतविरोधित्वं परित्यज्यापि विरोधार्थकनञो ज्ञानविरोधित्वप्रकारेण बोधकताया आधुनिकलक्षणापत्तेः, पक्षनिष्ठेत्यादेः अर्थान्तरं दीधितिकृदभिहितं व्याचष्टे तथाचेति । घटानधिकरणमिति । तथाच घटानधिकरणमित्यत्र यथा नञो व्यत्यासेन घटाधिकरणाभेदबोधकत्वं तथा पक्षनिष्ठाभावाप्रतियोगित्वज्ञानेत्यत्रापि पक्षनिष्ठाभावप्रतियोगित्वज्ञानाभावार्थकत्वं नञा प्रत्याय्यते । एवञ्च पक्षनिष्ठाभावप्रतियोगित्वज्ञानाभाव एव साध्यसाधकः । एतत्कल्पे तदभावस्येत्यस्य तदात्मकस्यैवाभावस्येत्यर्थकत्वं बोद्धव्यमिति भावः ।

जागदीशी

त्मकस्य अभावस्य इत्यर्थसम्भवेऽपि उभयकल्पसाधारण्यार्थं प्रक्रान्तमेव पक्षनिष्ठाभावप्रतियोगित्वज्ञानं तच्छब्देन परामर्शयन्नाह तस्येत्यादिना। धर्मान्तरं तादृशप्रतियोगित्वज्ञानदशायामपि साध्यानुमित्युत्पत्तेः साध्य इति पूरितम्। तादृशप्रतियोगित्वज्ञानप्रतियोगिताकाभावमात्रस्य तादृशप्रतियोगित्वज्ञानदशायामपि सत्त्वादाह तादृशप्रतियोगित्वावगाहिज्ञानत्वेनेति तादृशनिश्चयत्वेनेत्यर्थः।

नारायणी

उभयकल्पसाधारणं तच्छब्दप्रक्रान्तं प्रदर्शयति उभयकल्पेति पक्षनिष्ठाभावप्रतियोगित्वज्ञानविरोधित्वकल्पे पक्षनिष्ठाभावप्रतियोगित्वज्ञानाभावकल्पे च तत्पदप्रक्रान्तमित्यर्थः। पक्षनिष्ठेति तथाचोभयकल्पसाधारणं तच्छब्दपरामर्शनियन्तुः पक्षनिष्ठाभावप्रतियोगित्वज्ञानमेवेत्याशयः। साध्ये पक्षनिष्ठाभावप्रतियोगित्वज्ञानपर्य्यन्तानुसरणप्रयोजनमाह धर्मान्तर इति घटत्वपटत्वादावित्यर्थः। तादृशेति पर्वतादिरूपपक्षनिष्ठाभावप्रतियोगित्वप्रकारकज्ञानकाले इत्यर्थः। साध्यानुमित्युत्पत्तेः = वन्ह्याद्यनुमित्युत्पत्तेः। साध्ये इति पूरितमिति तथाच साध्यीभूतवह्नौ पर्वतादिनिष्ठाभावप्रतियोगित्वज्ञानदशायां न वन्ह्याद्यनुमितिः सम्भवतीति हृदयम्। पक्षनिष्ठाभावप्रतियोगित्वावगाहिज्ञानत्वेनाभावस्य साध्यसाधकत्वाभिधानप्रयोजनमाह तादृशेति पर्वतादिनिष्ठाभावप्रतियोगित्वप्रकारकवह्निविशेष्यकज्ञानदशायामपि तादृशज्ञाननिष्ठप्रतियोगिताकस्य तादृशज्ञानघटोभयाभावस्य वर्त्तमानत्वात् वह्निधर्मिकपर्वतनिष्ठाभावप्रतियोगित्वज्ञानकालेऽपि पर्वतो वह्निमानित्यनुमित्यापत्तिः स्यादित्यतो दीधितिकृता पक्षनिष्ठाभावप्रतियोगित्वावगाहित्वज्ञानत्वधर्मद्वयावच्छिन्नप्रतियागिताकाभावस्य साध्यसाधकत्वमभिहितम्—इत्याह तादृशप्रतियोगित्वावगाहिज्ञानत्वेनेति ज्ञानपदं

जागदीशी

तेन तादृशप्रतियोगित्वसन्देहदशायां न योग्यताहानिः । ननु एवं पक्षः साध्याभाववान् इत्यादिनिर्णयदशायामपि उक्तक्रमेण संशययोग्यता स्यात्, तथाच तत्रापि अनुमित्यापत्तिः अत आह साध्य-

नारायणी

निश्चयपरमेव वक्तव्यम्, अन्यथा वह्निः पर्वतनिष्ठाभावप्रतियोगी नवेत्याकारकसंशयकाले तादृशप्रतियोगित्वज्ञानधर्मिकाप्रामाण्यग्रहकाले वा पर्वतो वह्निमानित्यनुमितिः स्यादत आह—

तादृशनिश्चयत्वेनेत्यर्थ इति साध्यधर्मिकपक्षनिष्ठाभावप्रतियोगित्वावगाहिसंशयान्यानाहार्याप्रामाण्यज्ञानानास्कन्दितज्ञानत्वेनेत्यर्थः । तेन = निरुक्तनिश्चयत्वेन तादृशनिश्चयाभावस्य साध्यसाधकत्वव्यवस्थापनेन, तादृशेति साध्यधर्मिकपक्षनिष्ठाभावप्रतियोगित्वसन्देहकाले इत्यर्थः । न योग्यताहानिः = न साध्याद्यनुमित्यनुत्पत्तिः । तदानीमपि तादृशनिश्चयत्वावच्छिन्नाभावस्याक्षतत्वादिति तु परमार्थः ।

साध्यविशिष्टेति दीधितिमवतारयति नन्विति एवं पक्षनिष्ठाभावप्रतियोगित्वज्ञानाभावस्य साध्यसाधकत्वेन योग्यत्वाभिधाने । पक्षः = पर्वतादिः, साध्याभाववान् = वह्न्यभाववान् इत्यादीति इत्याकारकनिश्चयकाले इत्यर्थः । संशययोग्यता स्यादिति तथाच पक्षनिष्ठाभावप्रतियोगित्वज्ञानाभावो यदि संशययोग्यता तत एवानुमितिर्भवतीत्युच्यते तदा पर्वतो वह्न्यभाववान् इत्याकारकनिश्चयकालेऽपि पर्वतनिष्ठाभावप्रतियोगित्वज्ञानाभावसत्त्वे बाधकाभावात्तादृशनिर्णयदशायामपि पर्वतो वह्निमानित्यनुमित्यापत्तिः स्यात्, तदर्थं प्रकारान्तरेण दीधितिकारः संशययोग्यतां निर्वक्तीति भावः । साध्येति तथाच पक्षधर्मिकसाध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रकारताशालिबुद्धित्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावन्निश्चयत्वावच्छि-

नारायणी

न्नाभावस्यैव साध्यसाधकत्वेन संशययोग्यतया एकरूपेण पक्षः साध्याभाववानित्याकारकनिश्चयाभावस्य साध्यं पक्षनिष्ठाभावप्रतियोगीत्याकारकनिश्चयाभावस्य च संग्रहसम्भवान्निरुक्ताभावद्वयस्यैवानुमितिजनकत्वसम्भवान्न पक्षः साध्याभाववानिति निश्चयकालेऽनुमित्यापत्तिरितितु परमार्थः।

ननु तथापि केवलान्वयिवाच्यत्वादिसाध्यकानुमित्यप्रसिद्धिः, पक्षसत्त्वसपक्षसत्त्वविपक्षासत्त्वाबाधितत्वासत्प्रतिपक्षितत्वरूपपञ्चधर्मविशिष्टस्यैव हेतोरनुमितिजनकतावच्छेदकप्रकारताश्रयतारूपगमकताया अभ्युपगमाद् घटो वाच्यत्ववान् प्रमेयत्वाद् घटत्वाद् वेत्यादौ वाच्यत्वाभावाप्रसिद्ध्या निश्चितसाध्याभाववदवृत्तित्वरूपविपक्षासत्त्वस्य हेतावुपपादयितुमशक्यत्वात्। नच स्वाभावनिश्चयविषयधर्मिवृत्तित्वसंसर्गावच्छिन्नसाध्याभाववत्त्वमेव विपक्षासत्त्वं वक्तव्यं, निरुक्तसम्बन्धस्य वाच्यत्वादेर्व्यधिकरणसम्बन्धतया तेन सम्बन्धेन वाच्यत्वाभावस्य हेतावपि सत्त्वादिति वाच्यम्, निरुक्तपरम्परायाः संसर्गत्वानभ्युपगमात्। अभ्युपगमे वा साध्याभाववत्त्वस्य विपक्षावृत्तित्वशब्दार्थत्वासम्भवाच्चेत्याशयेनाशङ्कते मूले नन्वेकरूपेति विपक्षावृत्तित्वरूपस्य विकलं = शून्यमित्यर्थः। इदम् = केवलान्वयिसाध्यकप्रमेयत्ववाच्यत्वादिकम्। कथं गमकम् = कथं केवलान्वयिसाध्यकानुमितिजनकतावच्छेदकप्रकारताश्रयीभूतम्, न चाबाधितत्वस्यापि वाच्यत्वसाध्यकघटत्वादिहेतौ विकलत्वसम्भवात्कथमेकरूपविकलमित्युक्तमिति वाच्यम्, पक्षनिष्ठाभावाप्रतियोगिसाध्यकत्वस्यैवाबाधितत्वशब्दार्थत्वात् तस्यच वाच्यत्वसाध्यकघटत्वादावप्यक्षतत्वात्। असत्प्रतिपक्षितत्वमपि प्रकृतसाध्यानुमितिप्रतिबन्धकानुमितिजननयोग्यपरामर्शकालीनप्रकृतसाध्यानुमितिजनन-योग्यपरामर्शविषयत्वाभाववत्त्वरूपं, तच्च वाच्यत्वसाध्यकस्थलेऽपि नाप्रसिद्धम्। अतएव मूलकृतैव सत्प्रतिपक्षग्रन्थे अस्य केवलान्वयिन्यपि

चिन्तामणिः

नानुमित्यनुभवात् युगपदुभयव्याप्त्युपस्थितौ विनिगमकाभावेन उभयोरपि प्रयोजकत्वे व्यतिरेकोपासना

दीधितिः

व्यतिरेकः-विपक्षे हेतोरभावः । व्यतिरेकव्याप्तौ--साध्याभाव-

जागदीशी

विशिष्टेति । अभावमात्रात्मकस्य व्यतिरेकस्य विपक्षगामित्व-

नारायणी

सम्बन्धः, तथाहि वाच्यत्वनिष्ठात्यन्ताभावप्रतियोगिजात्यन्यत्वे सति घटमात्रवृत्त्यधर्मत्वात् घटत्वाभाववत् इत्यनुमानमभिहितमिति ध्येयम् ।

तत्त्वेवा = विपक्षावृत्तित्वासत्त्वेऽपि केवलान्वयिसाध्यकहेतोर्गमकत्वाभ्युपगमे वा । व्यतिरेकेति विपक्षावृत्तित्वाभावविकलवदित्यर्थः। रूपान्तरेति पक्षासत्त्वशून्यमपि हेत्वादिकं गमकं स्यादित्यर्थः । तथाच घटो वाच्यत्ववान् पटत्वादित्यादिस्वरूपासिद्धहेतोरपि गमकत्वं दुर्वारं स्यादिति भावः। समाधत्ते इति चेन्नेत्यादि । अन्वयेति साध्याभाववदवृत्तित्वनिश्चयेन साध्याभावव्यापकाभावप्रतियोगित्वनिश्चयेन चेत्यर्थः। अनुमित्यनुभवात् = अनुमित्युत्पत्तेरावश्यकत्वात्। यत्र एककालावच्छेदेन निरुक्तोभयव्याप्तेरेव निश्चयो जातस्तत्रानुमितावुभयव्याप्तिनिश्चय एव हेतुरिति तत्र विपक्षासत्त्वनिश्चयोऽवश्यमभ्युपगन्तव्यः, तस्यैवान्वयव्याप्तिनिश्चयरूपत्वात् । यत्रतु हेतुव्यापकसाध्य ..मानाधिकरण्यरूपैकविधव्याप्तिज्ञानादेवानुमितिः तत्र विपक्षावृत्तित्वस्याप्रसिद्धत्वेऽपि हेतोर्गमकत्वमभ्युपगन्तव्यमेव इत्याह युगपदुभयेति एककालावच्छेदेन हेतुव्यापकसाध्यसामानाधिकरण्यरूपसाध्याभावव्यापकहेत्वभावप्रतियोगित्वरूपव्याप्तिद्वयोर्निश्चये जाते सतीत्यर्थः। विनिगमकाभावतः = एकतरपक्षपातिन्या युक्तेरभावेन, उभयोरपि = तादृशव्याप्तिद्वयोरपि प्रयोजकत्वे = विषयविधया प्रकृतानुमितिजनकतावच्छेदकत्वे, व्यतिरेकोपोसना = विपक्षावृत्तित्वज्ञा-

चिन्तामणि।

व्यतिरेकश्च विपक्षवृत्तित्वशंकानिवृत्तिद्वारा व्यतिरेकव्याप्तावुपयुज्यते अत्र तु विपक्षाभावेन शंकैव नोदेति।

दीधितिः

हेत्वभावयोर्यौ व्यतिरेकौ साध्यहेतू तयोर्व्याप्तौ।

जागदीशी

शङ्कानिवर्त्तकत्वासम्भवात् व्यतिरेकश्च इत्यादिमूलासङ्गतिः अतो व्याचष्टे विपक्षे हेतारेभाव इति। ननु क्वचित् विपक्षे हेतोरभा-

नारायणी

नस्य हेतावावश्यकता। व्यतिरेकश्च = हेतुधर्मिकविपक्षावृत्तित्वनिश्चयश्च। विपक्षेति निश्चितसाध्याभाववन्निरूपितहेतुनिष्ठवृत्तित्वशङ्कारूपव्यभिचारशङ्कानिवृत्तिद्वारेत्यर्थः। व्यतिरेकेति अन्वयव्याप्तौ साध्याभावहेत्वभावयोर्यो व्यतिरेकः साध्यहेतू तयोर्व्याप्तावित्यर्थः। उपयुज्येते = प्रयोजकः। अत्रतु = केवलान्वयिसाध्यकहेतुस्थले घटो वाच्यत्ववान् प्रमेयत्वादाविति यावत्। विपक्षाभावेन = विपक्षाप्रसिद्ध्या। शङ्कैव = विपक्षावृत्तित्वशङ्कैव। नोदेतीति। तथाच केवलान्वयिस्थले पक्षसत्त्वसपक्षसत्त्वादिमतोर्हेतोरेव गमकत्वमभ्युपगन्तव्यमिति भावः।

व्यतिरेकश्च विपक्षवृत्तित्वशङ्केत्यादिमूलमसङ्गतं स्याद् व्यतिरेकशब्दस्याभावमात्रार्थकतया तस्य विपक्षवृत्तित्वशङ्कानुत्पादाप्रयोजकत्वात् इत्याशङ्क्य विपक्ष इत्यादिदीधितिमवतारयति टीकायाम्—अभावमात्रेति विपक्षेति। विपक्षवृत्तित्वशङ्कानिवर्त्तकत्वासम्भवादित्यर्थः। अतः = मूलासङ्गतिभयतः, व्याचष्टे दीधितिकार इति शेषः।

नान्वेति क्वचिद् विपक्षे = धूमवान् वह्नेरित्यादौ जलह्रदादौ विपक्षे हेतोरभावग्रहेऽपि = तद्वन्ह्यादेरसत्त्वग्रहेऽपि। विपक्षेति कत्र-

जागदीशी

वग्रहेऽपि विपक्षवृत्तित्वशङ्कोत्पादात् विपक्षत्वावच्छेदेन हेत्वभाववत्त्वं वाच्यं तच्च व्यतिरेकव्याप्तिपर्य्यवसितं न स्वात्मिकायां व्यतिरेकव्याप्तौ उपयुज्यते इति मूलासङ्गतिः अतो व्याचष्टे साध्यभावहेत्वभावयोरिति । तथा च व्यतिरेकव्याप्तेः स्वस्मिन् अनुपयुक्तत्वेऽपि साध्यान्वयव्याप्तौ व्यभिचारशङ्कानिरासद्वारा उपयोगः, भिन्नप्रकारकस्यापि ज्ञानस्य विरोधित्वोपगमादति

नारायणी

चिद् विपक्षनिरूपितवृत्तित्वरूपव्यभिचारशङ्कोत्पादात् विपक्षत्वावच्छेदेन विपक्षत्वव्यापकतया हेत्वभाववत्त्वम् = हेत्वभावः। तच्चेति विपक्षत्वावच्छेदेन हेत्वभाववत्त्वञ्चेत्यर्थः। व्यतिरेकेति साध्याभावव्यापकाभावप्रतियोगिहेतुरूपव्यतिरेकव्याप्तिपर्य्यवसितमित्यर्थः। उपयुज्यते इति व्यतिरेकव्याप्तौ व्यतिरेकव्याप्तेः प्रयोजकत्वासम्भवादिति भावः। अतः = निरुक्तमूलग्रन्थासङ्गतितः । व्याचष्टे इति तथाच व्यतिरेकव्याप्तौ विपक्षत्वावच्छेदेन हेतोरभाववत्त्वस्य व्यतिरेकव्याप्तिरूपस्याप्रयोजकत्वे त्वन्वयव्याप्तावेव व्यभिचारशङ्कानिवृत्तिद्वारा विपक्षे हेतोरभावस्य प्रयोजकताया आवश्यकतया व्यतिरेकव्याप्तावित्यादिमूलमन्वयव्याप्तिपरतया दीधितिकृता व्याख्यातमित्याह तथाचेति स्वस्मिन् = व्यतिरेकव्याप्तौ अनुपयुक्तत्वेऽपि = अप्रयोजकत्वेऽपि । साध्यान्वयव्याप्तौ = हेतुव्यापकसाध्यसामानाधिकरण्यरूपव्याप्तौ । उपयोगः = प्रयोजकत्वम्।

ननु साध्याभाववद्वृत्तिरूपविपक्षवृत्तित्वशङ्कां प्रत्येव हेतौ विपक्षावृत्तित्वज्ञानस्य प्रतिबन्धकत्वेऽपि निरुक्तव्यभिचारशङ्कायाः स्वव्यापकसाध्यसामानाधिकरण्यरूपान्वयव्याप्तौ कथं प्रतिबन्धत्वं येन शङ्कानिरसनमावश्यकमित्यत आह भिन्नेति तथाच निरुक्तान्वयव्याप्तिज्ञानं

जागदीशी

भावः। केचित्तु व्यतिरेको यदि अभावमात्रं व्यतिरेकव्याप्तिर्वा उभयथापि तद्बुद्धेर्न विपक्षवृत्तित्वशङ्कानिवर्त्तकत्वं भिन्नप्रकारकत्वात् अतो व्याख्यातं विपक्षे हेतोरभाव इति। हेतोर्विपक्षवृत्तित्वाभाव इति तदर्थः। व्यभिचारशंकाया न व्यतिरेकव्याप्तिविरोधित्वं भिन्नप्रकारकत्वात् अतस्तन्निरासद्वारा विपक्षवृत्तित्वाभावस्य

नारायणी

प्रत्यपि भिन्नप्रकारकस्य विपक्षवृत्तित्वज्ञानस्य प्रतिबन्धकत्वं प्राचीनमतसिद्धम्।

केषाञ्चिन्मतमुत्थापयति व्यतिरेकपदस्य विपक्षे हेतोरभाव इति व्याख्यानं प्रकारान्तरेण समर्थयतां मतमाह केचित्तु इति व्यतिरेकपदार्थो यद्यभावमात्रं स्याद् व्यतिरेकव्याप्तिर्वा स्यात्तदाऽसङ्गतिमाह उभयथापीति व्यतिरेकपदस्याभावमात्रार्थकत्वे वा इत्यर्थः। तद्बुद्धेः = तादृशाभावादिज्ञानस्य। अभावमात्रविषयकनिश्चयस्य व्यतिरेकव्याप्तिविषयकनिश्चयस्येति यावत्। नविपक्षेति व्यभिचारशङ्कानिवर्त्तकत्वमित्यर्थः। भिन्नेति ग्राह्याभावाप्रकारकत्वादित्यर्थः। व्याख्यातमिति अभावप्रकारकनिश्चयस्य साध्याभावव्यापकाभावप्रतियोगित्वप्रकारकनिश्चयस्य च विपक्षवृत्तित्वरूपग्राह्याभावानवगाहितया दीधितिकृता विपक्षवृत्तित्वाभाव एव व्यतिरेकशब्दार्थं इत्यभिहितमित्याशयः। तदर्थः = विपक्षे हेतोरभाव इत्यस्यार्थः। व्यभिचारेति विपक्षवृत्तित्वार्थकम्। व्यभिचारशङ्काया व्यतिरेकव्याप्त्यप्रतिबन्धकत्वे हेतुमाह भिन्नेति व्यभिचाराभावानवगाहित्वादित्यर्थः। अतः = निरुक्तासङ्गतिभयतः। तन्निरासद्वारा = विपक्षवृत्तित्वशङ्कानिरासद्वारा। विपक्षेति व्यतिरेकापदार्थीभूत-

जागदीशी

सुतरां व्यतिरेकव्याप्तौ उपयोगो न सम्भवति अतो व्याचष्टे साध्याभावहेत्वभावयोरितीत्याहुः । तच्चिन्त्यम् । अत्रेति शंका इयं नव्यनैयायिकानां न तु गुरूणाम् तैरनौपाधिकत्वस्य व्याप्ति-त्वस्वीकारात् अत एव गुरूणां व्याप्यतावच्छेदकप्रकारकज्ञानस्यैव

नारायणी

स्येत्यादिः । सुतराम् = भिन्नप्रकारकज्ञानस्याप्रतिबन्धकत्वात् । व्यति-रेकेति साध्याभावव्यापकाभावप्रतियोगित्वरूपव्याप्तावित्यर्थः । नोप-योगी = न प्रयोजकः । तर्हि कुत्र प्रयोजकः इत्याकाङ्क्षायामाह व्याचष्ट इति, दीधितिकार इति शेषः । तथाचान्वयव्याप्तावेव विपक्षवृत्तित्व-शङ्कानिरासद्वारा व्यतिरेकपदार्थस्य विपक्षवृत्तित्वाभावस्योपयोगित्व-मिति भावः । तच्चिन्त्यमिति चिन्ताबीजन्तु यथाश्रुतपूर्वोक्तशङ्कासमा-धानत एव दीधितिकृद्ग्रन्थसङ्गमनसम्भवे निरुक्तरीत्या तत्सङ्गमनाय व्यतिरेकपदार्थव्याख्यानं तु न समीचीनमिति दिक् ।

ननु अत्र वदन्तीत्यादिना साध्याभाववदवृत्तित्वज्ञानस्यानुमितिजन-कत्वं दीधितिकृतां व्यवस्थापनं न गुरूणांमते सम्भवति । तेषां मतेऽनौ-धिकत्वरूपव्याप्तिज्ञानस्यानुमितिजनकत्वादित्याह अत्रेतीति अत्र वदन्तीत्याशङ्केत्यर्थः । नव्येति यदिच नव्यानां मतेऽपि स्वव्यापकसाध्य-सामानाधिकरण्यमेव व्याप्तिः तदाप्याह भट्टानामिति वा । दीधिति-कृत्प्रभृतीनामित्यर्थः । नतु गुरूणाम् = नतु प्रभाकराणाम् । कथन्तान्निवृ-त्त्यर्थमाह तैरिति गुरुभिरित्यर्थः । अनौपाधिकत्वस्य = स्वाभाववद-वृत्तित्वसंसर्गावच्छिन्नप्रतियोगिताकोपाध्यभाववत्त्वस्य । व्याप्तित्वेति तादृशव्याप्तित्वावच्छिन्नस्यानुमितिप्रयोजकत्वाभ्युपगमात् । अत एव = निरुक्तशङ्काया नव्यनैयायिकादिमतसिद्धत्वादेव । व्याप्यतेति, धूमत्वा-

दीधितिः

अत्र वदन्ति । साध्याभाववदवृत्तित्वमेव व्याप्तिः, लाघवात् प्रायशः साधनभेदेऽप्यभेदाच्च । यत्सम्बन्धावच्छिन्न-

जागदीशी

अनुमितिहेतुतया प्रायशः साधनभेदेऽपि इत्याद्यग्रिमग्रन्थासङ्गतिरित्यपि परास्तमित्यपि ध्येयम् ।

साध्येति । अत्र साध्याभावस्य अधिकरणत्वं निरवच्छिन्नं ग्राह्यम् । तेन कपिसंयोगादिसाध्यकस्य एतद्वृक्षत्वादेर्नासंग्रहः ।

नारायणी

दिवन्ह्यादिव्याप्यतावच्छेदकप्रकारकधूमवान् पर्वत इत्याकारकपक्षधर्मतानिश्चयस्यैवेत्यर्थः । धूमत्वादिनानाहेतुतावच्छेदकप्रकारकपक्षधर्मताज्ञानस्य जनकत्वे प्रायशः साधनभेदेऽप्यभेदादिति दीधितिग्रन्थो न सङ्गच्छते, अतो गुरूणां मते नेयमाशङ्का इत्याशयेनाह परास्तमिति । नव्यनैयायिकानामियमाशङ्केति व्याख्यानेनेत्यादिः । साध्याभाववदवृत्तित्वं यदि साध्याभावाधिकरणनिरूपितवृत्तित्वाभाववत्त्वरूपं तदा कपिसंयोगसाध्यक-एतद्वृक्षत्वहेतोरसंग्रहः स्यात्, मूलावच्छेदेन कपिसंयोगाभाववति एतद्वृक्षत्वस्य वृत्तेः इत्यत आह अत्रेति । निरुक्तलक्षणे इत्यर्थः । घटकत्वमधिकरणत्वान्वयिसप्तम्यर्थः । निरवच्छिन्नमिति यत्किञ्चिद्देशकालाद्यनवच्छिन्नमित्यर्थः । तेन = निरवच्छिन्नसाध्याभावाधिकरणत्वविवक्षणेन । कपिसंयोगादीत्यत्रादिना विभागपरिग्रहः । एतद्वृक्षत्वादेरित्यत्राद्यादिना द्रव्यत्वादिपरिग्रहः । नासंग्रह इति इदमुपलक्षणम् । साध्यतावच्छेदकावच्छिन्नप्रतियोगिताकोऽपि साध्याभावो वक्तव्यः। तेन तत्तद्वह्नयाद्यभावमादाय धूमादेर्नासंग्रह इति ध्येयम् ।

जागदीशी

तदपि वा केवलान्वयिनां पथि प्रस्थाप्यमित्यवधार्यताम्। व्याप्तिरिति। प्रकारतया अनुमितिजनकतावच्छेदकमित्यर्थः। व्याप्तिर्व्याप्नोतेः शक्यम्, केवलान्वयिनि तु न व्याप्यव्यवहारोऽपीत्यपि कश्चित्।

नारायणी

ननु साध्याभावाधिकरणतायां निरवच्छिन्नत्वं दुर्वचं, कथञ्चित्सुवचत्वेऽपि यथाश्रुतदीधितिकारोक्तलक्षणस्य लाक्षणिकत्वापत्तिर्दुर्वारा स्यादित्यत आह तदपि वेति कपिसंयोगादिसाध्यक एतद्वृक्षत्वादिकमपि वेत्यर्थः। केवलान्वयिनां पथि = केवलान्वयिसाध्यकघटत्वादिवदित्यर्थः। प्रस्थाप्यमिति तथाच केवलान्वयिसाध्यकानुमितेर्यथा न नव्यनैयायिकसम्मतता तथा एतद्वृक्षत्वादिहेतुकं कपिसंयोगादिसाध्यकानुमितिरपि न तन्मतसिद्धा इति निरवच्छिन्नत्वं साध्याभावाधिकरणतायां न विवक्षणीयम्, निरुक्ताव्याप्यवृत्तिसाध्यकानुमितिविलोपस्त्विष्ट एवेति भावः।

साध्याभाववदवृत्तित्वं व्याप्तिरित्यत्र व्याप्तिपदं व्याचष्टे प्रकारतयेति प्रकारताकसम्बन्धेनेत्यर्थः। अनुमितिजनकतावच्छेदकम् = व्याप्तिज्ञाननिष्ठानुमितिजनकतायां निरुक्ता व्याप्तिरवच्छेदिकेत्यर्थः। अर्थान्तरमप्याह व्याप्नोतेरिति विपूर्वकाङ्पूर्वकाप्-धातोरित्यर्थः, शक्यम् = शक्यार्थः व्याप्य-व्याप्य-इत्याकारकव्यवहारप्रयोजकोऽर्थः इति यावत्।

नन्वेवं वाच्यं ज्ञेयत्वादित्यादावपि ज्ञेयत्वं वाच्यत्वव्याप्यमिति व्यवहारो न स्यादित्यत्रेष्टापत्तिमाह केवलान्वयिनीति केवलान्वयिसाध्यकहेतावित्यर्थः। न व्याप्यतेति तथाच केवलान्वयिहेतौ व्याप्यत्वव्यवहारविरहात्साध्याभाववदवृत्तित्वमेव तादृशधातोरर्थ इति भावः।

कश्चिदित्यस्वरससूचनाय। तद्बीजं तु व्याप्तेरनुमितिजनकतावच्छेदकत्वस्वीकारेणैव केवलान्वयिसाध्यकसद्धेतौ साध्याभाववदवृत्ति-

जागदीशी

लाघवादिति । (पक्षधर्मिकसाध्याभाववदवृत्तिमत्तानिश्चयोत्तरानुमितित्वावच्छिन्नं प्रति तादृशनिश्चयत्वेन हेतुतायामवच्छेदकलाघवादित्यर्थः । पक्षधर्मिकस्वव्यापकसाध्यसमानाधिकरणहेतुमत्तानिश्चयोत्तरानुमितित्वावच्छिन्नं प्रति तादृशहेतुमत्तानिश्चयत्वेन कारणतायान्तु पूर्वापेक्षया अवच्छेदकगौरवादिति

नारायणी

स्वरूपव्याप्तिविरहात् केवलान्वय्यनुमितिखण्डनसम्भवे निरुक्तशक्यार्थनिर्वचनं निर्युक्तिकमिति ।

साध्याभाववदवृत्तित्वस्य व्याप्तित्वे लाघवं प्रदर्शयति पक्षधर्मेति पक्षविशेष्यकसाध्याभाववदवृत्तिमत्त्वप्रकारकनिश्चयोत्तरजायमानानुमितित्वावच्छिन्नं प्रतीत्यर्थः। तादृशनिश्चयत्वेन = पक्षः साध्याभाववदवृत्तिमानित्याकारकनिश्चयत्वेन। हेतुतायां = जनकतायाम्, अवच्छेदकलाघवादिति = साध्यविषयतानिरूपिताभावविषयतानिरूपिताधिकरणविषयतानिरूपितवृत्तित्वविषयतानिरूपिताभावविषयतानिरूपितसम्बन्धिविषयतानिरूपितपक्षविषयताशालिनिश्चयत्वेन जनकत्वे तावतीनां विषयतानामेव जनकतावच्छेदकत्वं कल्पनीयम्, स्वव्यापकसाध्यसमानाधिकरणहेतुमान् पक्ष इत्याकारकनिश्चयोत्तरानुमितित्वावच्छिन्नं प्रति तादृशनिश्चयत्वेन जनकत्वे तु अनन्तहेतुविषयतायाः कारणतावच्छेदकत्वस्यावश्यं कल्पनीयतया पूर्वापेक्षयानिरुक्तज्ञानस्य जनकत्वपक्षेऽवच्छेदकस्याधिकस्य प्रवेशाद् गौरवम् । अतः साध्याभाववदवृत्तित्वज्ञानमेव लाघवादनुमितिजनकमित्याशयः। पूर्वापेक्षया = साध्याभाववदवृत्तित्वज्ञानस्य जनकत्वे जनकतावच्छेदकत्वकल्पानापेक्षया । अवच्छेदकगौरवादिति तत्राद्धेतुविषयताया अनन्ताया अपि कारणतावच्छेदकत्वकल्पना इतितु

दीधितिः

साध्याभाववति हेतोरवृत्तित्वं गृह्यते तेन सम्बन्धेन साध्यसिद्धिः

जागदीशी

भावः। साध्याभाववदवृत्तित्वावच्छिन्नप्रकारकनिश्चयत्वेन एकरूपेण धूमालोकादिनानालिङ्गकपरामर्शस्य तादृशनिश्चयोत्तरानुमितित्वावच्छिन्नं प्रति हेतुत्वम्। अतः साधनविशेषाप्रवेशप्रयुक्तलाघवमप्यस्ति इत्याह प्रायश इति। साध्याभाववदवृत्तित्वं न साध्याभाववति सम्बन्धसामान्येन अवर्त्तमानत्वम्, तद्ग्रहेऽपि

नारायणी

परमार्थः। लाघवमेव विवृणोति साध्याभावेति साध्याभावाधिकरणनिरूपितवृत्तित्वाभावत्वावच्छिन्नप्रकारकनिश्चयत्वेनेत्यर्थः। एकरूपेण= तादृशावृत्तित्वेन रूपेण धूमालोकादिति आदिना इन्धनादिपरिग्रहः। अतः=साध्याभाववदवृत्तिमान् पक्ष इत्याकारकनिश्चयोत्तरजायमानानुमितित्वावच्छिन्नं प्रति तादृशनिश्चयत्वेन हेतुतायामेवच्छेदकस्य लाघवतः, साधनेति। धूमालोकादिविशेषाप्रवेशमूलकमेवलाघवम् इत्याह इत्येवं दीधितिकार आह प्रायश इतीति प्रायशः पदप्रयोजनमनुपदप्रदर्शनीयमेवादरणीयम्।

साध्याभाववदवृत्तित्वं यदि सम्बन्धसामान्यावच्छिन्नवृत्तित्वाभावस्तदा सम्बन्धसामान्यावच्छिन्नवन्ह्यभाववन्निरूपितवृत्तित्वाभावस्य धूमादावग्रहेऽपि वन्ह्यभावाधिकरणनिरूपित संयोगसम्बन्धावच्छिन्नवृत्तित्वाभावग्रहदशायां वन्ह्यनुमितेरावश्यकतया तादृशसम्बन्धसामान्यावच्छिन्नवृत्तित्वाभावप्रवेशो न सम्भवति इत्याह सम्बन्धसामान्येनेत्यादि, संयोगसमवायाद्यन्यतमसम्बन्धावच्छिन्नवृत्तित्वाभाववत्त्वं नेति पूर्वेण सह सम्बन्धः तेन सम्बन्धसामान्यावच्छिन्नवृत्तित्वस्य कुत्राप्यप्रसिद्धत्वेऽपि न क्षतिरिति ध्येयम्। तदग्रहेऽपि=तादृशान्यतमसम्ब-

जागदीशी

पक्षः साध्याभाववदसंयुक्तवान् साध्यभाववदसमवेतवान् इत्यादि-ज्ञानादेव साध्यानुमितेरानुभविकत्वात्, एवञ्च विभिन्नसम्बन्धेन हेतुतास्थले साध्याभाववदवृत्तित्वमप्यस्माकं नाना इत्याशयेन प्रायश इत्युक्तम्। न च साध्याभाववदवृत्तित्वज्ञानस्य साधनविशेषमन्त-

नारायणी

न्धावच्छिन्नवृत्तित्वाभावस्य धूमादावग्रहेऽपि। पक्षः-पर्वतः, साध्येति वन्ह्यभाववदसंयुक्तवान् घटो रूपवान् पृथिवीत्वादित्यादौ तु घटः रूपा-भाववदसमवेतवान् इत्यर्थः। इत्यादिज्ञानादेव = इत्यादिनिश्चयादेव साध्यानुमितेः वन्ह्याद्यनुमितेः, आनुभविकत्वात् = अनुव्यवसीयमानत्वात् एवंचेति हेतुतावच्छेदकसम्बन्धावच्छिन्नवृत्तित्वाभावस्य लक्षणघट-कत्वे चेत्यर्थः। विभिन्नसम्बन्धेन = धूमादेः संयोगेन वन्हिसाध्यकस्थले संयोगसम्बन्धेनैव, कालिकसन्बन्वेन वन्ह्यादिसाध्यकस्थले तु कालिक-सम्बन्धेनैव धूमादेर्हेतुतास्थले। साध्याभावेति साध्याभावाधिकरणनि-रूपिततत्सम्बन्धावच्छिन्नवृत्तित्वाभाववत्त्वमपीत्यर्थः। अस्माकं = केव-लान्वयिसाध्यकानुमितिमपलापयताम्। नानेति सम्बन्धभेदेनैव वृत्ति-ताया भिन्नत्वादिति हृयम्। इत्युक्तमिति दीधितिकृतेति शेषः।

ननु धूमालोकादिसाधारणहेत्वघटितवन्ह्यादिरूपसाध्याभाववद-वृत्तित्वज्ञानस्य वन्ह्याद्यनुमितिजनकत्वाभ्युपगमे वन्ह्यभावाधिकरण-निरूपित - संयोगसम्बन्धावच्छिन्नवृत्तित्वाभावविशिष्टधूमवान् पर्वत इत्याकारकपरामर्शे यदा इदं ज्ञानं धूमाभाववति धूमप्रकारकमित्याका-रकाप्रामाण्यज्ञानं वर्त्तते तदाऽपि पर्वतो वह्निमानित्यनुमित्यापत्तिः। धूमत्वावच्छिन्नविषयताया वन्ह्याद्यनुमितिजनकतानवच्छेदकतया तद-वच्छिन्नांशेऽप्रामाण्यज्ञानस्योदासीनत्वेन तादृशाप्रमाण्यग्रहाभावव-शिष्टपरामर्शत्वेनानुमितिजनकताया वक्तुमशक्यत्वादित्याशङ्क्ते नचेति

नागवीशी

र्शस्य अहेतुत्वे वन्ह्यभाववदसंयुक्तधूमवान् पर्वत इत्यादिपरामर्शस्य धूमवत्त्वाद्यंशे भ्रमत्वग्रहेऽपि ततः पर्वतो वह्निमान् इत्यनुमितिः स्यादिति वाच्यम्। इष्टत्वात्। यादृशवस्तुविषयकत्वेन अनुमितिहेतुत्वं तदघटितभ्रमत्वग्रहस्यैव अनुमितिप्रतिकूलत्वात्। अन्यथा धूमसामान्यव्यापकवह्निसमानाधिकरणनीलधूमवान् पर्वत इत्यादिपरामर्शस्य नीलांशे भ्रमत्वग्रहदशायां तन्मतेऽपि तादृश-

नारायणी

वाच्यमिति परेणान्वयः वन्ह्यभावेति वन्ह्यभावाधिकरणनिरूपितसंयोगसम्बन्धावच्छिन्नवृत्तित्वाभाववद्धूमवान् पर्वतः इत्याकारकपरामर्शस्येत्यर्थः। भ्रमत्वग्रहेऽपि = अयं परामर्शो धूमाभाववति धूमप्रकारकःइत्याकारकाप्रामाण्यग्रहेऽपि। समाधत्ते इष्टत्वादिति तथाच तादृशभ्रमत्वज्ञानास्कन्दितपरामर्शोत्तरकाले पर्वते वन्ह्यनुमितिर्भवत्येवेति भावः। तादृशानुमितेरिष्टत्वे युक्तिमाह यादृशेति यद्रूपावच्छिन्नवस्तुविषयकत्वेनानुमितिजनकत्वमित्यर्थः। तदघटितेति तद्धर्मावच्छिन्नाभाववति तद्धर्मावच्छिन्नप्रकारकभ्रमत्वग्रहस्यैवेत्यर्थः। अनुमितोति अनुमित्यनुत्पादप्रयोजकत्वात्। तथाच धूमत्वावच्छिन्नविषयकत्वेन परामर्शस्यानुमितिजनकत्वाभावाद्धूमत्वावच्छिन्नांशेऽप्रामाण्यग्रहस्यानुमित्यनुत्पादाप्रयोजनकतया तादृशभ्रमत्वग्रहसत्त्वदशायामपि अनुमित्युपादो निर्विवाद इत्याशयः। अन्यथेति यादृशवस्तुविषयकत्वेनानुमितिहेतुत्वं तदघटितभ्रमत्वग्रहस्यानुमितिप्रतिकूलत्वानभ्युपगमे इत्यर्थः। धूमसामान्येति धूमत्वावच्छिन्नव्यापकवन्ह्यधिकरणवृत्तिनीलधूमवान् पर्वत इत्याकारकपरामर्शस्यैत्यर्थः। नीलांशे भ्रमत्वग्रहेऽपि = अयं परामर्शो नीलाभाववति नीलप्रकारकः इत्याकारकाप्रामाण्यग्रहस्य सत्त्वेऽपी-

जागदीशी

परामर्शात् अनुमित्यनुत्पत्तिप्रसङ्गात् यादृशी विषयताव्यक्तिः अनुमितिजनकतावच्छेदिका तद्घटकपदार्थगर्भाप्रामाण्यज्ञानस्यैव उत्तेजकतया निरुक्ताप्रामाण्यज्ञानस्यापि अनुमितिविरोधित्वसम्भवाच्च। तत्रत्यायाःसाध्याभाववद्वृत्तिधूमत्वावाच्छिन्नविषयताया एव तादृश-

नारायणी

त्यर्थः तन्मतेऽपि = केवलान्वयिसाध्यकहेतुसाधारणव्यापकसामानाधिकरण्यरूपव्याप्तिविषयकपरामर्शस्यानुमितिजनकत्ववादिनां मतेऽपि। तादृशपरामर्शाद् = यथोक्ताप्रामाण्यज्ञानास्कन्दितधूमसामान्यव्यापकनीलधूमवान् पर्वत इत्याकारकपरामर्शाद्। अनुमित्यनुत्पत्तिप्रसङ्गादिति केवलान्वयिसाधारणव्याप्तिज्ञानस्य हेतुत्ववादिनां मतेऽपि नीलत्वावच्छिन्नविषयताया वन्ह्याद्यनुमितिजनकतानवच्छेदकतया तादृशनीलांशेऽप्रामाण्यग्रहसत्त्वदशायामनुमित्यनुत्पादो नानुभवसिद्धः, अपितु अनुमितिरिष्टैव,यादृशवस्तुविषयकत्वेनेत्यादिनियमानभ्युपगमे तु तादृशाप्रामाण्यग्रहास्कन्दितपरामर्शाद् वन्ह्यनुमितिर्नस्यादिति तु परमार्थः।

तुष्यतु दुर्जनन्यायेनाह यादृशीति यद्रूपावच्छिन्नयत्पदार्थनिष्ठविषयताव्यक्तिरित्यर्थः। अनुमितीति निरूपकत्वसम्बन्धेनेत्यादिः। तद्घटितेति। तद्रूपावच्छिन्नतत्पदाथगर्भा प्रामाण्यग्रहस्यैवोत्तेजकतया परामर्शनिष्ठकारणतावच्छेदकीभूताभावप्रतियोगितया। निरुक्तेति धूमाभाववति धूमप्रकारकमित्याकारकाप्रामाण्यग्रहस्येत्यर्थः। अनुमितीति अनुमित्यनुत्पादप्रयोजकत्वसम्भवाच्चेत्यर्थः। तत्रत्यायाः = धूमाभाववति धूमप्रकारकमित्याकारकाप्रामाण्यग्रहास्कन्दितपरामर्शीयधूमविषयतायाः। साध्येति वह्न्याद्यभाववद्वृत्तित्वावच्छिन्नविषयतात्वादित्यर्थः। अयमाशयः। धूमत्वावच्छिन्नविषयतायाः तादृशविषयतात्वेन वन्ह्याद्यनुमिति-

जागदीशी

वृत्तित्वावच्छिन्नविषयतात्वादिति ध्येयम्। यद्यपि धूमलिङ्गकव- ह्न्यनुमितित्वावच्छिन्नं प्रति आलोकलिङ्गकानुमित्सायाः प्रतिबन्ध- कतया तदभावदशायां वह्न्यभाववदवृत्तिमान् पर्वत इत्येवं निश्च-

नारायणी

जनकतावच्छेदकत्वेऽपि वन्ह्याद्यभाववदवृत्तित्वावच्छिन्नविषयतात्वेन धूमविषयताया अपि तादृशानुमितिजनकतावच्छेदकतया यत्पदार्थनिष्ठ- विषयतापदेन तादृशवृत्तित्वावच्छिन्नधूमविषयताया अपि धर्तुं शक्य- त्वात्। धूमाभाववति धूमप्रकारकमित्याकारकपरामर्शधर्मिकाप्रामाण्यग्र- हाभावविशिष्टवन्ह्यभाववदवृत्तिधूमवानित्याकारकपरामर्शत्वेनैव वन्ह्या- द्यनुमितिजनकताया वक्तव्यतया तादृशाप्रामाण्यग्रहसत्त्वदशायां तादृशा- प्रामाण्यग्रहाभावविशिष्टपरामर्शरूपकारणविरहादेव वन्ह्याद्यनुमित्यनु- त्पादोऽपि समर्थयितुं शक्य इति।

ननु आलोकेनानुमिनुयामित्याकारकेच्छादशायां वह्न्यभाववदवृत्ति- मान् पर्वत इत्याकारकपरामर्शसत्त्वे धूमलिङ्गकवह्न्यनुमित्यापत्तिः, निरुक्तपरामर्शस्य आलोकलिङ्गकपरामर्शत्वेनापि धर्तुं शक्यतया तत्प- रामर्शजन्यानुमितिं प्रति आलोकलिङ्गकानुमित्सायाः प्रतिबन्धकत्वास- म्भवात् धूमलिङ्गकानुमितिं प्रत्येव आलोकलिङ्गकानुमित्सायाः प्रतिब- न्धकत्वात् इत्याशङ्कते यद्यपीति। आलोकेति धूमलिङ्गकानुमितौ धूमान्य- लिङ्गकानुमित्सायाः प्रतिबन्धकत्वादिति हृदयम्। तदभावदशायाम् = आलोकलिङ्गकानुमित्साविरहाभावदशायां, तादृशानुमित्सासत्त्वदशाया- मिति यावत्। वह्न्यभावेति वह्न्यभावाधिकरणावृत्तित्वेन धूमालोका- दिसाधारणपरामर्शात्मकनिश्चयादपीत्यर्थः।

जागदीशी

यादपि धूमलिङ्गकवह्न्यनुमितिप्रसङ्गः । पक्षधर्मिकसाध्याभाववदवृत्तिधूमवत्तानिश्चयोत्तरानुमतेरेव धूमलिङ्गकानुमितित्वेन तत्र तादृशानुमित्यनुत्पादस्य सर्वसिद्धत्वात् । तथा च तद्वारणाय पक्षधर्मिकसाध्याभाववदवृत्तिधूमादिमत्तानिश्चयत्वेन तादृशनिश्चयोत्तरानुमितित्वावच्छिन्नं प्रति हेतुत्वं वाच्यमिति साध्याभाववदवृत्तित्वज्ञानस्य हेतुत्वमतेऽपि साधनभेदेन भिन्न एव कार्य्यकारणभावः ।

नारायणी

ननु तत्रानुमितिरिष्टैवेत्यत आह पक्षधर्मिकेति पर्वतादिधर्मिकवह्न्यभाववदवृत्तिधूमवानित्याकारकनिश्चयोत्तरजायमानानुमितेरेवेत्यर्थः। तत्र = धूमाभाववदवृत्तिमानित्याकारकनिश्चयस्थले । अनुमित्यनुत्पादस्य = धूमलिङ्गकवह्न्याद्यनुमित्यनुत्पादस्य । सर्वसिद्धत्वात् = सर्वसम्मतत्वात् । तथाचेति वह्न्यभाववदवृत्तिधूमवत्तानिश्चयोत्तरानुमितेरेव धूमलिङ्गकानुमितित्वे चेत्यर्थः । तद्वारणाय = वह्न्यभाववदवृत्तिमान् पर्वत इत्याकारकनिश्चयदशायामालोकलिङ्गकानुमित्सासत्त्वे धूमलिङ्गकवह्न्यनुमित्यापत्तिवारणाय । पक्षधर्मिकेति पर्वतादिधर्मिकेत्यर्थकम् । तादृशेति । वह्न्यभाववदवृत्तिधूमवत्तानिश्चयोत्तरानुमितित्वावच्छिन्नं प्रतीत्यर्थः। साध्याभावेति वह्न्यभाववदवृत्तित्वज्ञानस्येत्यर्थः । हेतुत्वमतेऽपि = हेतुत्ववादिनां मतेऽपि । साधनभेदेन = धूमादिरूपहेतुभेदेन । भिन्न एव कार्य्यकारणभाव इति तथाच स्वव्यापकसाध्यसमानाधिकरणहेतुमत्तानिश्चयोत्तरजायमानानुमितिं प्रति यथा धूमादिहेतुभेदेन तादृशनिश्चयत्वेन हेतुत्वे कार्य्यकारणभावो धूमादिभेदेन भिन्नः तथा साध्याभाववदवृत्तित्वज्ञानस्य हेतुत्ववादिनां मतेऽपि वह्न्यभाववदवृत्तिधूमवत्तानिश्चयोत्तरजायमानानुमितित्वावच्छिन्नं प्रति तादृशनिश्चयत्वेन

जागदीशी

तथापि तल्लिङ्गकानुमितौ तदन्यलिंगकानुमित्सायाः कामिनी-जिज्ञासादिवत् स्वातन्त्र्येण प्रतिबन्धकत्वे मानाभाव इति मतेनेदम् । पक्षता च गुरूणामिव नव्यानां नानुमितिहेतुः ।

नारायणी

हेतुतायाः पूर्वोक्तापत्तिवारणायावश्यं कल्पनीयतया धूमादिहेतुभेदेन कार्य्यकारणभावोऽवश्यं भिन्न एवेति भावः। उत्तरयति तथापीति। तल्लिङ्गकेति धूमादिलिङ्गकानुमितावित्यर्थः । तदन्येति तदन्यमात्रलिङ्गकानुमित्सायाः। कामिनोति कामिनीज्ञानान्यज्ञानत्वावच्छिन्नं प्रति कामिनीजिज्ञासात्वेन यथा प्रतिबन्धकत्वं तथेत्यर्थः। स्वातन्त्र्येण= ग्राह्याभावानवगाहितया । प्रतिबन्धकत्वे = तल्लिङ्गकानुमित्यनुत्पादप्रयोजकत्वे । मानाभाव इति तदन्यसाध्यकानुमित्सा यथा तत्साध्यकानुमितौ प्रतिबन्धिका भवति तथा तदन्यमात्रलिङ्गकानुमित्सा न तल्लिङ्गकानुमितौ प्रतिबन्धिका इति मतमवलम्ब्यैव साधनभेदेन प्रायशोऽभिन्नस्य साध्याभाववदवृत्तित्वस्य ज्ञानमनुमितिजनकमित्यभिहितं दीधितिकृतेत्याशयः । तल्लिङ्गकानुमित्साविरहविशिष्टतदन्यलिङ्गकानुमित्साऽभावस्य पक्षताविधयैवानुमितिहेतुत्वं केषाञ्चित्प्राचीनानां सम्मतम्, नतु नव्यनैयायिकानाम् । तेषां मतेऽनुमितिधारायाः अपि निर्विवादतया पक्षताया अनुमितिहेतुत्वं नास्तीत्याशयेनाह पक्षतेति सिषाधयिषाविरहविशिष्टसिद्ध्यभावःतल्लिङ्गकानुमित्साविरहविशिष्टतदन्यलिङ्गकानुमित्साविरहश्च । गुरूणामिव = प्रभाकराणामिव । प्रभाकरादीनां मते पक्षताया अनुमित्यहेतुत्वं सर्ववादिसिद्धम्, अतो दृष्टान्ततया गुरूणामित्यादिकमुपन्यस्तम् । नव्यानां = नव्यनैयायिकानाम् । नानुमितिहेतुरिति पक्षतेति पूर्वेण सम्बन्धः ।

जागदीशी

यत्तु आलोकलिंगकेच्छासत्त्वेऽपि धूमालोकोभयपरामर्शदशायां धूमलिंगकानुमितेरुत्पादात् आलोकलिंगकपरामर्शाभावविशिष्टाया एव आलोकलिंगकानुमित्साया धूमलिंगकानुमितिविरोधित्वं वाच्यम्, तथा च पर्वतधर्मिकवह्न्यनुमितिसामान्यं प्रति धूमालोकभस्मादिप्रत्येकलिंगकपरामर्शाभावविशिष्टधूमालोकभस्मादिप्रत्येकलिंगकानुमित्सात्वेन प्रतिबन्धकत्वमेव सम्यक् इति

नारायणी

आलोकलिङ्गकपरामर्शाभावविशिष्टालोकमात्रलिङ्गकानुमित्सैव धूमलिङ्गकानुमितिं प्रति प्रतिबन्धिकेति वदतां मतं दूषयितुमुपन्यस्यति यत्त्विति तच्चिन्त्यमिति परेणान्वयः। आलोकेति आलोकमात्रलिङ्गकानुमित्सासत्त्वेऽपीत्यर्थः। धूमालोकेति वह्न्यभाववदवृत्तिधूमवान् वह्न्यभाववदवृत्त्यालोकवाँश्च पर्वत इत्याकारकपरामर्शद्वयकाले इत्यर्थः। धूमलिङ्गकेति धूमपरामर्शाव्यवहितोत्तरजायमानत्वेनैव धूमलिङ्गकानुमितेरुत्पाद आवश्यक इति भावः। आलोकेति वह्निव्याप्यालोकवान् पर्वत इत्याकारकपरामर्शाभावविशिष्टालोकेनानुमिनुयामित्याकारकालोकलिङ्गकानुमित्साया इत्यर्थः। धूमलिङ्गकानुमितिम् = धूमपरामर्शाव्यवहितोत्तरजायमानानुमितिम्। विरोधित्वम् = प्रतिबन्धकत्वम्, भवता वक्तव्यमिति शेषः। उपसंहरति तथाचेति। पर्वतधर्मिकेति धूमादिलिङ्गकत्वादिकमनिवेश्य पर्वतविशेष्यकवह्नित्वावच्छिन्नविधेयताकानुमितित्वावच्छिन्नं प्रत्येवेत्यर्थः। धूमालोकेति तथाच पर्वतधर्मिकवह्न्यनुमितित्वावच्छिन्नं प्रति धूमपरामर्शाभावविशिष्टधूमलिङ्गकानुमित्साया एवमालोकलिङ्गकपरामर्शाभावविशिष्टालोकलिङ्गकानुमित्साया भस्मलिङ्गपरामर्शाभावविशिष्टभस्मलिङ्गकानुमित्सायाः प्रतिबन्धकत्वमेव युक्तमिति तात्पर्य्यम्।

जागदीशी

धूमलिंगकत्वस्य कार्य्यतानवच्छेदकत्वात् तदवच्छिन्नस्य आपादनमेव दुर्घटमिति। तच्चिन्त्यम्। ननु व्यापकसामानाधिकरण्यव्याप्तेः प्रयोजकत्वे तत्र हेतोर्यादृशः सम्बन्धः

नारायणी

ननु तथापि वह्न्यभाववदवृत्तिमान् पर्वत इत्याकारकपरामर्शदशायामालोकलिङ्गकानुमित्सासत्त्वे कथं न धूमलिङ्गकानुमित्यापत्तिरित्यत आह धूमलिङ्गकत्वस्येति धूमलिङ्गकानुमितित्वस्येत्यर्थः। कार्य्यतेति परामर्शादेरित्यादिः। तदवच्छिन्नस्य = धूमलिङ्गकानुमितित्वावच्छिन्नस्य आपादनम् = आपत्तिः। दुर्घटमिति पर्वतधर्मिकवह्न्यनुमितेरेव प्रकृतपदार्थतया तस्या उत्पादश्चोक्तपरामर्शदशायामिष्ट एव। धूमलिङ्गकानुमितेश्चालीकतया तस्यास्तत्रापादनमतिसाहसमिति भावः। तच्चिन्त्यमिति आलोकेन धूमेनानुमिनुयामित्याकारकेच्छादशायां धूममात्रपरामर्शात्पर्वतधर्मिकवह्न्यनुमितेरावश्यकतया आलोकपरामर्शाभावविशिष्टालोकमात्रलिङ्गकानुमित्साया एव पर्वतधर्मिकवह्न्यनुमितिं प्रति प्रतिबन्धकताया वक्तव्यतया धूममात्रपरामर्शोत्तरमालोकेन भस्मना चानुमिनुयामित्याकारकेच्छासत्त्वदशायां पर्वतधर्मिकवह्न्यनुमित्यापत्तेरवारणात्। नच मात्रपदेन धूमलिङ्गकत्वाप्रकारकालोकलिङ्गकानुमित्सैवालोकपरामर्शाभावविशिष्टा सती पर्वतधर्मिकवह्न्यनुमितिं प्रति प्रतिबन्धिका वक्तव्या, तथा सति नोक्तस्थले पर्वतधर्मिकवह्न्यनुमित्यापत्तिः, तथाविधाया आलोकलिङ्गकानुमित्साया धूमलिङ्गकत्वाप्रकारकत्वादिति वाच्यम, भस्मलिङ्गकपरामर्शोत्तरधूमेनालोकेन च वह्न्यनुमितिर्जायतामित्याकारकेच्छादशायां पर्वतधर्मिकवह्न्यनुमित्यापत्तेर्वज्रलेपत्वादित्येवं चिन्ताबीजमूहनीयम्।

साध्याभाववदवृत्तित्वज्ञानस्यानुमितिजनकत्वमते सम्बन्धविशेषेणैव साध्यानुमितेरनियमो नास्तीति व्यवस्थापयतां दीधितिकृतां यत्सम्बन्धेति ग्रन्थमवतारयति नन्विति। प्रयोजकत्वे = अनुमितिजनकतावच्छेदकत्वमते। हेतोरिति साध्यसामानाधिकरण्यघटकतयेत्यादिः। यादृशः सम्बन्धः

जागदीशी

प्रविष्टः तेन पक्षधर्मताज्ञानात् तत्र साध्यस्य यादृशः सम्बन्धो निविष्टः तेनैव पक्षे साध्यस्यानुमितिः, तथैव हेतुत्वकल्पनात् त्वन्मते त्वनियमः स्यात्, अत आह यत्सम्बन्धेति । नातिप्रसंगः ।

नारायणी

=हेतुतावच्छेदकयद्रूपावच्छिन्नसम्बन्धः प्रविष्ट इति । सामानाधिकरण्यघटकवृत्तितावच्छेदकतयेत्यादिः। तेन=तद्रूपावच्छिन्नहेतुतावच्छेदकसम्बन्धेन पक्षधर्मताज्ञानात् स्वव्यापकसाध्यसामानाधिकरण्यविशिष्टहेतुप्रकारकपक्षविशेष्यकनिश्चयात्मकपरामर्शात् । तत्र=सामानाधिकरण्यघटकतया। यादृशेति यद्रूपावच्छिन्नसाध्यतावच्छेदकसम्बन्ध इत्यर्थः । विशिष्ट इति साध्यसामानाधिकरण्यघटकसाध्याधिकरणताघटकत्वेनेत्यादिः,तेन=तद्रूपावच्छिन्नसाध्यतावच्छेदकसम्बन्धेन। पक्षे=पक्षतावच्छेदकविशिष्टे धर्मिणि । साध्यस्यानुमितिः=साध्यतावच्छेदकावच्छिन्नविधेयताकानुमितिः । तथैव हेतुत्वकल्पनादिति साध्यतावच्छेदकसम्बन्धेन साध्यविधेयताकानुमितित्वावच्छिन्नं प्रति स्वव्यापकसाध्यसमानाधिकरणहेतुतावच्छेदकसम्बन्धावच्छिन्नहेतुतावच्छेदकावच्छिन्न-प्रकारताकप्रकृतपक्षविशेष्यकनिश्चयत्वेन जनकतायाः कल्पनीयत्वान्न साध्यानुमित्यादेरनियमः । एकसम्बन्धेन साध्यसामानाधिकरण्यज्ञानात्सम्बन्धान्तरेण न साध्यानुमितिरिति भावः। तन्मतेतु=साध्याभाववदवृत्तित्वस्यानुमितिप्रयोजकतावादिमते तु। अनियमः स्यादिति संयोगेन वह्न्यभाववदवृत्तित्वज्ञानात्समवायेन वह्न्यनुमितिवारणं दुःशक्यमिति हृदयम् । अनियमाभावं व्यवस्थापयति यत्सम्बन्धेनेत्यादि, (तथाच साध्यतावच्छेदकसम्बन्धात्मकयद्रूपावच्छिन्नसंसर्गेण साध्यस्याभाववति हेतुतावच्छेदकयद्रूपावच्छिन्नसम्बन्धेन हेतोरवृत्तित्वं ज्ञायते तद्रूपावच्छिन्नतादृशावृत्तित्वावच्छिन्नहेतुप्रकारकपक्षविशेष्यकनिश्चयात्तादृश-

जागदीशी

नैकसम्बन्धेन निरुक्तव्याप्त्यादिग्रहात् अपरसम्बन्धेन साध्यानुमितिप्रसंगः। ननु यदि उक्तप्रकारिकैव व्याप्तिः तदा गगनादौ तत्प्रमातोऽपि व्याप्तिग्रहाधीनं फलं स्यात् इत्याशङ्काफलं यदि अनुमितिः

नारायणी

साध्यतावच्छेदकसम्बन्धेन पक्षे साध्यस्यैवानुमितिरित्यस्य कल्पनीयतया न पक्षादौ सम्बन्धान्तरेण हेतुमत्ताज्ञानात् सम्बन्धान्तरेण वा साध्यस्यानुमितिः सम्भवतीति साध्याभाववदवृत्तित्वज्ञानस्यानुमितिजनकत्वमतेऽपि नानियमः शङ्कनीयः इति परमार्थः। नैकसम्बन्धेन = न संयोगादिसम्बन्धेन । निरुक्तव्याप्तिग्रहात् = वह्न्यभाववदवृत्तित्वादिविशिष्टस्य निश्चयात् । अपरसम्बन्धेन = समवायादिसम्बन्धेन। साध्येति वह्न्याद्यनुमित्यापत्तिरित्यर्थः । ।।५४

आकाशादेरित्यादिदीधितिमवतारयति नन्विति साध्याभाववदवृत्तित्वस्य अनुमितिजनकतावच्छेदकव्याप्तित्वाभ्युपगमे- इत्यर्थः । गगनादाविति आदिनाऽऽत्मादिपरिग्रहः । तत्प्रमातोऽपीति साध्याभाववदवृत्तित्वनिश्चयस्येत्यादिः। तथाच वह्निमान् गगनादित्यादौ सर्वत्र गगनादेरवृत्तित्वाद् वह्न्यभावाधिकरणवृत्तित्वप्रकारकगगनविशेष्यकनिश्चयस्यापि तादृशावृत्तित्ववति तादृशावृत्तित्वप्रकारकतया निरुक्तव्याप्तिनिश्चयस्य प्रमात्वं दुरपह्नवमिति हृदयम् । व्याप्तिग्रहाधीनम् = तादृशावृत्तित्वप्रकारकनिश्चयाधीनम् , इत्याशङ्क्य दीधितिकार इति शेषः । अत्र वह्न्यभाववदवृत्तित्वनिश्चयस्य व्याप्तिनिश्चयात्मकप्रमाज्ञानत्वेऽपि तज्जन्यं फलं यदि वह्न्याद्यनुमितिः तदा तस्या आपत्तिरेव न सम्भवति। केवलव्याप्तिनिश्चयमात्रस्यानुमित्यजनकतया कारणान्तरसहकारेणैव तस्यानुमितिजनकतायाः स्वीकरणीयतया कारणान्तरविरहं दीधितिकारोक्तमुपपादयति फलं यद्यनुमितिरिति यदि वह्न्याद्यनुमितिरित्यर्थः।

जागदीशी

तदा कारणान्तरविलम्बादेव न तत्सम्भव इत्याह आकाशादेरिति। पक्षधर्मतेति। अत्र आकाशस्य तत्त्वेन पक्षधर्मत्वाग्रहेऽपि साध्याभाववदवृत्तित्वेन पक्षधर्मत्वग्रहसम्भवात् अयुक्तमेतत्। साधनविशेषान्तर्भावेण व्याप्तिग्रहस्य हेतुतायाः साधनभेदेऽपि इत्यादिना परित्यक्तत्वादिति चिन्त्यम्। व्याप्यव्यवहारस्य फलत्वे तु आह निविशतामिति। तथा च साध्यसामानाधिकरण्यविशि-

नारायणी

कारणान्तरस्येति, पर्वतादिरूपपक्षधर्मताज्ञानविरहादेवेत्यर्थः। न तत्सम्भवः =न वह्न्याद्यनुमितिसम्भवः, पर्वतादिनिरूपितवृत्तितारूपपक्षधर्मताया आकाशे विरहात् आकाशस्यावृत्तित्वादिति भावः। आक्षिपति आकाशस्येति अवृत्तिमत इत्यादि, तत्त्वेन = आकाशत्वादिना पक्षधर्मत्वाग्रहेऽपि पर्वतादिनिरूपितवृत्तित्वज्ञानासत्त्वेऽपि। साध्याभावेति वह्न्यभाववदवृत्तित्वेनेत्यर्थः, पक्षधर्मतेति वह्न्यभाववदवृत्तिमान् पर्वत इत्याकारकपक्षधर्मताग्रहस्य प्रमात्मकस्यैव सम्भवादित्यर्थः। अयुक्तमेतदिति तथाच दीधितिकृतः पक्षधर्मताज्ञानविरहादाकाशलिङ्गकवह्न्याद्यनुमितिर्न सम्भवतीत्यभिधानं न युक्तियुक्तं, साध्याभाववदवृत्तिमान् पक्ष इत्याकारकनिश्चयस्यैव हेत्वाद्यविषयकस्य नव्यमतेऽनुमितिजनकतायाः पूर्वमभिहितत्वात् इत्याशयः। साध्याभाववदवृत्तिमान् पक्ष इत्याकारकपरामर्शस्यैवानुमितिजनकत्वं व्यवस्थापयति। साधनविशेषेति हेतुविशेषान्तर्भावेणेत्यर्थः। व्याप्तिग्रहस्य = साध्याभाववदवृत्तित्वग्रहस्य हेतुतायाः = अनुमितिजनकतायाः साधनेति साधनव्याप्येति आकाशः साध्याभाववदवृत्तिरित्याकारकव्यवहारस्येत्यर्थः। फलत्वेत्विति तादृशलक्षणस्येत्यादिः। तथाचेति। साध्यसामानाधिकरण्येति साध्याधिकरणवृत्तित्वविशिष्टसाध्याभाववदवृत्तित्वमेवेत्यर्थः।

दीधितिः

फलम्, साध्याभाववति येन सम्बन्धेन हेतोरवृत्तित्वं गृह्यते,

जागदीशी

ष्टमेव तत् व्याप्यताव्यवहारौपयिकम्, अतो न गगनादौ वह्न्या-दिव्याप्यताव्यवहार इति भावः। लाघवादाह वृत्तिमत्त्वं वेति। साध्याभाववति येन सम्बन्धेन अवृत्तित्वं तेनैव वृत्तिमत्त्वं बोध्यम्।

नारायणी

तद्व्याप्येति साध्यव्याप्यत्वव्यवहारप्रयोजकमित्यर्थः। अतः=साध्याधिकरणवृत्तित्वविशिष्टसाध्याभाववदवृत्तित्वस्य साध्यव्याप्यत्वव्यवहारप्रयोजकत्वात्। न वह्न्यादिव्याप्यताव्यवहार इति। व्यवहारं प्रति व्यवहर्त्तव्यज्ञानस्य जनकतया वह्न्यभाववदवृत्तित्वस्य गगनादौ सत्त्वेऽपि तद्विशेषणीभूतस्य वह्न्यधिकरणवृत्तित्वस्य गगनादौ विरहाद् व्यवहारप्रयोजकस्य निरुक्तविशिष्टस्य व्यवहर्त्तव्यस्य गगनादावसत्त्वादेव न तत्र वह्न्यादिव्याप्यताव्यवहार इति तु तत्त्वम्। लाघवादिति साध्याधिकरणाद्यप्रवेशेनेत्यादिः। वृत्तिमत्त्वं वेति तथाच वृत्तिमत्त्वविशिष्टयत्साध्याभाववदवृत्तित्वं तस्यैव व्याप्यत्वव्यवहारप्रयोजकतया गगनादौ वृत्तिमत्त्वाभावेन न वह्न्यादिव्याप्यताव्यवहार इति भावः।

ननु संयोगेन द्रव्यत्वादावपि वह्निव्याप्यताव्यवहारापत्तिः। वह्न्यभाववति संयोगेन द्रव्यत्वस्यावृत्तित्वात्, समवायेन तस्य वृत्तिमत्त्वाच्चेत्यत आह साध्याभाववतीति=वह्न्याद्यभावाधिकरणे इत्यर्थः। येन सम्बन्धेनेति तथाच साध्याभाववदवृत्तित्वमपि हेतुतावच्छेदकसम्बन्धावच्छिन्नवृत्तित्वाभावरूपं वृत्तिमत्त्वमपि तेनैव हेतुतावच्छेदक-

### दीधितिः

तेन सम्बन्धेन पक्षधर्मताधीः कारणमिति नातिप्रसंगः। आकाशादेस्तथात्वेऽपि पक्षधर्मताज्ञानविरहान्नानुमितिः।

### जागदीशी

तेन समवायादिना वृत्तिमति द्रव्यत्वादौ संयोगादिना न वह्न्यादिव्याप्यत्वव्यवहारः। अत्र एवं सति घटत्वादेः साध्यतायां पर्याप्तिसम्ब-

### नारायणी

सम्बन्धेन ग्राह्यमित्याशयः। तेन = हेतुतावच्छेदकसम्बन्धेन वृत्तिमत्त्वविवक्षणेन समवायादिनेति आदिना कालिकादिपरिग्रहः। संयोगादिना इत्यत्रादिना स्वरूपादिपरिग्रहः। न वह्न्यादीति वह्न्यादिव्याप्यत्वव्यवहारं प्रति हेतुतावच्छेदकसंयोगसम्बन्धावच्छिन्नवृत्तिमत्त्वविशिष्टवन्ह्यभाववदवृत्तित्वमेव प्रयोजकम्। संयोगेन वह्न्यभाववदवृत्तित्वस्य द्रव्यत्वादौ सत्त्वेऽपि संयोगेन वृत्तिमत्त्वस्य द्रव्यत्वादौ विरहान्न द्रव्यत्वं संयोगेन वन्हिव्याप्यमिति व्यवहार इति तु परमार्थः।

नन्वेवं घटत्ववान् घटपटोभयत्वादित्यत्र पर्याप्तिसम्बन्धेन हेतौ व्याप्यत्वव्यवहारापत्तिः, तत्र पर्याप्तिसम्बन्धेन वृत्तिमत्त्वस्य घटत्वाभाववति पर्याप्तिसम्बन्धेनावृत्तित्वस्य च सत्त्वात्। नच घटत्वाभाववद्घटपटोभयस्मिन् तादृशोभयत्वस्य वर्त्तमानतया साध्याभाववदवृत्तित्वस्यैव तत्र विरहात्कुतस्तत्र व्याप्यत्वव्यवहारापत्तिरिति वाच्यम्, व्यासज्यवृत्तिधर्मावच्छिन्नानुयोगिताक – एकदेशवृत्तिधर्मात्यन्ताभावस्यानभ्युपगमेनोभयत्वावच्छेदेन घटत्वाभावस्यासत्त्वात्, पटादौ तत्सत्त्वेऽपि पर्याप्तिसम्बन्धेन तत्र घटपटोभयत्वस्यावर्त्तमानत्वादित्यत आह अत्रैवं सतीति वृत्तिमत्त्वनिवेशे सतीत्यर्थः। घटत्वादेरित्यत्रादिना पटत्वादिपरिग्रहः। पर्याप्तिसम्बन्धेनेति उभयत्वमुभयत्रैव पर्याप्तं नत्वेकत्रेति सिद्धान्तादरात् पर्याप्तिसम्बन्धेन घटपटोभयत्वस्य तादृशोभयत्रैव

दीधितिः

निविशतां वा तत्र साध्यसामानाधिकरण्यं वृत्तिमत्त्वं वा । अथ

जागदीशी

न्धेन घटपटोभयत्वादेर्व्याप्यत्वं स्यात्, पूर्वकल्पे तु तादृश-सम्बन्धेन साध्यसामानाधिकरण्यविरहादेव व्याप्यत्वासम्भवात् तस्मात् वाकारोऽनास्थायामिति तत्त्वम् । शङ्कते अथेति

नारायणी

विद्यमानतया हेतोर्व्यभिचारित्वमित्याशयः । कथं न व्याप्यत्वम्, कथं न व्याप्यत्वव्यवहारः । स्यादिति तथाच घटत्वाभाववत्पटाद्यवृत्तित्वस्य व्यवहर्त्तव्यस्य घटपटोभयत्वहेतौ सत्त्वात् पर्याप्तिसम्बन्धेन वृत्तिमत्त्वस्य च सत्त्वाद् घटपटोभयत्वं घटत्वव्याप्यमित्याकारकव्यवहारो दुर्वार इति भावः। पूर्वकल्पे तु=साध्यतावच्छेदकसम्बन्धेन साध्यसामानाधिकरण्यनिवेशपक्षे तु। तादृशसम्बन्धेन=हेतुतावच्छेदकीभूतपर्याप्तिसम्बन्धेन। साध्येति घटत्वाधिकरणघटनिरूपितपर्याप्तिसम्बन्धावच्छिन्नवृत्तित्वस्य घटपटोभयत्वहेतौ विरहादेवेत्यर्थः। व्याप्यत्वेति व्याप्यत्वव्यवहारासम्भवात् व्यवहर्त्तव्यस्य साध्यसामानाधिकरण्यविशिष्टसाध्याभाववदवृत्तित्वस्य निरुक्तोभयत्वहेतौ विरहादिति हृदयम्। तस्मात्=निरुक्तहेतौ व्याप्यत्वापत्तिवारणासम्भवाद् । वाकारः=वृत्तिमत्त्वं वेत्यत्र वाकारः। अनास्थायामिति तथाच साध्यतावच्छेदक-

शक्तिः

तस्माद् वाकारोऽनास्थायामिति —एवञ्च उभयत्वमुभयत्रैव पर्य्याप्तं नत्वेकत्रेति सिद्धान्तमादृत्यैवेति बोध्यम् । नच तथापि साध्यसामानाधिकरण्यनिवेशपक्षेऽपि द्रव्यत्ववान् घटः घटान्योभयत्वादित्यत्रातिव्याप्तिवारणासम्भवः, साध्याधिकरणघटपटोभयवृत्तित्वस्य तादृशहेतौ सत्त्वादिति वाच्यम्, हेतुताव-

दीधितिः

साध्याभाववदवृत्तित्वं तद्वृत्तिभिन्नत्वादिरूपं व्यभिचारज्ञान-

जागदीशी

भिन्नत्वादीत्यादिना साध्याभाववद्वृत्तित्वात्यन्ताभावसंग्रहः। व्यभि-

नारायणी

सम्बन्धेन प्रकृतसाध्याधिकरणनिरूपितहेतुतावच्छेदकसम्बन्धावच्छिन्न-वृत्तित्वरूपसाध्यसामानाधिकरण्यविशिष्टसाध्याभाववदवृत्तित्वमेव व्याप्यत्वव्यवहारप्रयोजकतया आदरणीयम्। ननु वृत्तिमत्त्वविशिष्टं तादृशवृत्तित्वं तथेति न घटत्वसाध्यकघटपटोभयत्वहेतौ घटत्वव्याप्यता-व्यवहारः सम्भवतीत्याशयः। साध्याभाववदवृत्तित्वज्ञानमिव साध्यवदन्यावृत्तित्वज्ञानमपि अनुमितिजनकं विनिगमनाविरहाद् वक्तव्यं, एवं साध्याभाववद्वृत्तित्वाभावस्येव साध्याभाववृत्तिभिन्नत्व-ज्ञानस्यापि अनुमितिजनकत्वं विनिगमनाविरहाद् वाच्यं, तथाच एकज्ञानस्य हेतुत्वेऽपरज्ञानादनुमितिर्न स्यात् इति व्यभिचारधीप्रति-बन्धकज्ञानत्वेन सर्वेषां ज्ञानानामवश्यमनुगमः करणीयः। एवंसति व्यापकसामानाधिकरण्यज्ञानस्यापि व्यभिचारधीप्रतिबन्धकतया तस्या-नुमितिजनकत्वस्यावश्यकतया साध्याभाववद्वृत्तित्वाभावज्ञानस्यानुमि-तिजनकत्वे लाघवाभिधानमसङ्गतं स्यात् इत्याशङ्कायां स्वव्यापकसाध्य-सामानाधिकरण्यज्ञानस्य व्यभिचारधीप्रतिबन्धकत्वं निराकुर्वतां दीधि-तिकृतामथसाध्येत्यादिग्रन्थं व्याचष्टे भिन्नत्वेति व्यभिचारधीति।

शक्तिः

च्छेदकधर्मावच्छेदेन साध्यसामानाधिकरण्यस्य विवक्षितत्वात्, तथाच तादृशोभय-त्वस्य घटगुणोभयत्वेऽपि सत्त्वेन तत्रैव तादृशसामानाधिकरण्यविरहात्। नचाभा-वान्तदलं व्यर्थमिति वाच्यम्, द्रव्यं सत्त्वादित्यादावतिव्याप्तिवारकतयैव तत्सा-र्थक्यात्—इति विभावनीयम्।

दीधितिः

विरोधिज्ञानविषयत्वेनानुगमनीयं, तच्च व्यापकसामानाधिकरण्यसाधारणमिति चेत्, स्यादेवं यदि व्यापकताज्ञानं

जागदीशी

चारेति । व्यभिचारधीविरोधितावच्छेदकधर्मघटितत्वेनेत्यर्थः । तेन व्यापकताधियो विरोधिताखण्डकस्य यदीत्याद्युक्तग्रन्थस्य नासङ्गतिः । अनुगमनीयमिति । यद्यपि तादृशभिन्नत्वादिप्रकारकनि-

नारायणी

हेतुधर्मिकसाध्याभाववद्वृत्तित्वग्रहत्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकविषयताकत्वेनेत्यर्थः । तेनेति प्रतिबन्धकतावच्छेदकविषयताघटितत्वेनानुगमकरणेन । व्यापकताधियः = स्वव्यापकसाध्यसामानाधिकरण्यनिश्चयस्य । विरोधितेति व्यभिचारधीप्रतिबन्धकताखण्डकस्येत्यर्थः। यदीत्येति यदि व्यापकताज्ञानं व्यभिचारधियं विरुन्ध्यादित्यर्थः। नासङ्गतिरिति व्यभिचारग्रहत्वावच्छिन्नप्रतिबन्धकतावत्त्वेन व्याप्तिनिश्चयस्यानुगमे व्यापकताज्ञानस्य प्रतिबन्धकत्वासम्भवेन तन्निष्ठव्यभिचारधीविरोधिताखण्डनस्याभुक्तवान्ततापत्तिः स्याद् । व्यभिचारधीप्रतिबन्धकतावच्छेदकविषयताघटितत्वेनानुगमे तु तादृशविषयताघटितहेतुविषयताया व्यापकताज्ञानेऽपि वर्त्तमानतया तत्खण्डनं युक्तियुक्तं स्यादिति भावः।

साध्याभाववद्वृत्तिभिन्नत्वादिप्रकारकनिश्चयस्य तादृशतादृशनिश्चयाव्यवहितोत्तरानुमितित्वावच्छिन्नं प्रति जनकत्वाभ्युपगमे व्यभिचारविरहादेकोपादानेऽन्यस्यासंग्रहाभावस्य सम्भवेन व्यभिचारधीविरोधित्वेनानुगममभिधाय व्यापकताज्ञानस्य व्यभिचारधीविरोधित्वखण्डनं प्रक्षालनाद्धीति न्यायेन नादरणीयमिति तादृशरीत्याऽनुगमो निरर्थक इत्याशङ्कते यद्यपीति। तादृशेति साध्याभाववदवृत्तिभिन्नत्वादिप्रकारक-

जागदीशी

श्चयस्य स्वस्वोत्तरानुमितित्वावच्छिन्नं प्रत्येव हेतुत्वात् अननुगमेऽपि न क्षतिः, तथापि अत्यन्तान्योन्याभावगर्भमन्तर्भाव्य कारणताद्वयकल्पनामपेक्ष्य लाघवात् साध्यव्यभिचारधीविषयप्रकारकपक्षधर्मतानिश्चयत्वेन तादृशानुमितित्वावच्छिन्नं प्रति एकमेव कारणत्वं युक्तमित्याशयेनेदम्। तच्च तादृशज्ञानविषयत्वञ्च।

नारायणी

निश्चयस्येत्यर्थः। आदिपदात् साध्याभाववदवृत्तित्वप्रकारकनिश्चयपरिग्रहः। स्वस्वोत्तरेति साध्याभाववद्वृत्तिभिन्नत्वादिप्रकारकनिश्चयाव्यवहितोत्तरानुमितित्वावच्छिन्नं प्रत्येवेत्यर्थः। हेतुत्वात्=जनकत्वात्। अननुगमेऽपि नक्षतिरिति तथाच एकनिश्चयोपादानेऽपरनिश्चयस्यासंग्रहः, नवा तन्निश्चयस्यानुमितिजनकत्वाभिधाने एकमात्रनिश्चयादनुमित्युत्पादेन व्यभिचारोऽपि शङ्कनीय इति भावः। उत्तरयति तथापीति। अत्यन्तान्योन्याभावेति साध्यवद्वृत्तिभिन्नत्वप्रकारकनिश्चयस्य साध्यवद्वृत्तित्वात्यन्ताभावप्रकारकनिश्चयस्यानुमितिजनकत्वमन्तर्भाव्येत्यर्थः। कारणताद्वयेति तत्तन्निश्चयाव्यवहितोत्तरानुमितौ तत्तन्निश्चयद्वयस्य कारणताद्वयकल्पनामपेक्ष्येत्यर्थः। लाघवमभिप्रेत्याह साध्यव्यभिचारीति हेतुधर्मिकसाध्याभाववद्वृत्तित्वप्रकारकज्ञानप्रतिबन्धकनिश्चयविषयप्रकारकपक्षधर्मतानिश्चयत्वेनेत्यर्थः। तादृशेति निरुक्तपक्षधर्मतानिश्चयाव्यवहितोत्तरानुमितित्वावच्छिन्नमित्यर्थः। एकमेव=तादृशपक्षधर्मतानिश्चयनिष्ठमेव। इत्याशयेनेदमिति निरुक्तरीत्याऽनुगमोऽवश्यं करणीय इति हृदयम्। तादृशेति व्यभिचारज्ञानप्रतिबन्धकज्ञानविषयत्वञ्चेत्यर्थः। व्यापकतावच्छेदकस्य विशेषणत्वाभावे युक्तिं प्रदर्शयता दीधितिकृता

दीधितिः

व्यभिचारबुद्धिं विरुन्ध्यात्, न चैवम्, वह्न्यभाववदवृत्तिर्धूम इति ज्ञाने हि वह्नित्वं स्वरूपेण प्रतियोगित्वं, तदवच्छेदकत्वञ्च सम्बन्धमर्य्यादया भासते, धूमसमानाधिकरणाभाव-

जागदीशी

न चैवमिति च्छेदः। वह्न्यभावेत्यादिविषयविरोधविरहादित्यन्तम् अविरोधित्वे हेतुः। स्वरूपेण धर्मान्तराविशेष्यत्वेन भासत इत्यन्वयः। तदवच्छेदकत्वञ्चेति। वह्नित्वस्यावच्छेदकत्वञ्चेत्यर्थः।

नारायणी

नचैवमित्यस्य पदच्छेदार्थकत्वमाह नचैवमितीति। छेद इति तथाच व्यापकताज्ञानं व्यभिचारज्ञानं प्रति प्रतिबन्धकमेव न भवतीत्यर्थः। विषयविरोधविरहादित्यन्तं व्यापकताज्ञानस्य व्यभिचारधीप्रतिबन्धकत्वाभावे हेतुः, इत्याह वह्न्यभावेत्यादीति स्वरूपेणेत्यस्यार्थमाह धर्मान्तरेति किञ्चिद्धर्मप्रकारेणाविशेष्यत्वेनेत्यर्थः। अयमाशयः। वह्न्यभाववदवृत्तिर्धूम इत्याकारकज्ञाने वह्नित्वस्य प्रतियोगितावच्छेदकत्वावगाहनेऽपि तज्ज्ञानं प्रति धूमवन्निष्ठाभावप्रतियोगितानवच्छेदकं वह्नित्वमित्याकारकव्यापकताज्ञानं न तादृशव्यभिचारज्ञानं प्रति प्रतिबन्धकं भवितुमर्हति। व्यभिचारज्ञाने वह्नित्वनिष्ठप्रतियोगितावच्छेदकताया निरवच्छिन्नतया निरुक्तव्यापकताज्ञाने प्रतियोगितावच्छेदकत्वाभावस्य वह्नित्वादौ भानेऽपि वह्नित्वत्वावच्छेदेनैव तादृशप्रतियोगितावच्छेदकत्वाभावभानमावश्यकम्, अन्यथा जातित्वेन वह्नित्वादौ धूमवन्निष्ठाभावप्रतियोगितानवच्छेदकत्वभानेऽपि ततो वह्न्यनुमित्यापत्तिः स्यादिति प्रतियोगितावच्छेदकत्वप्रतियोगितावच्छेदकत्वाभावयोर्ज्ञानस्य समानप्रकारकत्वाभावात्तादृशव्यभिचारज्ञानाप्रतिबन्धकत्वं युक्तमिति। अन्यदपि निरुक्तव्यापकता-

**दीधितिः**

प्रतियोगितानवच्छेदकं वह्नित्वमित्यत्र च वह्नित्वत्वेन वह्नित्वे प्रतियोगितात्वविशिष्टतदवच्छेदकत्वत्वविशिष्टाभाव इति विषयविरोधविरहात्। विशिष्टस्य वह्नित्वस्यावच्छेदकत्वेन

**जागदीशी**

निर्वह्नित्वबुद्धौ वह्नित्वावच्छिन्नप्रतियोगितात्वेन संसर्गतायां तेषामनुप्रवेशादिति भावः। तदवच्छेदकत्वत्वेनेति। प्रतियोगितावच्छेदकत्वत्वेत्यर्थः। विषयविरोधविरहा देति। समानप्रकारताबुद्धेरेव प्रतिबन्धकत्वादिति भावः। विशिष्टस्यमहानसीयत्वादिविशिष्टस्य।

**नारायणी**

ज्ञानस्य व्यभिचारज्ञानाप्रतिबन्धकत्वे युक्तिं स्वयं प्रदर्शयति **निर्वह्नित्वबुद्धाविति** वह्न्यभाववानित्याकारकबुद्धावित्यर्थः। **वह्नित्वेति** वह्नित्वनिष्ठावच्छेदकताकप्रतियोगितात्वेन संसर्गतायामित्यर्थः। तेषां = वह्नित्वादीनाम्। **अनुप्रवेशादिति** घटकत्वादित्यर्थः, तथाच वह्नित्वनिष्ठप्रतियोगितावच्छेदकताकप्रतियोगितासंसर्गबुद्धौ वह्नित्वावच्छेदेन धूमवन्निष्ठाभावप्रतियोगितावच्छेदकत्वाभावग्रहस्य न प्रतिबन्धकत्वम्, तत्प्रकारकबुद्धावेव तदभावनिश्चयस्य प्रतिबन्धकत्वात्। कथंचित् संसर्गघटकप्रतियोगितावच्छेदकत्वबुद्धौ तादृशप्रतियोगितावच्छेदकत्वाभावग्रहस्य प्रतिबन्धकत्वाभ्युपगमेऽपि न निस्तारः, वह्न्यभाववद्वृत्तित्वग्रहे निरवच्छिन्नवह्नित्वनिष्ठप्रतियोगितावच्छेदकताया एव भानेन वह्नित्वत्वावच्छिन्ने हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकत्वाभावग्रहस्य प्रतिबन्धकताया वक्तुमशक्यत्वात् निरवच्छिन्नविशेष्यताकतद्बुद्धौ किञ्चिदवच्छिन्नविशेष्यताकतदभावनिश्चयस्याप्रतिबन्धकतायाः सर्वसम्मतत्वादिति भावः। **समानेति** तत्प्रकारकबुद्धौ तदभावप्रकारकनिश्चयस्यैव प्रतिबन्धकत्वात् संसर्गज्ञाने प्रकारताया अनभ्युपगमादिति हृदयम्। विषयविरोधं दीधितिकारोक्तं विवृणोति **विशिष्टस्येति महानसीयत्वादीति** धूमवन्निष्ठमहानसीयवह्न्य-

जागदीशी

प्रकारान्तरेति । हेतुमन्निष्ठाभावप्रतियोगितात्वावच्छेदेन यादृश-

नारायणी

भावप्रतियोगितावच्छेदकताया महानसीयवह्नित्वादौ सत्त्वेन विशिष्ट-वह्नित्वस्य वह्नित्वाभिन्नतया वह्नित्वेऽपि तादृशप्रतियोगितावच्छेदकताया आवश्यकतया वह्नित्वे धूमवन्निष्ठाभावप्रतियोगितावच्छेदकत्वाभावो दुर्लभः, अतो व्यापकताघटितलक्षणं प्रकारान्तरेणैव वक्तव्यम्। तथासति वह्न्यभाववद्वृत्तित्वज्ञाने वह्नित्वादौ प्रतियोगितावच्छेदकताया विषयीक-रणेऽपि तादृशप्रतियोगितावच्छेदकत्वबुद्धौ प्रकारान्तरानुसृतव्यापकताग्र-हस्य प्रतिबन्धकत्वं कथमपि न सम्भवतीत्याशयेन प्रकारान्तरानुसरणं प्रदर्श्य व्यापकताग्रहस्य व्यभिचारग्रहाप्रतिबन्धकत्वं व्यवस्थापयति हेतुमन्निष्ठेति। हेत्वधिकरणवृत्त्यभावप्रतियोगितात्वव्यापकं यद्रूपविशि-ष्टधर्मावच्छिन्नत्वाभावः तद्रूपविशिष्टधर्मावच्छिन्नसामानाधिकरण्यमेव व्याप्तिः । महानसीयवह्न्यभावमादाय धूमादेरव्याप्यत्ववारणाय वक्तव्यम्, धूमवन्निष्ठाभावीयप्रतियोगितात्वावच्छेदेनैव वह्नित्वत्व-विशिष्टवह्नित्वावच्छिन्नत्वविरहस्याक्षततया वह्नित्वत्वविशिष्टवह्नित्वा-वच्छिन्नसामानाधिकरण्यस्य धूमादौ सत्त्वाद् धूमस्य वह्निव्याप्यत्वं निराबाधम्। धूमवन्निष्ठमहानसीयवह्न्यभावप्रतियोगितायां महानसीय-त्ववह्नित्वरूपधर्मद्वयावच्छिन्नत्वसत्त्वेऽपि तत्र वह्नित्वमात्रावच्छिन्न-त्वस्य विरहे बाधकाभावात्, धूमवन्निष्ठाभावप्रतियोगितात्वव्यापक-तायाः साध्यतावच्छेदकमात्रावच्छिन्नत्वाभावे सत्त्वात्। एवंच वह्न्य-भाववद्वृत्तिर्धूम इत्याकारकज्ञाने वह्नित्वनिष्ठप्रतियोगितावच्छेदकत्वस्य भानेऽपि यथोक्तव्याप्तिज्ञानस्य तादृशप्रतियोगितावच्छेदकत्वाभावानव-गाहितया तस्य व्यभिचारधीप्रतिबन्धकत्वं दुर्घटमिति तु परमार्थः।

ननु प्रकारान्तरानुसरणं च हेतुमन्निष्ठाभावप्रतियोगितावच्छेदक-तायाः पर्याप्तिसम्बन्धेन यदधिकरणं तदन्यसाध्यतावच्छेदकाव च्छिन्नसा-मानाधिकरण्यं व्याप्तिरित्येवं रूपं वक्तव्यं, तथासति वह्निमान् धूमादि

जागदीशी

धर्मावच्छेद्यत्वाभावः तादृशधर्मावच्छिन्नसामानाधिकरण्यं व्याप्तिरित्यनुसरणे चेत्यर्थः, न तु हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकतापर्य्याप्त्यधिकरणान्यत्वानुसरणे इत्यर्थः। तथा सति महानसीयवह्निमान् धूमात् इत्यादौ महानसीयत्ववह्नित्वोभयोरेव तादृशावच्छेदकत्वपर्य्याप्त्यधिकरणतया तदुभयभिन्नेन महानसीयत्वविशिष्टवह्नित्वप्रकारेण धूमादिव्यापकताया दुरुद्धरत्वापत्तेः।

नारायणी

त्यादौ महानसीयवह्न्यभावस्य धर्त्तव्यत्वेऽपि न क्षतिः, तादृशाभवीयप्रतियोगितावच्छेदकतापर्य्याप्त्यधिकरणीभूतमहानसीयत्ववह्नित्वोभयान्यतायाः साध्यतावच्छेदकवह्नित्वेऽनपायादित्यत आह नत्विति। तादृशेति, हेतुमन्निष्ठप्रतियोगिव्यधिकरणाभावप्रतियोगितावच्छेदकतापर्य्याप्त्यधिकरणभिन्नत्वस्य साध्यतावच्छेदकविशेषणत्वोपगमे इत्यर्थः। निषेधे हेतुमाह तथासतीति निरुक्तरीत्या व्यापकताज्ञानस्यानुमितिजनकत्वाभिधाने सतीत्यर्थः। महानसीयत्ववह्नित्वयोरेवेत्यत्रैवकारेण महानसीयत्वविशिष्टवह्नित्वस्य महानसीयवह्निमान् धूमादित्यादौ धूमवन्निष्ठमहानसीयवह्न्यभावप्रतियोगितावच्छेदकतापर्य्याप्त्यधिकरणत्वव्यवच्छेदः। धूमवन्निष्ठमहानसीयवह्न्यभावप्रतियोगितेत्यर्थकम्। तदुभयेति महानसीत्ववह्नित्वोभयभिन्नमहानसीयत्वविशिष्टवह्नित्वप्रकारेणेत्यर्थः। धूमादीति आदिना द्रव्यत्वादिपरिग्रहः। दुरुद्धरत्वापत्तेरिति तथाच महानसीयवह्निमान् धूमादित्यादौ धूमवन्निष्ठमहानसीयवह्न्यभावप्रतियोगितावच्छेदकतापर्याप्त्यधिकरणं यन्महानसीयत्ववह्नित्वादावच्छततया महानसीयत्वविशिष्टवह्नित्वविशिष्टस्य धूमव्यापकताया वारयितुमशक्यत्वात्। महानसीयवह्निसाध्यकधूमहेतुकस्थले निरुक्तव्यापकताज्ञानान्महानसीयत्वविशिष्टवह्नित्वावच्छिन्नस्यानुमित्यापत्तेरवारणं स्यादिति भावः।

जागदीशी

महानसीयवह्नित्वावच्छिन्नाभावस्यापि वह्नित्वावच्छिन्नाभावतया तद्व-
द्वृत्तित्वज्ञानस्यापि व्यापकताज्ञानप्रतिबन्धकत्वापत्त्या वह्नित्वपर्य्या-

नारायणी

ननु महानसीयवह्न्यभावप्रतियोगितावच्छेदकतापर्याप्त्यधिकरणं यन्महानसीयत्ववह्नित्वोभयं तच्च महानसीयत्वविशिष्टवह्नित्वरूपमेव, विशिष्टस्य तादृशोभयानतिरिक्तत्वादिति न तादृशप्रतियोगितावच्छेदकतापर्य्याप्त्यधिकरणान्यत्वं महानसीयत्वविशिष्टवह्नित्वादौ सुलभम्, अतएव सिद्धान्तलक्षणे भूतत्वमूर्त्तत्वोभयस्य भूतत्वविशिष्टमूर्त्तत्वस्वरूपतायाः सार्वभौमैरुक्तत्वादिति यद्युच्यते तदा दोषान्तरमाह **महानसीयेति** महानसीयत्ववह्नित्वधर्मद्वयावच्छिन्नप्रतियोगिताभावस्यापीत्यर्थः। **वह्नित्वावच्छिन्नेति** वह्नित्वनिष्ठावच्छेदकताकप्रतियोगिताकाभावस्वरूपतयेत्यर्थः। **तद्वद्वृत्तित्वेति** महानसीयवह्न्यभाववद्वृत्तित्वज्ञानस्यापीत्यर्थः। **व्यापकतेति** धूमवन्निष्ठाभावप्रतियोगितावच्छेदकतापर्याप्त्यनधिकरणधर्मवत्त्वरूपधूमव्यापकताज्ञानं प्रति प्रतिबन्धकत्वापत्त्येत्यर्थः। अयं भावः--यदि साध्यतावच्छेदकनिष्ठावच्छेदकताकप्रतियोगिताकाभाववद्वृत्तित्वमेव हेतौ व्यभिचारपदार्थः, तदा वह्निमान् धूमादित्यादौ यदा महानसीयवह्न्यभाववद्वृत्तिर्धूम इत्याकारकज्ञानं वर्त्तते तदा तादृशज्ञानस्य वह्नित्वनिष्ठावच्छेदकताकप्रतियोगिताकाभाववद्वृत्तित्वविषयकत्वेन वह्नित्वादौ धूमवन्निष्ठाभावप्रतियोगितावच्छेदकत्वाभावरूपव्यापकताज्ञानमेव नोत्पद्यते तादृशप्रतियोगितावच्छेदकत्वाभावबुद्धौ महानसीयवह्न्यभाववद्वृत्तित्वरूपव्यभिचारज्ञानस्यापि प्रतिबन्धकतया वक्तुं शक्यत्वात्, तथाच व्यापकताज्ञानस्य कारणतावादिनां मते तादृशव्यभिचारज्ञानकाले यथोक्तव्यापकताज्ञानस्यानुत्पत्त्या कारणाभावेन वह्नित्वेन रूपेण धूमादिना वह्न्यनुमितिर्न स्यादिति।

जागदीशी

प्तावच्छेदकताकवह्निनिष्ठप्रतियोगिताकाभाववदवृत्तित्वस्यैव व्यभिचारतया तज्ज्ञानस्य विषयविरोधसम्भवाच्चेति ध्येयम् । यद्वा

नारायणी

ननु तर्हि कीदृशं व्यभिचारज्ञानमादायानुगमः करणीय इत्यत आह वन्हित्वेति वह्नित्वपर्य्याप्तं यत्प्रतियोगितावच्छेदकत्वं तन्निरूपकवह्निनिष्ठप्रतियोगिताकाभावाधिकरणनिरूपितहेतुनिष्ठवृत्तित्वस्यैवेत्यर्थः । एवकारेण वह्नित्वनिष्ठावच्छेदकताकप्रतियोगिताकाभाववदवृत्तित्वस्य व्यभिचारत्वव्यवच्छेदः । तज्ज्ञानस्य = वह्नित्वपर्याप्तावच्छेदकताघटितव्यभिचारनिश्चयस्य । विषयविरोधेति तथाच वह्नित्वपर्याप्तप्रतियोगितावच्छेदकताकवह्निप्रतियोगिताभाववदवृत्तित्वरूपव्यभिचारज्ञानस्य पर्याप्तिसम्बन्धेन वह्नित्वादौ प्रतियोगितावच्छेदकत्वाधिकरणतावगाहितया तज्ज्ञानस्य धूमादिमन्निष्ठप्रतियोगितावच्छेदकतापर्याप्त्यनधिकरणवह्नित्वावगाहिव्यापकताज्ञानस्य प्रतिबन्धकतया प्रतियोगितावच्छेदकतापर्याप्त्यधिकरणत्वप्रतियोगितावच्छेदकतापर्याप्त्यनधिकरणत्वयोरवश्यं परस्परं विरोधित्वाद्, यथोक्तपर्याप्तिघटितव्यभिचारज्ञानविरोधित्वेन निरुक्तव्यापकताज्ञानस्यापि संग्रहसम्भवेन विषयविरोधाभावेन व्यभिचारज्ञानविरोधित्वेन व्यापकताज्ञानस्यानुमितिजनकत्वेन संग्रहो न सम्भवतीत्याद्यभिधानं दीधितिकृतामसङ्गतं स्यात् । अतो यत्तु मतं सर्वथा अनादरणीयमिति भावः । प्रकारान्तरानुसरणे इत्यस्य अन्यथा प्रकारेण व्याख्यानमाह यद्वेति । वस्तुतः हेतुमन्निष्ठाभावप्रतियोगितात्वावच्छेदेन यद्धर्मावच्छिन्नत्वाभावः यादृशधर्मावच्छिन्नत्वाभावो वा इत्युक्तौ पर्याप्त्यादिनिवेशेन महागौरवं स्यात्, अन्यथा महानसीयवह्न्यभावीयप्रतियोगितायामपि वह्नित्वावच्छिन्नत्वस्यानपायान्निरुक्तरीत्या महानसीयवह्न्यभाववारणं दुर्घटं स्यादत आह यद्वेति इति तु युक्तमुत्पश्यामः ।

### जागदीशी

प्रकारान्तरानुसरणे इत्यस्य साध्यतावच्छेदकतदितरोभयानवच्छेद्या या हेतुमन्निष्ठाभावप्रतियोगिता तदनवच्छेदकत्वस्य निवेशे इत्यर्थः। निर्वह्निवृत्तिर्धूम इत्यादिव्यभिचारज्ञाने वह्नित्वान्यधर्मानवच्छिन्न-प्रतियोगितात्वेनैव प्रतियोगितायाः संसर्गतया भानसम्भवात् इति

### नारायणी

साध्यतावच्छेदकेति। तथाच साध्यतावच्छेदकसाध्यतावच्छेदक-विषयित्वाव्यापकविषयिताको यो धर्मः तदुभयानवच्छिन्ना या हेतुमन्निष्ठाभावप्रतियोगिता तदनवच्छेदकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यमेव व्याप्तिरित्यर्थः प्रकारान्तरानुसरणेनेत्यादिना पर्यवसितः। तेन महानसीयवह्न्यभावमादाय धूमादेर्नाव्याप्यत्वसम्भवः। महानसीयवह्निनिष्ठप्रतियोगिताया वह्नित्वतदितरमहानसीयत्वोभयधर्मावच्छिन्नत्वेन लक्षणघटकीभूतप्रतियोगितापदेन तस्या उपादानासम्भवात्। शुद्धसाध्यतावच्छेदकानवच्छिन्नप्रतियोगिताविवक्षणे महानसीयवह्न्यभाववारणसम्भवेऽपि धूमत्वादिना धूमादेर्वह्निव्यापकत्वापत्तिः। घटाभावप्रतियोगिताया एव वह्निमन्निष्ठाया साध्यतावच्छेदकधूमत्वानवच्छिन्नत्वात् साध्यतावच्छेदकेतरानवच्छिन्नत्वस्य प्रतियोगितायां विवक्षणे तु सर्वत्र व्यापकत्वलक्षणस्यासम्भवापत्तेः। वह्निमान् धूमाद् वाच्यं ज्ञेयत्वादित्यादौ सर्वत्रैव घटाद्यभावादेर्लक्षणाघटकत्वात्, अतः साध्यतावच्छेदकतदितरोभयानवच्छिन्नत्वं प्रतियोगितायां विवक्षितम् इति ध्येयम्।

निरुक्तप्रकारान्तरविवक्षायां व्यापकताज्ञानस्य सुतरां विषयविरोधविरहमुपपादयति निर्वह्नीति=वह्न्यभाववद्वृत्तिर्धूम इत्याद्याकारकव्यभिचारज्ञाने इत्यर्थः। वह्नित्वान्येति वह्नित्वेतरधर्मानवच्छिन्नप्रतियोगितात्वेनैवेत्यर्थः। संसर्गतया भानसम्भवादिति। वह्नित्वान्यधर्मानवच्छिन्नप्रतियोगितासंसर्गकबुद्धावपि वह्नित्वतदितरोभयानवच्छिन्नप्रतियोगिताघटितव्यापकताज्ञानस्याप्रतिबन्धकत्वात् व्यापकताज्ञाने निरुक्तप्रतियोगि-

दीधितिः

प्रकारान्तरानुसरणे च सुतराम् । मणिमन्त्रादिन्यायेन च प्रति-

जागदीशी

भावः । सुतरामिति । विषयविरोधविरहादिति पूर्वेणान्वयः । धूम-वन्निष्ठाभावप्रतियोगितात्वावच्छेदेन वह्नित्वावच्छेद्यत्वाभावबुद्धौ निरुक्तप्रतियोगिताधर्मिकवह्नित्वाद्यवच्छेद्यत्वग्रहस्यैव विरोधित्वा-दिति भावः । केचित्तु प्रकारान्तरेति, हेतुमन्निष्ठाभावप्रतियोगि-तावच्छेदकतापर्य्याप्त्यधिकरणघटितान्यत्वाद्यनुसरण इत्यर्थः ।

नारायणी

तायाःप्रकारत्वेनैव भानादित्याशयः। प्रथमकल्पानुसारेण व्यापकताज्ञानस्य व्यभिचारज्ञानाप्रतिबन्धकत्वाभावं व्यवस्थापयति । धूमवन्निष्ठेति । तथा च धूमवन्निष्ठाभावप्रतियोगितात्वावच्छेदेन वह्नित्वावच्छिन्नत्वाभावनि-श्चयस्य व्यापकताग्रहात्मकस्य धूमवन्निष्ठाभावप्रतियोगितात्वावच्छेदेन वह्नित्वावच्छेद्यत्वग्रहं प्रत्येव प्रतिबन्धकतया वह्नित्वावच्छिन्नप्रतियोगि-ताकाभाववद्वृत्तित्वरूपव्यभिचारग्रहं प्रति तादृशव्यापकताज्ञानस्य भिन्न-प्रकारकत्वेनाप्रतिबन्धकत्वादिति तु परमार्थः ।

प्रकारान्तरानुसरणे इत्यस्य व्याख्यान्तरमुपन्यस्यति केचित्त्विति आहुरिति परेणान्वयः। हेतुमन्निष्ठेति धूमादिमन्निष्ठाभावप्रतियोगिताव-च्छेदकतापर्याप्त्यधिकरणघटितं यत्तदन्यत्वं साध्यतावच्छेदके विशेषणं देयमित्यर्थः । तथाच महानसीयवह्न्यभावमादाय न धूमादेरव्याप्यत्वा-पत्तिः, तादृशाभावप्रतियोगितावच्छेदकतापर्याप्त्यधिकरणघटितोभयभि-न्नत्वस्य वह्नित्वरूपसाध्यतावच्छेदके सत्त्वात् विषयविरोधमपि स्पष्टयति

जागदीशी

सुतरामिति, निर्वह्निवृत्तिर्धूम इत्यादिप्रतीतौ वह्नित्वान्यधर्मानवच्छिन्नप्रतियोगितात्वेनैव संसर्गतया वह्नित्वादौ अवच्छेदकतापर्य्याप्तेरप्रवेशादित्यभिप्राय इत्याहुः । तच्चिन्त्यम् ।

नारायणी

निर्वह्नीति वह्न्यभाववद्वृत्तिर्धूम इत्यादिव्यभिचारनिश्चये इत्यर्थः, वह्नित्वान्येति महानसीयवह्न्यभाववद्वृत्तिर्धूम इत्याकारकज्ञानस्य व्यभिचारनिश्चयतावारणाय वह्नित्वभिन्नधर्मानवच्छिन्नप्रतियोगितासम्बन्धेन वह्निविशिष्टाभाववद्वृत्तित्वज्ञानमेव व्यभिचारज्ञानमित्याशयेन तादृशप्रतियोगितायाः संसर्गत्वाभिधानम्, वह्नित्वादाविति आदिना साध्यतावच्छेदकान्तरपरिग्रहः, अवच्छेदकतेति वह्नित्वपर्याप्तावच्छेदकताकप्रतियोगिताकाभाववद्वृत्तित्वस्य व्यभिचारत्वेनाप्रवेशात् इत्यर्थः । इत्यभिप्राय इति । तथाच हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकताघटितान्यत्वनिश्चयस्य प्रतियोगितावच्छेदकतापर्याप्त्यधिकरणवह्नित्वावगाहिव्यभिचारज्ञानं प्रति कथञ्चित्प्रतिबन्धकत्वसम्भवेऽपि वह्नित्वान्यधर्मानवच्छिन्नप्रतियोगितासंसर्गावगाहिव्यभिचारग्रहं प्रति तादृशव्यापकताग्रहस्याप्रतिबन्धकतया व्यभिचारविरोधिज्ञानत्वेन यथोक्तव्यापकताग्रहस्य धर्त्तुमशक्यत्वात्। तच्चिन्त्यमिति हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकतापर्याप्त्यधिकरणघटितत्वस्य महानसीयत्ववह्नित्वोभये वर्त्तमानत्वे प्रत्येकं वह्नित्वादावपि तादृशपर्याप्त्यधिकरणघटितत्वानपायाद् धूमादिमन्निष्ठाभावप्रतियोगितावच्छेदकतापर्याप्त्यधिकरणघटितान्यत्वस्य वह्नित्वादौ दुर्लभत्वमापद्येतेत्येवं चिन्तावीजमूहनीयम् ।

अथवा वह्नित्वान्यधर्मानवच्छिन्नप्रतियोगितासम्बन्धेन वह्निविशिष्टाभावतद्वृत्तित्वस्य व्यभिचारत्वे महानसीयवह्निविषयितासम्बन्धेन साध्यतायां तज्ज्ञानत्वहेतोर्विषयितया वह्न्यभाववद्वृत्तित्ववत्त्वेन व्यभि-

### जागदीशी

मणिमन्त्रादिन्यायः—स्वातन्त्र्यम् । मानाभावादिति । इदमुपलक्षणम् । निरुक्तव्यभिचारधीविरोधिधीविषयत्वस्य साध्याभाववदवृत्तित्वविशिष्टहेतुकालीनत्वादौ अतिप्रसक्तत्वात् ।

### नारायणी

चारित्वापत्तेर्वारणाय वह्नित्वपर्याप्तप्रतियोगितावच्छेदकताकप्रतियोगिताकाभाववद्वृत्तित्वस्य व्यभिचारत्वस्यावश्यकतया व्यभिचारज्ञानस्यावच्छेदकतापर्याप्त्यविषयकत्वाभिधानमसङ्गतं स्यादित्यपि वा चिन्ताबीजमूहनीयमिति ध्येयम् ।

ननु व्यापकताग्रहस्य यथाकथञ्चिन्मणिमन्त्रादिन्यायेन व्यभिचारग्रहं प्रति प्रतिबन्धकत्वं कल्पनीयम्, अन्यथा वह्न्यभाववद्वृत्तिर्धूम इत्याकारकज्ञानकाले व्यापकताग्रहोत्पत्त्या वह्न्याद्यनुमित्यापत्तिवारणं दुःशक्यं स्यादित्याशङ्क्य तादृशप्रतिबन्धकताखण्डकस्य मणिमन्त्रादिन्यायेनेत्यादिदीधितिग्रन्थस्य व्याख्यानमाह **मणिमन्त्रादीति**। स्वातन्त्र्यमिति ग्राह्याभावानवगाहित्वमित्यर्थः। तथाच तत्प्रकारकबुद्धौ तदभावावगाहित्वेन प्रतिबन्धकताया एव सर्ववादिसिद्धतया ग्राह्याभावानवगाहिव्यापकताज्ञानस्य व्यभिचारधीप्रतिबन्धकत्वं निर्युक्तिकमित्याशयः। व्यभिचारज्ञानं प्रति व्यापकताग्रहस्याप्रतिबन्धकत्वे स्वयं युक्तिमप्याह **इदमुपलक्षणमिति**। मणिमन्त्रादिन्यायेन प्रतिबन्धकतायाः निर्युक्तिकत्ववद् व्यापकताग्रहस्य व्यभिचारज्ञानप्रतिबन्धकत्वाभिधानमत्यन्तमसङ्गतमित्याह **निरुक्तेति** वह्न्याद्यभाववद्वृत्तिर्धूम इत्याकारकव्यभिचारज्ञाने प्रतिबन्धकनिश्चयविषयत्वस्येत्यर्थः। **साध्याभावेति** वह्न्याद्यभाववदवृत्तित्वविशिष्टधूमादिरूपहेतुकालीनत्वादावित्यर्थः। **अतिप्रसक्तत्वादिति** तथा च वह्न्यभाववद्वृत्तिर्धूमः इत्याकारकव्यभिचारज्ञानप्रतिबन्धकज्ञानविषयता यथा वह्न्यभाववदवृत्तिर्धूमः इत्याकारकज्ञानीयधूमविषयता

जागदीशी

यत्प्रकारकनिश्चयत्वेन व्यभिचारधीविरोधित्वं तत्प्रकारकपक्षधर्म-

नारायणी

भवति तथा वह्न्यभाववदवृत्तित्वविशिष्टधूमकालीनो घट इत्याकारक-ज्ञानीयधूमादिविषयताया अपि तादृशव्यभिचारज्ञानप्रतिबन्धकज्ञाननिरूपिततया वह्न्यभाववदवृत्तित्वविशिष्टधूमकालीनेन्धनवान् पर्वतः इत्याकारकज्ञानादपि पर्वतो वह्निमानित्यनुमित्यापत्तिः स्यादिति भावः।

यत्प्रकारकेति = यन्निष्ठप्रकारताकनिश्चयत्वव्यापकं निरुक्तव्यभिचार-ज्ञानप्रतिबन्धकत्वं तन्निष्ठप्रकारताकपक्षविशेष्यताकनिश्चयत्वेनैव प्रकृत-साध्यानुमितिजनकत्वं वाच्यमित्यर्थः। निश्चयत्वव्यापकत्वनिवेशात् केवलधूमप्रकारकनिश्चयोत्तरं नानुमित्यापत्तिः, धूमविषयताया तादृश-धूमविषयताकनिश्चयत्वे वा व्यभिचारधीप्रतिबन्धकतानिरूपितस्वरूप-सम्बन्धरूपावच्छेदकताया भ्रमप्रमासाधारणप्रतिबन्धकत्वानुरोधेन सत्त्वेऽपि तादृशधूमप्रकारकनिश्चयत्वव्यापकतायाः व्यभिचारधीप्रतिब-न्धकतायामसत्त्वाद् धूम इत्याकारकज्ञानेऽपि धूमप्रकारताकनिश्चयत्वस्य वर्त्तमानत्वात्। अतो य प्रकारकत्वेनेत्यत्र तृतीयाया अनतिरिक्तवृत्तित्वरू-पावच्छेदकत्वं विवक्षितमिति ध्येयम्। नन्वेवमपि वह्न्यभाववदवृत्तिधू-मकालीनत्वज्ञानवारणं दुःशक्यमिति चेन्न, कालीनत्वांशे प्रकारीभवतो धूमादेः प्रकारताया व्यभिचारधीप्रतिबन्धकतानवच्छेदकत्वात् तादृश-ज्ञानीयधूमप्रकारतायाः यत्प्रकारतापदेन धर्त्तुमशक्यत्वाद्। भवतिच

शक्तिः

यत्प्रकारकनिश्चयत्वेनेति—अत्राभावांशे वह्नित्वेन गुञ्जाद्यवगाहिनो वह्न्य-भाववदवृत्तिधूमवान् पर्वत इत्याकारकज्ञानस्य जनकत्वानुरोधेन व्यभिचारधी-प्रतिबन्धकतावच्छेदकीभूतप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यताशा-लिनिश्चयत्वेनैव हेतुत्वं वाच्यं, तथा सति व्याप्त्यंशे निर्द्धर्मितावच्छेदककसाध्या-भाववदवृत्तिमान् पर्वत इति ज्ञानस्य व्यभिचारज्ञानाप्रतिबन्धकतया तस्मादनु-

जागदीशी

तानिश्चयत्वेनैव हेतुत्वं वाच्यम्, न चेदं व्यापकसामानाधिकरण्येऽप्यस्ति, व्यभिचारबुद्धिं प्रति व्यापकतानिश्चयत्वेन

नारायणी

वह्न्यभाववदवृत्तिधूमवान् पर्वत इत्याकारकज्ञानीयधूमप्रकारताया वह्न्यभाववदवृत्तिर्धूम इत्याकारकज्ञानप्रतिबन्धकतावच्छेदकतया तादृशज्ञानतोऽनुमितिनिर्वाहः। नच वह्न्यभाववदवृत्तिर्धूम इत्याकारकज्ञानप्रतिबन्धकतावच्छेदिका वह्न्यभाववदवृत्तिर्धूम इत्याकारकज्ञानीयधूमनिष्ठविशेष्यतैव, नतु पर्वतनिष्ठविशेष्यतानिरूपितधूमप्रकारता तथेति परामर्शीयधूमप्रकारताया यत्प्रकारतापदेनोपादातुमशक्यत्वात्कथं वह्न्यभाववदवृत्तिधूमवान् पर्वतः इति ज्ञानसंग्रह इति वाच्यम्, स्वमतेऽन्तरा भासमानविषयतयोरभिन्नत्वात्पर्वतनिष्ठविशेष्यतानिरूपितधूमप्रकारताया एव वह्न्यभाववदवृत्तित्वप्रकारतानिरूपितविशेष्यतात्मकतया तादृशप्रकारताया अपि व्यभिचारधीप्रतिबन्धकतावच्छेदकत्वानपायादिति दिक्।

नचेदमिति यत्प्रकारकनिश्चयत्वेन व्यभिचारग्रहप्रतिबन्धकत्वं तत्प्रकारताश्रयत्वं नेत्यर्थः। व्यापकेति धूमव्यापकवह्निसामानाधिकरण्ये। कुतस्तादृशप्रकारताश्रयत्वं नास्तीत्याशङ्क्याह व्यभिचारबुद्धिमिति साध्याभाववद्वृत्तिर्हेतुरित्याकारकबुद्धिं प्रतीत्यर्थः, व्यापकतेति हेतुव्यापकं साध्यं हेतुमन्निष्ठाभावप्रतियोगितानवच्छेदकसाध्यतावच्छेदकवत्साध्यं वेत्याकारकनिश्चयस्येत्यर्थः। प्रतिबन्धकत्वस्येति यथाकथञ्चित् तद्वत्ताबुद्धौ तदभावज्ञानस्य प्रतिबन्धकत्वानुरो-

शक्ति:

मित्यनुपपत्तिः कथं वारणीया इति तु नाशङ्कनीयम्। व्यभिचारबुद्धित्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकीभूतप्रकारताविशिष्टविशेष्यत्वाभिन्न —

जागदीशी

विरोधित्वस्य आवश्यकतया व्यापकसामानाधिकरण्यनिश्चय-त्वेनापि तथात्वे मानाभावादित्यपि द्रष्टव्यम् । वस्तुतः

नारायणी

धेन हेतुर्यदि साध्याभाववति वर्त्तते तदा हेतुमति साध्याभावस्यावश्यं वर्त्तमानतया तत्प्रतियोगितावच्छेदकतायाः साध्यतावच्छेदके सत्त्वात् तादृशप्रतियोगितावच्छेदकत्वग्रहं प्रति साध्यतावच्छेदके हेतुमन्निष्ठा-भावप्रतियोगितानवच्छेदकत्वग्रहस्य प्रतिबन्धकत्वमावश्यकमिति भावः।

व्यापकेति हेतुव्यापकसाध्यसामानाधिकरण्यनिश्चयत्वेनापीत्यर्थः।

तथात्वे = व्यभिचारधीप्रतिबन्धकत्वे । मानाभावादिति तादृशसामा-नाधिकरण्यविषयतायाः व्यभिचारधीप्रतिबन्धकतानवच्छेदकतया यत्प्र-कारकनिश्चयत्वेनेत्यत्र यत्पदेनसामानाधिकरण्यस्योपादानासम्भवात्,

शक्तिः

प्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यताशालिनिश्चयत्वेन जनकत्वस्य वक्तव्यत्वात् । तथा सति निर्द्धर्मितावच्छेदककसाध्याभाववदवृत्तिमान् पर्वत इत्याकारकज्ञानस्यापि भवति संग्रहः । वै० स्वावच्छेदकीभूतधर्मावच्छिन्नप्रकार-तानिरूपितत्व, स्वनिरूपितविशेष्यतावच्छेदकेतरधर्मानवच्छिन्नत्वोभयसम्बन्धेनेति अस्मद्गुरुचरणाः श्रीभट्टाचार्य्यपादाः ।

केचित्तु मुख्यविशेष्यतानिरूपितप्रकारतानिष्ठव्यभिचारधीप्रतिबन्धकताव-च्छेदकतापर्य्याप्त्यधिकरणरूपवत्प्रकारतानिरूपितपक्षतावच्छेकावच्छिन्नविशेष्य-ताशालिनिश्चयत्वेन हेतुत्वाभ्युपगमे साध्याभाववदवृत्तिमान् पर्वत इत्याकारक-ज्ञानस्यापि संग्रहो निराबाध इति वदन्ति ।

इति श्रीन्यायाचार्य्यकेशवद्विवेदिविरचिता शक्तिटीका समाप्ता ।

इति श्रीगुरुचरणकमलेभ्यो नमः ।

**जागदीशी**

साध्याभाववद्वृत्तित्वात्यन्ताभावबोधस्य अनुमितिहेतुत्वं न तु साध्याभाववद्वृत्तिभिन्नत्वज्ञानस्य तथात्वम् । साध्याभाववद्वृत्तित्ववतां धर्मिणां कारणतावच्छेदकेऽनुप्रवेशे गौरवात् । अत एव साध्यवदन्यावृत्तित्वस्यापि ज्ञानं न हेतुः। साध्यवतां धर्मिणां प्रवेशेन

**नारायणी**

तत्प्रकारकपक्षधर्मताज्ञानत्वेनानुमितिजनकतायाः भवन्मतसिद्धायाः वक्तुमशक्यत्वादिति तु तत्त्वम्, व्यभिचारधीप्रतिबन्धकतावच्छेदकविषयताघटितधर्मेण तत्प्रतिबन्धकतानवच्छेदकविषयत्वाघटितधर्मेणानुमितिजनकत्वाभिधाने नैष दोषः। अतो दोषान्तरमाह वस्तुत इति **साध्येति** साध्याभावाधिकरणनिरूपितवृत्तित्वावच्छिन्नात्यन्ताभावनिश्चयस्येत्यर्थः। अनुमितिहेतुत्वं अनुमितिजनकत्वम्। **नत्विति** नतु साध्याभावाधिकरणनिरूपितवृत्तित्वावच्छिन्नावच्छेदकताकप्रतियोगिताकभिन्नत्वज्ञानस्येत्यर्थः। तथात्वं=अनुमितिजनकत्वम्। नत्विति पूर्वेण सम्बन्धः। निषेधे हेतुमाह **साध्येति** साध्याभावाधिकरणनिरूपितवृत्तित्ववतामनन्तानां धर्मिणामित्यर्थः। **कारणतेति** अनुमितिकारणतावच्छेदकत्वप्रवेशेन तादृशधर्मिणो विषयविधया तादृशधर्मिविषयत्वादीनां वा अनुमितिजनकतावच्छेदकताया अवश्यमनुप्रवेशनीयतया महागौरवादित्यर्थः। **अतएवेति** धर्मिणो धर्मिविषयताया वा अनुमितिकारणतावच्छेदकत्वे गौरवादेवेत्यर्थः। **साध्यवदिति** साध्यतावच्छेदकसम्बन्धावच्छिन्नभेदत्वनिरूपितप्रतियोगिताकान्योन्याभावाधिकरणनिरूपितवृत्तित्वाभावस्येत्यर्थः। ज्ञानमपि=निश्चयोऽपि न हेतुः=नानुमितिजनकः। कुत इत्याकाङ्क्षायामाह **साध्यवतामिति** साध्याश्रयाणामित्यर्थः। **धर्मिणामिति** प्रायशोऽनन्तानामित्यादिः, प्रवेशेन=विषय-

जागदीशी

साध्याभाववद्वृत्तित्वाभावापेक्षया गुरुत्वात् इत्यनुगम एव नोचित इति ध्येयम् । ननु यत्र साध्याभावाद्यनुपस्थितावपि व्यापकतागोचरज्ञानादेवानुमितिः तत्र व्यभिचारात् साध्याभाववदवृत्तित्वज्ञानस्य हेतुत्वं सम्भवत्येव नेत्यत आह व्यापकतेति ।

नारायणी

विधया कारणतावच्छेदकतया तत्तद्विषयताया वा कारणतावच्छेदकतया प्रवेशेनेत्यर्थः साध्येति साध्याभावाधिकरणनिरूपितवृत्तित्वाभावापेक्षये-त्यर्थः। गुरुत्वादिति साध्याभाववदवृत्तित्वज्ञाने साध्यधर्मिणामनुमिति-कारणतावच्छेदककोटावप्रवेशात् इत्याशयः। उपसंहरति अनुगम एवेति तथाच केवलसाध्याभावाधिकरणवृत्तित्वाभावनिश्चयस्यैकस्य लाघवा-दनुमितिजनकत्वस्यावश्यकतया नानाविधव्याप्तिज्ञानस्य व्यभिचारधीवि-रोधित्वेनानुगमो निरर्थक इति कुतो व्यभिचारधीविरोधित्वेन व्यापकता-ज्ञानस्यानुमितिहेतुत्वं सम्भवतीति तु परमार्थः।

नन्विति यत्र=व्यापकताज्ञानादेवेत्यादिदीधितिमवतारयति याद्दशस्थले । साध्याभावेति साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्य-तावच्छेदकावच्छिन्नप्रतियोगितासम्बन्धेन साध्यविशिष्टाभावस्यानुप-स्थितौ सत्यामित्यर्थः। व्यापकतेति हेतुमन्निष्ठाभावप्रतियोगितानवच्छे-दकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यनिश्चयादेवेत्यर्थः एवका-रेण साध्याभाववदवृत्तित्वज्ञानस्य विरहः। सूचितः अनुमितिरिति प्रकृत-साध्याविधेयताकेत्यादिः। तत्र=ताद्दशस्थले=व्यभिचारादिति। भवन्म-तसिद्धकारणस्याभावात् कारणाभाववद्वृत्तिकार्यरूपव्यभिचारज्ञानस्या-वश्यकत्वात् इत्यर्थः। साध्याभावेति साध्यविशिष्टाभावाधिकरणनिरू-पितवृत्तित्वाभावनिश्चयस्येत्यर्थः। हेतुत्वं=जनकत्वम्। सम्भवत्येव नेति

जागदीशी

क्लृप्तकारणं विना कार्य्योत्पत्त्यसम्भवात् एतादृशस्थल एव मानाभाव इति भावः। यत्तु ननु व्यापकसामानाधिकरण्यस्य गुरुत्वेऽपि लघो-र्व्यापकत्वधियः कारणतायां बाधकाभावात् केवलान्वयिखण्डनं

नारायणी

व्यभिचारज्ञानस्य जनकताग्रहप्रतिबन्धकत्वादित्याशयः। तथाच यादृश-स्थले यस्य पुंसः साध्याभाववदवृत्तित्वज्ञानं नास्ति किन्तु साध्ये हेतुव्याप-कताज्ञानमेव वर्त्तते तस्य पुंसस्तादृशस्थले साध्यानुमित्युत्पादेन व्यभि-चारात्साध्याभाववदवृत्तित्वज्ञानं नानुमितिहेतुः किन्तु व्यापकताज्ञान-मेव केवलान्वयिसाधारणमनुमितिजनकं वाच्यमिति शङ्कां निरसितुमाह दीधितिकारः, व्यापकताज्ञानादेवेत्यादीतिभावः। क्लृप्तेति लाघवानुरोधेन साध्याभाववदवृत्तित्वज्ञानस्यानुमितिजनकत्वं क्लृप्तमेवेति तादृशज्ञान-विरहदशायामनुमित्युत्पादो नानुभविकः इत्याशयेनाह तादृशस्थल एव मानाभाव इति, यादृशस्थले साध्याभाववदवृत्तित्वज्ञानं नास्ति किन्तु व्यापकताज्ञानमात्रं वर्त्तते तादृस्थलेऽनुमित्युत्पादो नानुभविकः, यद्यनु-मितिरुत्पद्यते तदा स्वव्यापकसाध्यकत्वेन हेतौ साध्याभाववदवृत्तित्व-मादायैवानुमितिः सम्भवति इति तु तत्वम्।

व्यापकताज्ञानादेवेत्यादेरवतरणान्तरमुपन्यस्यतां केषाञ्चिन्मतं दूष-यितुमुपन्यस्यति यत्तु इति। व्यापकेति स्वव्यापकसाध्यसामानाधिकर-ण्यस्येत्यर्थः। गुरुत्वेऽपि = साधनभेदेनानन्तत्वेऽपि। व्यापकत्वधियः = हेतुमन्निष्ठाभावप्रतियोगितानवच्छेदकं साध्यतावच्छेदकमित्याकारकनि-श्चयस्येत्यर्थः। अत्र तु सामानाधिकरण्यविषयतायाः कारणतावच्छेद-ककोटावप्रवेशेन लाघवमित्यवधेयम्। कारणतायां = अनुमितिजनकता-याम्। बाधकाभावादिति व्यापकतानिश्चयनिष्ठकारणतावच्छेदकविष-यताया अल्पतरपदार्थनिष्ठत्वादित्यभिमानः। केवलान्वयिखण्डनम् =

दीधितिः

बन्धकतायां मानाभावात्। व्यापकताज्ञानादेवानुमितिरिति च नानुभविकं न वा यौक्तिकम्, ज्ञानत्वत्वादिना ज्ञानत्वा-

जागदीशी

दुर्घटमित्याशङ्क्य व्यापकतेत्यादिग्रन्थावतारणम्। तत्तुच्छम्। व्यापकत्वस्य साधनभेदान्ननात्वेन तदपेक्षया साध्याभाववदवृत्तित्वे लाघवस्य प्रागेव दर्शितत्वेन सन्दर्भविरोधापत्तेः। व्यापकतावगाहिज्ञानस्य हेतुत्वे साधकाभावमुक्त्वा बाधकमप्याह न वा यौक्तिकमिति।

नारायणी

केवलान्वयिसाध्यकानुमितिनिराकरणम्। दुर्घटमिति घटो वाच्यत्ववान् ज्ञेयत्वादित्यादौ साध्याभाववदवृत्तित्वज्ञानस्य साध्याभावसिद्धयाऽसम्भवेऽपि ज्ञेयत्वविशिष्टाभावप्रतियोगितानवच्छेदकवाच्यत्वत्ववद् वाच्यत्वमित्याकारककेवलान्वयिधर्मिकहेतुव्यापकतानिश्चयस्य प्रमात्मकस्य वर्त्तमानतया ततो भवति वाच्यत्वसाध्यकानुमितिरिति कुतः केवलान्वयिखण्डनमिति भावः।

व्यापकतेत्यादिग्रन्थावतरणमिति इत्यादिरीत्या ग्रन्थस्यावतरणं यत्त्वभिहितमित्यर्थः। तत्तुच्छमिति निरुक्तग्रन्थावतरणं न युक्तमित्यर्थं। कुत इत्याकाङ्क्षायामाह व्यापकत्वस्येति हेतुव्यापकत्वस्येत्यर्थः। साधनभेदात् = तत्तद्धेतुभेदात्। नानात्वेन = अनन्ततया व्याख्यानेन। तदपेक्षया = साधनयभेदभिन्नव्यापकत्वापेक्षया। प्रागेव = पूर्वमेव दर्शितत्वेन = दीधितिकृता दर्शितत्वेन। सन्दर्भविरोधापत्तेरिति व्यापकत्वधियः कारणत्वकल्पने लाघवाभिधानस्य निर्युक्तिकतायाः पूर्वमेव दीधितिकृता दर्शिततया पुनः व्यापकत्वनिश्चयस्य कारणत्वाभिधानशङ्कायाः सर्वथा अनौचित्यमिति भावः।

दीधितिः

देर्व्यापकतावच्छेदकत्वग्रहे ज्ञानादिमानित्यनुमितेरयोगात् । अन्यथा जातित्वेनानुभवत्वव्यापकगुणत्वव्याप्यजातित्वादिना

जागदीशी

अयोगादिति । यद्रूपावच्छिन्ने व्यापकतावच्छेदकत्वधीः तद्रूपाव-

नारायणी

व्यापकतावगाहिनिश्चयस्यानुमितिहेतुत्वे साधकप्रमाणाभावमभिधाय तस्य तथात्वे बाधकं प्रदर्शयतां दीधितिकृतां नवा यौक्तिकमिति ग्रन्थं व्याचष्टे अयोगादितीति तथा च केवलान्वयिनो विषयतया ज्ञानस्य साध्यतास्थले प्रमेयत्वादिरूपहेतुमन्निष्ठाभावप्रतियोगितानवच्छेदकज्ञानत्वावच्छिन्नसामानाधिकरण्यनिश्चयात्मकव्याप्तिनिश्चयस्य ज्ञानत्वत्वावच्छेदेन तादृशप्रतियोगितानवच्छेदकत्वावगाहित्वमवश्यं वक्तव्यम्, अन्यथा स्वरूपतो ज्ञानत्वादौ तादृशप्रतियोगितानवच्छेदकत्वावगाहिज्ञानस्यानुमितिजनकत्वाभ्युपगमे तादृशज्ञाने प्रतियोगितानवच्छेदकत्वस्य निर्द्धर्मितावच्छेदककतया भानेन ज्ञानत्वत्वावच्छिन्नं प्रमेयत्वसमानाधिकरणाभावप्रतियोगितावच्छेदकमित्याकारकज्ञानकालेऽपि निर्द्धर्मितावच्छेदककतादृशग्रहोत्पत्तौ बाधकाभावात् तादृशसाध्यतावच्छेदकधर्मिकव्यभिचारज्ञानकालेऽपि यथोक्तव्याप्तिज्ञानादनुमित्यापत्तेर्दुर्वारता स्यात्, एवञ्च ज्ञानत्वत्वावच्छिन्ने हेतुमन्निष्ठाभावप्रतियोगितानवच्छेदकत्वावगाहिव्यापकतावच्छेदकत्वग्रहात् स्वरूपतो ज्ञानत्वविशिष्टस्य ज्ञानस्यानुमितिर्न स्यादिति भावः ।

ननु ज्ञानत्वत्वावच्छिन्ने तादृशव्यापकत्वग्रहात् स्वरूपतो ज्ञानत्ववि-शिष्टस्य ज्ञानस्यानुमित्युत्पादे को दोष इत्यत आह यद्रूपावच्छिन्नइति

जागदीशी

च्छिन्नप्रकारेणैव साध्यस्यानुमितेस्त्वयापि वाच्यत्वादित्याशयः। अत एवाह अन्यथेति। यद्रूपावच्छिन्ने व्यापकतावच्छेदकत्वं गृह्यते तद्रूपानवच्छिन्नप्रकारेणापि साध्यस्यानुमितौ भाने इत्यर्थः। ननु तन्मात्रवृत्तिधर्मावच्छिन्नविशेष्यकव्यापकतावच्छेदकत्वग्रहस्य स्वरूपतस्तद्रूपावच्छिन्नविधेयकानुमितिहेतुत्वात् जातित्वेन व्याप-

नारायणी

यादृशधर्मावच्छिन्ने इत्यर्थः। व्यापकतेति हेत्वधिकरणवृत्त्यभावप्रतियोगितानवच्छेदकत्वनिश्चय इत्यर्थः। तद्रूपेति तादृशधर्मावच्छिन्नसाध्यतावच्छेदकप्रकारेणैवेत्यर्थः। साध्यस्य = ज्ञानादेः। त्वयापि = व्यापकताग्रहस्यानुमितिहेतुत्ववादिनाऽपि। यद्रूपेण व्यापकतावच्छेदकत्वज्ञानं तद्रूपविशिष्टावच्छिन्नविधेयताकानुमितिरेव फलमित्यनभ्युपगमे दोषमभिहितवतां दीधितिकृतामन्यथेति ग्रन्थं व्याचष्टे यद्रूपावच्छिन्नेति। व्यापकतेति। हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकत्वं गृह्यते—ज्ञानविषयीभूतं, तद्रूपेति। तद्धर्मावच्छिन्नविधेयतावच्छेदकताकसाध्यानुमितावित्यर्थः। भाने = विषयत्वे, तथाच ज्ञानवान् आत्मत्वादित्यादौ यदा जातित्वेन हेतुमन्निष्ठाभावप्रतियोगितानवच्छेदकत्वज्ञानं तदाऽपि स्वरूपतो ज्ञानत्वावच्छिन्नविधेयताकानुमित्यापत्तिः स्यात्, यदि यद्रूपेण व्यापकतावच्छेदकत्वज्ञानं तद्रूपावच्छिन्नप्रकारेणानुमितिरिति नियमो न स्यादिति भावः। अनुभवस्त्वेत्यादिदीधितिमवतारयति नन्विति। तन्मात्रेति साध्यतावच्छेदकमात्रवृत्तिधर्मावच्छिन्नविशेष्यताकहेतुमन्निष्ठाभावप्रतियोगितानवच्छेदकत्वनिश्चयस्येत्यर्थः। स्वरूपत इति किञ्चिद्धर्मानवच्छिन्नावच्छेदकताकविधेयताकानुमितिजनकत्वे इत्यर्थः। जातित्वेनेति जातित्वावच्छिन्नं

जागदीशी

कतानवच्छेदकत्वग्रहात् न ज्ञानवान् इत्यनुमितिर्भविता, जातित्वस्य ज्ञानत्वमात्रावृत्तित्वात् किन्तु ज्ञानत्वं व्यापकतावच्छेदकम् इत्या-

नारायणी

हेतुमन्निष्ठाभावप्रतियोगितानवच्छेदकमित्याकारकनिश्चयादित्यर्थः। ज्ञानवानिति किञ्चिद्धर्मानवच्छिन्नज्ञानत्वनिष्ठावच्छेदकताकविधेयताकज्ञानवानित्याकारकानुमितिर्न भवितेत्यर्थः। कुत इत्याकाङ्क्षायामाह जातित्वस्येति। ज्ञानत्वनिष्ठावच्छेदकतावच्छेदकजातित्वस्येत्यर्थः। ज्ञानत्वमात्रावृत्तित्वादिति, जातित्वस्य ज्ञानत्वेतरघटत्वादौ सत्त्वादित्यर्थः। नच प्रमेयवतः साध्यतास्थले प्रमेयमात्रवृत्तित्वं प्रमेयेतराप्रसिद्ध्याऽप्रसिद्धमिति वाच्यम्, तद्विषयित्वाव्यापकविषयिताकावृत्तित्वस्य तन्मात्रवृत्तित्वस्वरूपत्वाभ्युपगमात्, प्रमेयविषयित्वाव्यापकविषयिताकघटवृत्तिघटत्वादिधर्मानवच्छिन्नहेतुमन्निष्ठाभावप्रतियोगितानवच्छेदकत्वप्रकारकप्रमेयरूपसाध्यतावच्छेदकविशेष्यकज्ञानोत्पादसम्भवादिति ध्येयम्।

स्वरूपत इति निरवच्छिन्नज्ञानत्वनिष्ठविधेयतावच्छेदकताकज्ञानवानित्याकारकानुमितिजनकत्वात् इत्यर्थः। जातित्वेनेत्यादि। जातित्वविशिष्टं ज्ञानत्वं हेतुमन्निष्ठाभावप्रतियोगितानवच्छेदकमित्याकारकग्रहादित्यर्थः। न ज्ञानवानिति न ज्ञानत्वनिष्ठनिरवच्छिन्नावच्छेदकताकज्ञाननिष्ठ विधेयताकानुमित्यापत्तिर्भवितेत्यर्थः। कुत इत्याकाङ्क्षायामाह जातित्वस्येति। ज्ञानत्वेति ज्ञानत्वेतरघटत्ववृत्तित्वादित्यर्थः।

ननु कीदृशज्ञानात् स्वरूपतो ज्ञानवानित्यनुमितिरित्यत आह किन्त्विति। ज्ञानत्वमिति ज्ञानत्वं हेतुमन्निष्ठाभावप्रतियोगितानवच्छेदकमित्याकारकनिश्चयादेवेत्यर्थः। तादृशज्ञाने ज्ञानत्वत्वस्यैव ज्ञानत्वमात्रवृ-

दीधितिः

वा तथात्वग्रहेऽपि तत्प्रसङ्गात् । एतेन केवलान्वयिसाध्यकत्वज्ञानमेवाऽनुमितिहेतुरित्यपि परास्तम् । सर्वजनानुभवसिद्धा-

जागदीशी

कारकग्रहादेव इत्यत आह अनुभवत्वेति । अनुभवत्वव्यापकजातित्वं सत्तादौ गुणत्वव्याप्यजातित्वञ्च रूपत्वादौ अतिप्रसक्तम् अतो जातित्वस्य ज्ञानत्वमात्रवृत्तित्वरक्षार्थं विशेषणद्वयम् । तथा-

नारायणी

त्तेर्भानादित्याशयः। तन्मात्रवृत्तित्वनिवेशेऽपि न निस्तार इत्याह अनुभवत्वेति। अनुभवत्वव्यापकीभूता गुणत्वव्याप्यीभूता च या जातिस्तादृशजातित्वावच्छिन्नं ज्ञानत्वं हेतुमन्निष्ठाभावप्रतियोगितानवच्छेदकमित्याकारकज्ञानादपि स्वरूपतो ज्ञानवानित्यनुमित्यापत्तिः स्यात्, तादृशानुभवत्वव्यापकगुणत्वव्याप्यजातित्वस्य ज्ञानत्वमात्रवृत्तित्वात् इति हृदयम्। गुणत्वव्याप्यत्वपर्यन्तानुपादानेऽनुभवत्वव्यापकजातित्वस्य सत्तायां सत्त्वात् तादृशंजातित्वस्य ज्ञानत्वमात्रवृत्तित्वं दुर्लभं स्यात्, एवं गुणत्वव्याप्यजातित्वमात्रविवक्षणेऽपि तादृशजातित्वस्य रूपत्वादिवृत्तितया ज्ञानत्वमात्रवृत्तित्वं न सम्भवतीत्यतो जातावनुभवत्वव्यापकत्वं गुणत्वव्याप्यत्वं च विशेषणं दत्तम्। तथासति तादृशजातित्वस्य ज्ञानत्वमात्रवृत्तित्वं निराबाधं स्यादित्याह अनुभवत्वेति। अनुभवत्ववन्निष्ठभेदप्रतियोगितानवच्छेदकजातित्वस्येत्यर्थः। सत्तादाविति। आदिना गुणत्वपरिग्रहः। गुणत्वेति गुणत्वाभाववदवृत्तिजातित्वं चेत्यर्थः। रूपत्वादाविति। आदिना रसत्वादिपरिग्रहः। अतिप्रसक्तमिति ज्ञानत्वमात्रवृत्तित्वानुपपत्तिरित्यर्थः। अतः= निरुक्तातिप्रसक्तादित्यर्थः। ज्ञानत्वेति ज्ञानत्वेतरावृत्तित्वे सति ज्ञानत्ववृत्तित्वरक्षार्थमित्यर्थः। विशेषणद्वयम्=अनु-

जागदीशी

त्वग्रहे व्यापकतावच्छेदकत्वग्रहे। तत्प्रसङ्गादिति ज्ञानवान् इत्यनुमितिप्रसङ्गादित्यर्थः। यद्यपि स्वरूपतस्तद्धर्मविशेष्यकं व्यापकतावच्छेदकत्वज्ञानं स्वरूपतस्तद्धर्मावच्छिन्नविधेयकानुमितौ कारणं,

नारायणी

भवत्वव्यापकत्वगुणत्वव्याप्यत्वविशेषणद्वयम्। व्यापकतेति हेतुमन्निष्ठाभावप्रतियोगितानवच्छेदकत्वग्रहे इत्यर्थः। ज्ञानवानिति ज्ञानत्वनिष्ठनिरवच्छिन्नावच्छेदकताकज्ञाननिष्ठविधेयताकज्ञानवानित्याकारकानुमित्यापत्तेरित्यर्थः।

ननु शुद्धज्ञानत्वविशेष्यकं यद् ज्ञानवृत्तिहेतुमन्निष्ठाभावप्रतियोगितानवच्छेदकत्वप्रकारकं ज्ञानं तदेव शुद्धज्ञानत्वेन ज्ञानवानित्याकारकज्ञाननिष्ठविधेयताकानुमितौ जनकं वक्तव्यं, ज्ञानत्वत्वविशिष्टज्ञानत्वावच्छिन्नविधेयताकानुमितौ तु ज्ञानत्वत्वावच्छिन्नं हेतुमन्निष्ठाभावप्रतियोगितानवच्छेदकमित्याकारकज्ञानत्वत्वावच्छिन्नविशेष्यताकं ज्ञानमेव कारणं वाच्यं, तथा सति जातित्वादिना ज्ञानत्वधर्मिकहेतुमन्निष्ठाभावप्रतियोगितानवच्छेदकत्वज्ञानान्न ज्ञानवानित्याकारकानुमित्यापत्तिः सम्भवतीत्याशयेन शङ्कते–यद्यपीति। स्वरूपतः=निरवच्छिन्नज्ञानत्वरूपधर्मविशेष्यकमित्यर्थः। व्यापकतेति हेतुमन्निष्ठाभावप्रतियोगितानवच्छेदकत्वज्ञानमित्यर्थः। तच्च ज्ञानवृत्तिहेतुमन्निष्ठाभावप्रतियोगितानवच्छेदकत्वप्रकारकं ज्ञानं नतु ज्ञानत्वं हेतुमन्निष्ठाभावप्रतियोगितानवच्छेदकत्वप्रकारकं ज्ञानं, तथा सति ज्ञानत्वजातेरुल्लिख्यमानतया ज्ञानत्वत्वस्य धर्मितावच्छेदकविधया भानेन स्वरूपतो ज्ञानत्वधर्मविशेष्यकत्वभङ्गप्रसङ्गापत्तिः स्यादिति ध्येयम्। स्वरूपतस्तद्धर्मेति। शुद्धनिरवच्छिन्नज्ञानत्वनिष्ठावच्छेदकताकज्ञाननिष्ठविधेयताकानुमितावित्यर्थः। कारणमिति। तथाच तादृशकारणबाधात् जातित्वादिना व्यापकताव-

जागदीशी

ज्ञानत्वत्वावच्छिन्नधर्मिकञ्च व्यापकतावच्छेदकत्वज्ञानं ज्ञानत्वत्व-विशिष्टज्ञानत्वावच्छिन्नविधेयताकानुमितौ हेतुरित्युक्तौ न दोषः। न च एवं ज्ञानत्वत्वेन व्यापकतानवच्छेदकत्वग्रहदशायामपि ज्ञान-

नारायणी

च्छेदकत्वज्ञानात् स्वरूपतो ज्ञानत्वविशिष्टस्य ज्ञानस्यानुमितेर्नोपत्तिरिति भावः। ज्ञानत्वत्वेति ज्ञानत्वत्वावच्छिन्नविशेष्यताकं चेत्यर्थः। व्यापकतेति हेतुमन्निष्ठाभावप्रतियोगितानवच्छेदकत्वज्ञानमित्यर्थः। ज्ञानत्वत्वावशि-ष्टेति ज्ञानत्वत्वावच्छिन्नावच्छेदकतानिरूपितज्ञाननिष्ठविधेयताकानुमि-तावित्यर्थः। इत्युक्तौ = इत्यादिरीत्या कार्यकारणभावाभ्युपगमे। न दोषः = न दीधितिकारोक्तदोषः। ननु निरुक्तरीत्या कार्यकारणभावाभ्युपगमे यादृ-शस्थले ज्ञानत्वत्वावच्छिन्नहेतुमन्निष्ठाभावप्रतियोगितावच्छेदकमित्या-कारकग्रहो वर्त्तते तदानीमपि स्वरूपतो ज्ञानत्वविशिष्टज्ञानवानित्याकार-कानुमित्यापत्तिः, तादृशानुमितिकारणस्य स्वरूपतो ज्ञानत्वधर्मिकहेतु-मन्निष्ठाभावप्रतियोगितानवच्छेदकत्वज्ञानस्य सत्त्वे बाधकाभावान्नि-रुक्तज्ञानस्य निर्द्धर्मितावच्छेदककतया ग्राह्याभावावगाहित्वाभावश्चयाप्रति-बध्यत्वाज्ज्ञानत्वावच्छिन्नधर्मिकहेतुमन्निष्ठाभावप्रतियोगितावच्छेदकत्व-ग्रहस्यज्ञानत्वत्वावच्छिन्नधर्मिक - हेतुमन्निष्ठाभावप्रतियोगितानवच्छेदक-त्वग्रहं प्रत्येव प्रतिबन्धकतया स्वरूपतो ज्ञानत्वावच्छिन्न-विधेयताकानुमितिकारणग्रहाप्रतिबन्धकत्वादिति तटस्थ आशङ्कते नचैवमिति। एवं निरुक्तरीत्या कार्यकारणभावद्वयकल्पने। वाच्यमिति परेणान्वयः। ज्ञानत्वत्वेनेत्यादि ज्ञानत्वत्वावच्छिन्नविशेष्यताकहेतु-मन्निष्ठाभावप्रतियोगितावच्छेदकत्वग्रहदशायामित्यर्थः। ज्ञानवानित निरवच्छिन्नज्ञानत्वनिष्ठावच्छेदकताकविधेयताकानुमितिप्रसङ्ग इत्यर्थः।

नन्वेवं ज्ञानवानित्यनुमितिकारणस्य स्वरूपतो ज्ञानत्वनिष्ठव्याप-

आमोदी

वान् इत्यनुमितिप्रसङ्गः स्वरूपतो ज्ञानत्वधर्मिकव्यापकतावच्छेदकत्वग्रहस्य तदानीमपि सम्भवादिति वाच्यम् । त्वन्मते निर्वह्निवृत्ति-

नारायणी

कतावच्छेदकत्वग्रहस्यासत्त्वात् कुतस्तदनुमितिरित्यत आह स्वरूपत इति निरवच्छिन्नज्ञानत्वनिष्ठविशेष्यताकहेतुमन्निष्ठाभावप्रतियोगितानवच्छेदकत्वग्रहस्येत्यर्थः। तदानीमपि = ज्ञानत्वत्वावच्छिन्नं हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकमित्याकारकग्रहकालेऽपि । सम्भवादिति तादृशप्रतियोगितावच्छेदकत्वग्रहस्य ज्ञानत्वत्वावच्छिन्नविशेष्यकहेतुमन्निष्ठाभावप्रतियोगितानवच्छेदकत्वग्रहं प्रत्येव प्रतिबन्धकत्वात् इत्याशयः। स्वरूपतो ज्ञानत्वधर्मिकतादृशप्रतियोगितावच्छेदकत्वग्रहं प्रति तस्याप्रतिबन्धकतया तादृशप्रतियोगितावच्छेदकत्वग्रहकालेऽपि स्वरूपतो ज्ञानत्वधर्मिकव्यापकतावच्छेदकत्वग्रहसत्त्वे बाधकाभावादिति हृदयम् ।

साध्याभाववदवृत्तित्वज्ञानस्य हेत्वविषयकस्यानुमितिहेतुत्ववादिनां मते वह्न्यभाववद्वृत्तिर्धूमः इत्याकारकव्यभिचारनिश्चयकालेऽपि वह्न्यभाववदवृत्तिमान् पर्वत इत्याकारकनिश्चयोत्पत्तौ न किञ्चिद् बाधकम्, धूमत्वावच्छिन्नधर्मिकव्यभिचारनिश्चयस्यैव धूमत्वावच्छिन्नधर्मिकवह्न्यभाववदवृत्तित्वग्रहं प्रति प्रतिबन्धकतया तादृशावृत्तित्वांशे निर्धर्मितावच्छेदकवह्न्यभाववदवृत्तिमान् पर्वतः इत्याकारकनिश्चयस्य यथोक्तव्यभिचारनिश्चयकाले उत्पत्त्या यथा पर्वतो वह्निमानित्यनुमितिस्तन्मते भवति तथा ज्ञानत्वत्वावच्छिन्नधर्मिकहेतुमन्निष्ठाभावप्रतियोगितावच्छेदकत्वग्रहकालेऽपि निर्धर्मितावच्छेदकज्ञानत्वधर्मिकहेतुमन्निष्ठाभावप्रतियोगितानवच्छेदकत्वनिश्चयोत्पत्त्या स्वरूपतो ज्ञानवानित्यनुमितिरिष्टैवेत्याशयेन समाधत्ते त्वन्मत इति। साध्याभाववदवृत्तित्वज्ञानस्यानुमितिहेतुत्ववादिनां मते इत्यर्थः। निर्वह्नीति वह्न्यभाववद्वृत्तितावान्

जागदीशी

धूम इत्याकारकव्यभिचारधियः सत्त्वेऽपि वह्न्यभाववदवृत्तिमान् पर्वत इत्याकारकज्ञानदशायामिव अस्माकमपि उक्तज्ञानदशायामनुमितेरिष्टत्वात्। ज्ञानत्वत्वावच्छिन्नधर्मिकव्यापकतानवच्छेदकत्वग्रहस्य तु ज्ञानत्वत्वविशिष्टज्ञानत्वावच्छिन्नविधेयताकानुमितावेव

नारायणी

धूम इत्याकारकव्यभिचारनिश्चयस्येत्यर्थः। सत्त्वेऽपि = वर्त्तमानतादशायामपि। वह्न्यभावेति साध्यीभूतवह्न्यभावाधिकरणावृत्तिमान् पर्वत इत्याकारकव्याप्त्यंशे निर्धर्मितावच्छेदककपरामर्शदशायामित्यर्थः। अस्माकमपि = व्यापकताज्ञानस्यानुमितिहेतुत्ववादिनां मतेऽपि। उक्तज्ञानेति ज्ञानत्वत्वावच्छिन्नधर्मिकव्यापकतानवच्छेदकत्वग्रहकालीनस्वरूपतोज्ञानत्वधर्मिकव्यापकतावच्छेदकत्वनिश्चयस्य सत्त्वदशायामित्यर्थः। अनुमितेः = स्वरूपतो ज्ञानत्वावच्छिन्नविधेयताकानुमितेः। इष्टत्वात् इति। तथाच ज्ञानत्वत्वावच्छिन्नधर्मिकहेतुमन्निष्ठाभावप्रतियोगितावच्छेदकत्वग्रहकाले स्वरूपतो ज्ञानत्वधर्मिकहेतुमन्निष्ठाभावप्रतियोगितानवच्छेदकत्वनिश्चयोत्पत्त्या उत्तरकालमनुमितिरिष्टैवेति भावः। उक्तानुमितेरिष्टत्वे हेतुमाह ज्ञानत्वत्वेति ज्ञानत्वत्वावच्छिन्नविशेष्यताकहेतुमन्निष्ठाभावप्रतियोगितावच्छेदकत्वनिश्चयस्येत्यर्थः। ज्ञानत्वत्वेति ज्ञानत्वत्वावच्छिन्नज्ञानत्वनिष्ठावच्छेदकताकज्ञाननिष्ठविधेयताकानुमितावेवेत्यर्थः। विरोधित्वसम्भवात् = प्रतिबन्धकत्वसम्भवात्। तथाच ज्ञानत्वत्वावच्छिन्नहेतुमन्निष्ठाभावप्रतियोगितावच्छेदकमित्याकारकनिश्चयस्य तादृशज्ञानत्वत्वावच्छिन्नविशेष्यकहेतुमन्निष्ठाभावप्रतियोगितानवच्छेदकत्वनिश्चयरूपज्ञानत्वत्वविशिष्टज्ञानत्वावच्छिन्नविधेयताकानुमितिकारणप्रतिबन्धकतया निरुक्तानुमितिं प्रत्येव तादृशव्यापकतानवच्छेदकत्वनिश्चयस्य प्रतिबन्धकतया आवश्यकतया तदानीं स्वरूपतो ज्ञानत्वावच्छिन्न-

जागदीशी

विरोधित्वसम्भवात्। तथापि व्यापकताज्ञानस्य हेतुत्वे चैत्रीयज्ञानवान् महानसीयवह्निमान् इत्याद्यनुमित्यनुपपत्तिः। चैत्रीयज्ञानत्वादेरखण्डत्वाभावेन स्वरूपतस्तद्विशेष्यकव्यापकतावच्छेदकत्वज्ञानसम्भवात्, चैत्रीयज्ञानत्वत्वेन व्यापकतावच्छेदकत्वग्रहे चैत्रीय-

नारायणी

विधेयताकानुमित्युत्पत्तिर्निराबाधा, तादृशानुमित्युत्पत्तिकारणस्य स्वरूपतो ज्ञानत्वधर्मिकहेतुमन्निष्ठाभावप्रतियोगितानवच्छेदकत्वनिश्चयस्य ज्ञानत्वत्वावच्छिन्नधर्मिकहेतुमन्निष्ठाभावप्रतियोगितावच्छेदकत्वग्रहकालेऽपि सत्त्वे बाधकाभावादिति तु तात्पर्य्यम्।

उत्तरयति तथापीति व्यापकताज्ञानस्य = हेतुमन्निष्ठाभावप्रतियोगितानवच्छेदकं साध्यतावच्छेदकमित्याकारकस्य निश्चयस्य। हेतुत्व इति अनुमितीत्यादिः। ज्ञानसाध्यकानुमित्यनुपपत्तिमुक्त्वा महानसीयवह्निसाध्यकानुमित्यनुपपत्तिमप्याह महानसीयेति = महानसीयत्ववह्नित्वप्रकारेणानुमित्यनुपपत्तिरित्यर्थः। निरुक्तानुमित्यनुपपत्तौ हेतुमाह चैत्रीयेति चैत्रवृत्तिज्ञानत्वादेरित्यर्थः। अखण्डस्येति स्वरूपतो भासमानस्याभावेनेत्यर्थः। स्वरूपत इति किञ्चिद्धर्मानवच्छिन्नचैत्रीयज्ञानत्वनिष्ठविशेष्यताकहेतुमन्निष्ठाभावप्रतियोगितानवच्छेदकत्वनिश्चयस्यासम्भवेनेत्यर्थः। नन्वेवं तत्र कीदृशं व्यापकतावच्छेदकत्वज्ञानमुत्पद्यते इत्याकाङ्क्षायामाह चैत्रीयेति चैत्रीयज्ञानत्वत्वावच्छिन्नविशेष्यताकहेतुमन्निष्ठाभावप्रतियोगितानवच्छेदकत्वनिश्चयस्योत्पत्तावित्यर्थः। चैत्रीयेति = चैत्रीयज्ञानत्ववत्त्वान् इत्येवानुमितिप्रसङ्गात्, नतु चैत्रीयज्ञानवान् इत्यनुमितिः। तथाच तादृशानुमित्यपलापप्रसङ्गः, यद्रूपावच्छिन्ने व्यापकतावच्छेदकत्वग्रहः तद्रूपविशिष्टावच्छिन्नस्यैवानुमितिः फलम्। चैत्रीयज्ञानत्वत्वावच्छेदेन हेतुव्यापकतावच्छेदकत्वग्रहे चैत्रीयज्ञानत्वत्वविशिष्टस्यैव विधेयतावच्छेदकताका-

जागदीशी

ज्ञानत्ववद्वान् इत्यैवानुमितिप्रसङ्गादिति ध्येयम् । यादृशरूपावच्छि-न्नाधिकरणतात्वे हेतुव्यापकतावच्छेदकत्वधीः तादृशरूपावच्छिन्न-विधेयताकैव अनुमितिः फलम्, अतो न कोऽपि दोषः । प्रतियोगि-वैयधिकरण्यस्य व्यापकतायां निवेशमपेक्ष्य साध्याधिकरणताया-

नारायणी

नुमितेः फलत्वात् इति हृदयम् । चैत्रीयज्ञानत्वत्वेन व्यापकतावच्छेदक-त्वग्रहकालेऽपि चैत्रीयज्ञानवानित्यनुमितिमुपपादयतां केषाञ्चिन्मतमाह यादृशेति यद्रूपावच्छिन्नयादृशरूपावच्छिन्नेत्यर्थकम्, तेन स्वरूपज्ञान-त्वावच्छिन्नाधिकरणतात्वे व्यापकतावच्छेदकत्वग्रहकाले स्वरूपतो ज्ञानत्वावच्छिन्नविधेयताकानुमितेर्नानुपपत्तिः। तथाच यादृशरूपावच्छि-न्नाधिकरणतात्वं यद्रूपावच्छिन्नाधिकरणतात्वं वा हेतुमन्निष्ठाभावप्र-प्रतियोगितानवच्छेदकं तादृशरूपावच्छिन्नविधेयताकानुमितिरेव फल-मित्यर्थः पर्य्यवसितः। न कोऽपि दोष इति चैत्रीयज्ञानत्वत्वविशिष्ट-ज्ञानत्वावच्छिन्नाधिकरणतात्वे हेतुमन्निष्ठाभावप्रतियोगितानवच्छेदक-त्वग्रहदशायां तादृशज्ञानत्वत्वविशिष्टज्ञानत्वावच्छिन्नविधेयताकानुमितिः चैत्रीयज्ञानवानित्याकारिकैव भवति, नतु चैत्रीयज्ञानत्वत्ववत्त्वानित्या-कारिका-इति न चैत्रीयज्ञानत्वत्ववत्त्वानित्यनुमित्यापत्तिः कथमपि सम्भवतीति भावः ।

ननु साध्याधिकरणतात्वपर्य्यन्तस्य प्रवेशे उक्तविवक्षायां क्व लाघव-मित्यत आह प्रतियोगीति तथाच साध्यतावच्छेदके व्यापकतावच्छेद-कत्वनिवेशपक्षेऽव्याप्यवृत्तिकपिसंयोगसाध्यकस्थले कपिसंयोगत्वादौ व्यापकतावच्छेदकत्वरक्षणाय हेतुमन्निष्ठाभावे हेत्वधिकरणे वा प्रतियो-गिवैयधिकरण्यस्यावश्यं निवेशनीयतया महागौरवं स्यात् । अधिकरण-

जागदीशी

स्तद्घटितहेतुव्यापकत्वस्य व्याप्तौ प्रवेशेन लाघवादित्यपि वदन्ति।

एतेनेति। एकरूपेण केवलान्वयित्वग्रहात् अन्यरूपेण अनुमित्युत्पत्तौ अतिप्रसङ्गेन इत्यर्थः। ननु गगनाभाववत्त्वादिना केवला-

जागदीशी

तायास्तु व्याप्यवृत्तित्वमते कपिसंयोगत्वावच्छिन्नाधिकरणतात्वेऽपि एतद्वृत्तत्वरूपहेतुमन्निष्ठाभावप्रतियोगितानवच्छेदकतायाः सत्त्वेन प्रतियोगिवैयधिकरण्यघटितलक्षणापेक्षया लाघवमित्याशयः।

अत्र वदन्तीत्युक्तमस्वरससूचनाय। तद्बीजन्तु अधिकरणताया व्याप्यवृत्तित्वं न सर्वसम्मतम्, यन्मतेऽधिकरणताया अपि अव्याप्यवृत्तित्वं तन्मते कपिसंयोगी एतद्वृत्तत्वादित्यादिसंग्रहाय प्रतियोगिवैयधिकरण्यस्यावश्यं निवेशनीयतया प्रतियोगिवैयधिकरण्यानिवेशप्रयुक्तलाघवानवकाशादिति।

एकरूपेणेति गुणत्वव्याप्यानुभवत्वजातित्वादिरूपेणेत्यर्थः। केवलान्वयित्वेति अत्यन्ताभावप्रतियोगितानवच्छेदकत्वप्रकारकज्ञानत्वविशेष्यकनिश्चयादित्यर्थः। अन्यरूपेण = ज्ञानत्वत्वेन, अनुमित्युत्पत्तौ = अनुमित्यापत्तिरूपातिप्रसङ्गेनेत्यर्थः।

यदि च शुद्धज्ञानत्वविशिष्टानुमितौ शुद्धज्ञानत्वे यथोक्तकेवलान्वयित्वग्रहो हेतुः, विशिष्टज्ञानत्वावच्छिन्नविधेयताकानुमितौ तु यद्धर्मविशिष्टावच्छिन्नस्यानुमितिः तद्धर्मावच्छिन्ने केवलान्वयित्वग्रहो हेतुरित्युच्यते तदा केवलान्वयित्वग्रहादप्यनुमितिः सम्भवतीत्याशङ्क्य सर्वजनेत्यादिदीधितिग्रन्थमवतारयितुमाह नन्विति गगनाभावत्वेति गगनाभावः अत्यन्ताभावाप्रतियोगीत्याकारककेवलान्वयित्वग्रहात्, अथवा अत्यन्ताभावप्रतियोगितानवच्छेदकं गगनाभाववृत्तीत्याकारककेवलान्वयित्वग्रह इत्यर्थः। शुद्धेति निरवच्छिन्नगगनाभावत्वादिनिष्ठावच्छेदकताक

जागदीशी

न्वयित्वग्रहः गगनाभावत्वादिप्रकारेण अनुमितौ हेतुर्वाच्यः, गगनाभावत्वत्वविशिष्टगगनाभावत्वप्रकारेण अनुमितौ गगनाभावत्वत्वाश्रयत्वप्रकारेणैव केवलान्वयित्वग्रहस्य हेतुत्वात् नैकदा अवच्छिन्नानवच्छिन्नगगनाभावत्वप्रकारताकानुमितिप्रसङ्ग इति यदि

नारायणी

विधेयताकानुमितावित्यर्थः। हेतुर्वाच्य इति-तादृशानुमितिकारणत्वं तत्रैव वक्तव्यमित्याशयः। गगनाभावत्वत्वेति गगनाभावत्वत्वनिष्ठावच्छेदकतानिरूपितगगनाभावत्वनिष्ठावच्छेदकताकविधेयताकानुमितावित्यर्थः। गगनाभावत्वेति गगनाभावत्वाधिकरणत्वेनैव रूपेणेत्यर्थः। केवलान्वयीति गगनाभावत्वाधिकरणं वृत्तिमदत्यन्ताभावाप्रतियोगीत्याकारकग्रहस्येत्यर्थः। हेतुत्वात् = गगनाभावत्वत्वविशिष्टावच्छिन्नविधेयताकानुमितिजनकत्वात्

ननु शुद्धगगनाभावत्वावच्छिन्नविधेयताकानुमितौ गगनाभावत्वत्वविशिष्टावच्छिन्नविधेयताकानुमितौ च एकस्यैव गगनाभावत्वनिष्ठहेतुमन्निष्ठाभावप्रतियोगितानवच्छेदकत्वज्ञानस्य वृत्तिमदत्यन्ताभावप्रतियोगितानवच्छेदकत्वज्ञानस्य वा कारणत्वं कुतो न कल्पनीयमित्यत आह गगनाभावत्वेनेति शुद्धेनेत्यादिः। निरवच्छिन्नेति तादृशाभावप्रतियोगितानवच्छेदकं गगनाभाववृत्तीत्याकारकव्यापकतावच्छेदकत्वज्ञानस्येत्यर्थः। गगनाभावत्वत्वेनेति गगनाभावत्वत्वविशिष्टगगनाभावत्वविशिष्टविधेयताकानुमितावित्यर्थः। तज्ज्ञानस्य = विभिन्नव्यापकतावच्छेदकत्वज्ञानस्य। हेतुत्वात् = हेतुत्वस्य विवक्षणीयत्वात्। एकदा = एकस्मिन् काले अवच्छिन्नेति निरवच्छिन्नगगनाभावत्वनिष्ठावच्छेदकताकगगनाभावत्वत्वरूपकिञ्चिदवच्छिन्नावच्छेदकताकविधेयताकसमू-

भागवोधी

ब्रूयात् तदाप्याह सर्वजनेति। गृह्यमाणव्यतिरेकेति, तदानीं केवलान्वयित्वाग्रहसम्पत्तये, तत एव तत्रानुमितिसम्भवादिति भावः।

नारायणी

हालम्बनानुमित्यापत्तिरित्यर्थः। तथाच निरुक्तोभयविधानुमितौ एकस्यैव व्यापकतावच्छेदकत्वज्ञानस्य जनकत्वाभ्युपगमे युगपत् समूहालम्बननिरवच्छिन्नगगनाभावत्वनिष्ठविधेयतावच्छेदकताकंकिञ्चिदवच्छिन्नगगनाभावत्वनिष्ठविधेयतावच्छेदकताकानुमित्यापत्तिः स्यादिति केवलान्वयित्वग्रहादुक्तरीत्या कार्यकारणभावाभ्युपगमे न कोऽपि दोष इति भावः। सर्वजनेत्यादिदीधितिं व्याचष्टे **केवलान्वयित्वेति** अत्यन्ताभावाप्रतियोगित्वग्रहोत्तरजायमानज्ञाने चेत्यर्थः। **सर्वजनेति** व्यापकताज्ञानादित्यादिः। यदि च केवलान्वयित्वग्रहादेव सर्वत्रानुमितिः, वह्न्यादिसाध्यकस्थलेऽपि वह्न्यादौ भ्रमात्मकात्यन्ताभावाप्रतियोगित्वरूपकेवलान्वयित्वग्रहादेवानुमितिरित्युच्यते तदा दीधितौ दोषमाह गृह्यमाणेति। तथाच वह्निरत्यन्ताभावप्रतियोगीत्याकारकवह्निधर्मिकव्यतिरेकित्वग्रहदशायामत्यन्ताभावाप्रतियोगित्वरूपकेवलान्वयित्वस्य ग्रह एव न सम्भवति, निरुक्तव्यतिरेकित्वग्रहस्य केवलान्वयित्वग्रहप्रतिबन्धकत्वात्। एवञ्च कथं केवलान्वयित्वज्ञानादनुमितिरिति भावः। टीकायां **तदानीमिति** वह्निरत्यन्ताभावप्रतियोगीत्याकारकव्यतिरेकित्वग्रहदशायामित्यर्थः। **केवलान्वयित्वेति** वह्निरत्यन्ताभावाप्रतियोगीत्याकारकग्रहाभावोपपत्तये इत्यर्थः। **अन्यथेति** वह्न्यादावत्यन्ताभावप्रतियोगित्वरूपव्यतिरेकित्वग्रहस्याननुधावने इत्यर्थः। ततएव = केवलान्वयित्वग्रहादेव। तत्र = पर्वतादौ। **अनुमितिसम्भवादिति** वह्न्यादौ तादृशव्यतिरेकित्वग्रहस्यासत्त्वे प्रतिबन्धकाभावाद् वह्निरत्यन्ताभावाप्रतियोगीत्याकारककेव-

दीधितिः

नुमितिभावे धूमादिदर्शनानन्तरं जायमाने गृह्यमाणव्यतिरेक-वह्न्यादिज्ञानेऽसम्भवाच्च । प्रमेयत्वादेश्च घटादिवृत्तित्वं

जागदीशी

ननु एवं प्रमेयत्वादेरभावाप्रतियोगित्वग्रहदशायां घटादौ तद्वैशिष्ट्यावगाह्यनुमितिर्न स्यात् कारणबाधात् अत आह प्रमेयत्वादेश्चेति । तथा च तदानीं प्रमेयत्वादिसाध्यकानुमितिरसिद्धैवेति

नारायणी

लान्वयित्वग्रहस्य भ्रमात्मकस्योत्पत्त्या तत एवानुमितिः सर्वत्र स्याद्, अत वह्न्यादौ यथोक्तव्यतिरेकित्वग्रहानुधावनमिति भावः ।

प्रमेयत्वादेश्चेत्यादिदीधितिग्रन्थमवतारयति नन्वित्यादि । प्रमेयत्वादेरिति, आदिना वाच्यत्वादिपरिग्रहः । प्रमेयत्वधर्मिकात्यन्ताभावाप्रतियोगित्वप्रकारकनिश्चयदशायामित्यर्थः । घटादाविति आदिना पटादिपरिग्रहः । घटादिरूपपक्षे इत्यर्थः । तद्वैशिष्ट्येति प्रमेयत्ववैशिष्ट्यावगाहिनी घटः प्रमेयत्ववानित्याकारिकाऽनुमितिरित्यर्थः । न स्यादित्यत्र हेतुमाह कारणबाधादिति क्लृप्तकारणस्य प्रमेयत्वाभाववद-वृत्तित्वरूपसाध्याभाववदवृत्तित्वनिश्चयस्योत्पत्त्यसम्भवादित्यर्थः ।

प्रमेयत्वमत्यन्ताभावाप्रतियोगीत्याकारकनिश्चयस्य प्रमेयत्वप्रतियोगिताकाभावग्रहं प्रति कथञ्चित्प्रतिबन्धकतया प्रमेयत्वादौ अत्यन्ताभावाप्रतियोगित्वरूपकेवलान्वयित्वग्रहदशायां प्रमेयत्वाभाववदवृत्तित्वनिश्चयस्य क्लृप्तानुमितिकारणस्योत्पत्तिरेव न सम्भवतीति हृदयम् । भावमाह तथाचेति । तदानीं = प्रमेयत्वादावत्यन्ताभावाप्रतियोगित्वग्रहदशायाम् । प्रमेयत्वसाध्यकानुमितिरेव साध्याभाववदवृत्तिमत्त्वनिश्चयस्यानुमितिकारणतावादिनां मते नोत्पद्यत इत्याह प्रमेयत्वसाध्यकेति । प्रमेयत्वरूपकेवलान्वयिनिष्ठविधेयताकानुमितिरित्यर्थः । असिद्धैवेति ।

दीधितिः

केवलान्वयित्वेन कथञ्चित्तदवृत्तिधर्मव्यापकत्वेन वानुमेयम्, न ज्ञेयत्वादिहेतुका तदनुमितिरानुभविकी ।

जागदीशी

भावः । ज्ञेयत्वादौ घटादिवृत्तित्वाग्रहदशायां सहचारग्रहासम्भवात् केवलान्वयित्वेन घटादिवृत्तित्वानुमानासम्भवादाह कथञ्चिदिति ।

नारायणी

प्रमेयत्वादौ केवलान्वयित्वग्रहदशायां क्लृप्तकारणस्य साध्याभाववद-वृत्तित्वज्ञानस्यानुत्पत्त्या घटः प्रमेयत्ववानित्याकारकानुमितिर्न सम्भव-तीति भावः।

नन्वेवं केवलान्वयिसाध्यककेवलान्वयिहेतुकानुमित्यनुत्पादे घटः प्रमेयत्ववानित्यादिव्यवहारस्थले कीदृशानुमितिरित्याशङ्कावारणाय प्रमेयत्वादेश्चेत्यादिदीधितिग्रन्थं सङ्गमयति ज्ञेयत्वादावित्यादि । तथा च तादृशव्यवहारस्थले प्रमेयत्वं घटवृत्ति केवलान्वयित्वात्, इत्याकारिकैव साध्याभाववदवृत्तित्वज्ञानस्य जनकत्ववादिनां मतेऽनुमितिर्भवती-त्याशयः ।

ननु यादृशस्थले ज्ञेयत्वप्रमेयत्वादौ घटादिवृत्तित्वग्रहो न जातः तादृशघटादिवृत्तित्वाग्रहदशायां सामानाधिकरण्यस्थलाभावात् केवला-न्वयित्वहेतुना घटादिवृत्तित्वानुमानं न सम्भवतीत्येवं हेतुपूरणेन कथ-ञ्चिदिति दीधितिग्रन्थमवतारयति घटवृत्तीति । तथाच प्रमेयत्वं घटवृत्ति घटवृत्तियत्किञ्चिद्धर्मव्यापकत्वात् इत्याकारकानुमानेन प्रमेयत्वादौ घट-वृत्तित्वस्यैवानुमितिरित्याशयः ।

नन्वेवं हेतौ अत्रापि साध्यसामानाधिकरण्यस्थलाभाव इत्यत आह

जागदीशी

तथा च तद्वृत्तियत्किञ्चिद्धर्मव्यापकत्वेन समं साध्यस्य सहचारो जात्यन्यत्वादावेव सुलभ इति तद्वृत्तिधर्मत्वावच्छिन्नव्यापकत्वस्य हेतुत्वे तद्दोषतादवस्थ्यमतः कथञ्चिदित्युक्तम्। केचित्तु तद्वृत्तिधर्मव्यापकत्वं तन्मात्रवृत्तिधर्मव्यापकत्वम्, अन्यथा केवलान्वय्यन्तरे घटादिवृत्तित्वाग्रहदशायां सहचारज्ञानाभावात् तद्दोष-

नारायणी

तथाचेति। तद्वृत्तीति घटवृत्तियत्किञ्चिद्धर्मव्यापकत्वेन सममित्यर्थः। साध्यस्य = घटवृत्तित्वस्य सहचारः = सामानाधिकरण्यम्। जात्यन्यत्वादाविति आदिना गुणादिभिन्नत्वादिपरिग्रहः। सुलभ इति हेतुसाध्ययोः सामानाधिकरण्यस्थलस्य प्रसिद्धत्वात् न घटवृत्तित्वानुमित्यसम्भव इति भावः।

ननु तद्वृत्तिधर्मव्यापकत्वस्य हेतुत्वे को दोष इत्यत आह तद्वृत्तीति घटवृत्तिधर्मत्वावच्छिन्नव्यापकत्वस्य घटवृत्तित्वसाधकहेतुत्वाभिधाने इत्यर्थः। तद्दोषतादवस्थ्यम् = सहचारस्थलाभावतादवस्थ्यम्। प्रमेयत्वज्ञेयत्वादौ घटवृत्तिधर्मत्वावच्छिन्नसामान्यव्यापकत्वाग्रहदशायां घटवृत्तित्वेन समं सहचारस्थलासम्भवाद् घटवृत्तिधर्मयत्किञ्चित्त्वविशेषणं दीधितिकृता दत्तमित्याह अत इति निरुक्तदोषतादवस्थ्यादित्यर्थः। कथञ्चिदित्युक्तमिति दीधितिकृतेति शेषः। तद्वृत्तिधर्मव्यापकत्वमिति ग्रन्थं प्रकारान्तरेण व्याचक्षाणानां मतमाह केचित्त्विति तन्मात्रेति घटवृत्तिघटेतरावृत्तिधर्मव्यापकत्वमित्यर्थः। तथाच प्रमेयत्वं घटवृत्ति घटमात्रवृत्तिधर्मव्यापकत्वादित्यनुमानं पर्य्यवसितम्। अन्यथा = तन्मात्रवृत्तीत्यनुक्तौ। केवलान्वय्यन्तरे = प्रमेयत्वातिरिक्तवाच्यत्वादौ, घटादिवृत्तीति घटनिरूपितवृत्तित्वाज्ञानदशायामित्यर्थः। सहचारेति

जागदीशी

तादवस्थ्यम्, तथा च हेतुग्रहदशाया साध्यस्यापि प्रायशो ग्रहसम्भवात् सिद्धसाधनम्, अतः कथञ्चिदित्युक्तम्। तथा च तद्वृत्तित्वाग्रहदशायामेव अनुमितिरिति भाव इत्याहुः। तदनुमितिः प्रमेयत्वसाध्यकानुमितिः। अत्रेदमवधेयम्—व्यापकसामानाधिकर-

नारायणी

हेतुसाध्ययोः सामानाधिकरण्यग्रहस्थलाभावः स्यादित्यर्थः। कथञ्चिदित्यस्य व्यावृत्तिमाह **तथाचेति** हेतुग्रहदशायाम् = तन्मात्रवृत्तिधर्मव्यापकत्वग्रहदशायाम्। साध्यस्यापि = घटवृत्तित्वस्यापि। **प्रायश इति** प्रमेयत्वरूपपक्षे साध्यज्ञानदशायामेव सिद्धसाधनस्यावश्यकतया धर्मत्वावच्छिन्ने घटवृत्तित्वग्रहस्यैव हेतुज्ञानस्वरूपतया सिद्धसाधनस्यासम्भवात् प्रायश इत्युक्तम्। तथाच घटवृत्तित्वेन धर्ममात्रस्य यदा ज्ञानं तदैव सिद्धसाधनमित्याह **सिद्धसाधनमिति** हेतुग्रहस्यैव साध्यग्रहरूपत्वादित्याशयः।

नन्वेवं कथञ्चिदित्युक्तौ कथं न सिद्धसाधनमित्याह **तथा चेति तद्वृत्तित्वेति** पक्षे घटवृत्तित्वाज्ञानदशायामेवेत्यर्थः। अनुमितिः = घटवृत्तित्वानुमितिः। अत्राहुरित्यस्वारससूचनाय। तद्बीजं तु तन्मात्रवृत्तिधर्मव्यापकत्वार्थकरणे तद्घटकमात्रपदस्य तदितरावृत्तित्वसहिततद्वृत्तित्वार्थकस्य हेतुघटकतया इतरत्वापर्य्याप्तिसमालोचनेन महागौरवं स्यादिति। **प्रमेयत्वेति** न प्रमेयत्वसाध्यकानुमितिः काचिदपि सम्भवति, मन्मते साध्याभाववदवृत्तित्वज्ञानस्यैवानुमितिजनकतया केवलान्वयिसाध्यकस्थले तादृशज्ञानस्यैवाप्रसिद्धिरिति भावः।

स्वातन्त्र्येण केवलान्वयित्वं खण्डयितुमाह **अत्रेदमिति व्यापकेति**

जागदीशी

ण्यस्याहेतुत्वेऽपि वाच्यत्वस्य व्यतिरेकित्वभ्रमदशायां तदभाववद-वृत्तित्वस्य ग्रहात् तत्साध्यकानुमितिसम्भवेन केवलान्वयिसाध्यका-नुमितिखण्डनं दुर्घटं, तार्किकैरन्यथाख्यात्यभ्युपगमात्। न च वाच्यत्वादेः केवलान्वयित्वग्रहदशायां वाच्यत्वाभाववदवृत्तित्वग्रहा-

नारायणी

स्वव्यापकसाध्यसामानाधिकरण्यज्ञानस्य अहेतुत्वेऽपि = अनुमितिजन-कत्वाभावपक्षेऽपि। वाच्यत्वस्य = वाच्यत्वरूपसाध्यस्य। व्यतिरेकित्वेति अत्यन्ताभावप्रतियोगित्वभ्रमदशायामित्यर्थः। तदभावेति वाच्यत्वा-भावाधिकरणनिरूपितवृत्तित्वाभावनिश्चयादित्यर्थः। तत्साध्यकेति वाच्यत्वसाध्यकानुमित्युत्पत्तिसम्भवेनेत्यर्थः। केवलान्वयित्वखण्डनं दुर्घटमिति साध्याभाववदवृत्तित्वज्ञानमात्रस्य हेतुत्वमभ्युपगच्छतां मतेऽपि वाच्यत्वम् अभावप्रतियोगीत्याकारकभ्रमदशायां वाच्यत्वाभाव-वदवृत्तित्वस्यैव ज्ञेयत्वादौ ज्ञानाद् वाच्यत्वसाध्यिकाऽपि अनुमितिरव-श्यमुत्पद्यते इति साध्याभाववदवृत्तिज्ञानस्य हेतुत्वमभ्युपगम्य केवला-न्वयित्वखण्डनमसम्भवि स्यादित्याशयः।

ननु साध्याभाववदवृत्तित्वज्ञानस्यहेतुतावादिमते भ्रम एव नास्ति इति कथं तादृशभ्रमानुधावनमित्यत आह तार्किकैरिति नव्यनैयायिकैरित्यर्थः। अन्यथेति भ्रमस्य स्वीकारादित्यर्थः। तथाच शङ्केयं नव्यानां ननु गुरूणा-मित्यनेन तार्किकस्यैवैतन्मतमित्यस्य व्यवस्थापितत्वात् तार्किकाणां मते-ऽन्यथाख्यातिसत्त्वे बाधकाभावात् निरुक्तभ्रमोऽपि सम्भवतीति हृदयम्। शङ्कते नचेति वाच्यमिति परेणान्वयः। वाच्यत्वादेरिति आदिना प्रमेय-त्वज्ञेयत्वादिपरिग्रहः। केवलान्वयित्वेति यथोक्तात्यन्ताभावाप्रतियोगि-

जागदीशी

सम्भवात् तदानीं वाच्यत्वाद्यनुमित्यनुत्पाद एव केवलान्वयिखण्ड-

नारायणी

त्वज्ञानदशायामित्यर्थः। साध्याभावेति प्रतियोगित्वसम्बन्धेन साध्यवि-शिष्टाभावाधिकरणनिरूपितावृत्तित्वस्य ज्ञानासम्भवादित्यर्थः। वाच्यत्वा-दिकमत्यन्ताभावप्रतियोगित्वाभाववदित्याकारकनिश्चयस्य वाच्यत्वनिष्ठ-प्रतियोगिताकाभावाधिकरणनिरूपितवृत्तित्वाभावरूपव्याप्तिग्रहं प्रति वाच्यत्वनिष्ठप्रतियोगित्वरूपग्राह्यस्याभावावगाहिनिश्चयत्वेन प्रतिबन्ध-कतया निरुक्तकेवलान्वयित्वग्रहदशायां वाच्यत्वरूपसाध्यतावच्छेदका-वच्छिन्नप्रतियोगिताकाभाववदवृत्तित्वग्रहस्योदय एव न सम्भवतीत्यभि-मानः। तदानीं = वाच्यत्वादिकमत्यन्ताभावप्रतियोगित्वाभाववदित्या-कारककेवलान्वयित्वनिश्चयदशायामित्यर्थः। वाच्यत्वेति वाच्यत्वादि-साध्यकानुमितेरनुत्पत्तिरेवेत्यर्थः। तादृशकेवलान्वयित्वग्रहकाले भ्रमात्म-कवाच्यत्वाभाववदवृत्तित्वग्रहस्याप्यनुत्पादेन कारणाभावादेव न वाच्य-त्वसाध्यकानुमित्युत्पत्तिरिति भावः। केवलान्वयीति केवलान्वयिखण्डन-शब्दस्यार्थ इत्यर्थः। वाच्यत्वादिकं वृत्तिमदत्यन्ताभावाप्रतियोगीत्याकार-ककेवलान्वयित्वनिश्चयस्य वाच्यत्वादिधर्मिकाभावप्रतियोगित्वप्रकारक-बुद्धिं प्रत्येव प्रतिबन्धकतया घटाभावादौ प्रतियोगितासम्बन्धेन वाच्यत्व-प्रकारकाभावविशेष्यकबुद्धिं प्रति तादृशकेवलान्वयित्वनिश्चयस्य प्रतिब-न्धकताया नव्यैरनभ्युपगम्यमानतया निरुक्तकेवलान्वयित्वनिश्चयस्य सत्त्वेऽपि प्रतियोगितासम्बन्धेन वाच्यत्वविशिष्टाभावावगाहिवाच्यत्वा-भाववदवृत्तित्वग्रहस्योत्पत्तौ बाधकाभावाद् व्याप्तिग्रहसत्त्वेऽवश्यमेव वाच्यत्वसाध्यकानुमितिर्भवतीति तत्साध्यकानुमित्यनुत्पादस्यैव तदानी-मसम्भवात्तादृशानुमित्यनुत्पादस्य केवलान्वयिखण्डनशब्दार्थत्वं न

जागदीशी

नस्यार्थं इतिवाच्यम् , भिन्नप्रकारकज्ञानस्य अविरोधितया साध्ये वृत्तिमद्भावप्रतियोगित्वरूपकेवलान्वयित्वस्य ग्रहे सत्यपि प्रतियोगितासंसर्गेण अभावे साध्यवैशिष्ट्यावगाहिनः साध्याभाववदवृत्ति-

नारायणी

सम्भवतीत्याशयेन समाधानमाह भिन्नप्रकारकेति। तत्प्रकारबुद्धौ तदभावप्रकारकज्ञानस्यैव प्रतिबन्धकतायाः सर्ववादिसिद्धतया प्रतियोगितासंसर्गकवाच्यत्वविशिष्टाभावावगाहिभ्रमं प्रति तादृशकेवलान्वयित्वग्रहस्य प्रतिबन्धकत्वं कथमपि न सम्भवति, केवलान्वयित्वग्रहे प्रतियोगित्वाभावस्यैव प्रकारकतया साध्याभाववदवृत्तित्वग्रहे प्रतियोगित्वस्याप्रकारकत्वात्। अन्यथा घटप्रकारकबुद्धौ पटाभावग्रहस्यापि प्रतिबन्धकता स्याद्, भिन्नप्रकारकत्वस्याविशेषादित्याशयः। अविरोधितया = अप्रतिबन्धकतया। साध्ये = वाच्यत्वादौ। वृत्तिमदिति वृत्तिमदत्यन्ताभावप्रतियोगित्वाभावादिरूपकेवलान्वयित्वनिश्चये सत्यपीत्यर्थः। प्रतियोगितेति। यद्यपि साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगितासम्बन्धेन साध्यविशिष्टाभाववदवृत्तित्वग्रहस्यैव व्याप्तिग्रहस्वरूपतया वाच्यत्वत्वावच्छिन्नस्वरूपसम्बन्धावच्छिन्नप्रतियोगित्वस्याप्रसिद्धतया तेन सम्बन्धेनाभावान्तरे वाच्यत्व वैशिष्ट्यावगाहिभ्रम एव न सम्भवति। तथाच प्रतियोगितासंसर्गेणाभावे साध्यवैशिष्ट्यावगाहित्वाभिधानमसङ्गतम्। तथापि स्वावच्छिन्नसाध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन साध्यतावच्छेदकविशिष्टाभाववदवृत्तित्वज्ञानस्यैव साध्याभाववदवृत्तित्वग्रहरूपतया अभ्युपगम्यमानतया निरुक्तव्यधिकरणसम्बन्धेन वाच्यत्वत्वस्याभावांशे भ्रमत्वं सुघटमेवेत्यभिप्रायेण साध्यवैशिष्ट्यावगाहित्वाभि-

वागदेवी

हेतुरित्याकारकज्ञानस्य उत्पत्तौ बाधकाभावात् । न च अभावे धर्मिणि साध्यतावच्छेदकावच्छिन्नप्रतियोगित्वसंसर्गेण साध्यीयत्वाभावग्रहदशायां साध्याभाववदवृत्तित्वग्रहासम्भवात् तदानीं वाच्य-

नारायणी

धानम् । हेतुः=ज्ञेयत्वादिः । इत्याकारकज्ञानस्य=इत्याकारकव्याप्तिनिश्चयस्य । बाधकाभावादिति प्रतियोगितासंसर्गेण वाच्यत्वप्रकारकाभावविशेष्यकबुद्धौ तेन सम्बन्धेन वाच्यत्वाभावप्रकारकाभावविशेष्यकनिश्चयस्यैव बाधकतया निरुक्तकेवलान्वयित्वग्रहस्यातथात्वादिति भावः ।

ननु वाच्यत्वमत्यन्ताभावाप्रतियोगीत्याकारकवाच्यत्वविशेष्यकाभावप्रतियोगित्वाभावरूपकेवलान्वयित्वनिश्चयस्यस्य प्रतियोगितासम्बन्धेन वाच्यत्वप्रकारकाभावविशेष्यकबुद्धावप्रतिबन्धकत्वेऽपि यत्राभावः वाच्यत्वत्वावच्छिन्नस्वरूपसम्बन्धावच्छिन्नप्रतियोगितासम्बन्धेन वाच्यत्वाभाववानित्याकारकनिश्चयो जायते तत्र तादृशसम्बन्धेन वाच्यत्ववानभावः—इत्याकारकबुद्धिरेव नोत्पद्यते तादृशप्रतियोगितासम्बन्धेन वाच्यत्वाभावनिश्चयस्य निरुक्तबुद्धिप्रतिबन्धकत्वादिति तादृशस्थले तादृशप्रतियोगितासम्बन्धेन वाच्यत्वविशिष्टाभाववदवृत्तित्वज्ञानस्यानुत्पत्त्या साध्याभाववदवृत्तित्वज्ञानरूपकारणाभावेन वाच्यत्वसाध्यकानुमित्यनुत्पादात् तादृशस्थले निरुक्तानुमित्यनुत्पादस्यैव केवलान्वयिखण्डनपदार्थत्वं निराबाधं स्यादित्येवं पुनः शङ्कते नचेति वाच्यमिति परेणान्वयः । अभावे धर्मिणि=अभावत्वावच्छिन्ने विशेष्ये। साध्यतेति वाच्यत्वत्वरूपसाध्यतावच्छेदकधर्मावच्छिन्नप्रतियोगित्वसम्बन्धेनेत्यर्थः। साध्यीयत्वेति वाच्यत्वाद्यभावनिश्चयदशायामित्यर्थः। साध्याभाववदवृत्तित्वग्रहासम्भवादिति अभावः यथोक्तप्रतियोगितासम्बन्धेन वाच्यत्वाभाववानित्याकारकनिश्चयस्य प्रतियोगितासम्बन्धेन साध्यविशिष्टाभावग्रह प्रतिबन्धकत्वात् पूर्वपक्षिणामभाव-

जागदीशी

त्वाद्यनुमित्यनुत्पाद एव केवलान्वयिखण्डनशब्दार्थं इति साम्प्रतम्। अभावत्वसामानाधिकरण्येन तादृशाभावग्रहेऽपि अभावधर्मिकस्य तादृशप्रतियोगितासम्बन्धेन साध्यीयत्वग्रहस्य सम्भवात् अभावत्वावच्छेदेन तादृशसाध्यीयत्वाभावग्रहस्य च प्रमात्मकस्य दुर्घटत्वात् संयोगादिसम्बन्धेन वाच्यत्वाद्यभाव एव तादृशसाध्यीयत्वाभावस्य

नारायणी

त्वावच्छिन्नधर्मिकप्रतियोगितासम्बन्धेन वाच्यत्वाभावप्रकारकनिश्चयस्यैव केवलान्वयित्वग्रहरूपत्वादित्याशयः। तदानीं = तादृशप्रतियोगितासम्बन्धेन साध्याभाववानभावःइत्याकारकग्रहदशायाम्, वाच्यत्वाद्यनुमित्यनुत्पाद इति क्लृप्तकारणीभूतसाध्याभाववदवृत्तित्वज्ञानविरहादित्यादिः। केवलान्वयिखण्डनम् = केवलान्वयिखण्डनशब्दार्थः, अभावत्वेति अभावः साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगितासम्बन्धन वाच्यत्वाभाववानित्याकारकनिश्चयो यदि अभावत्वसामानाधिकरण्येन वाच्यत्वाभाववगाही तदा अभावत्वसामानाधिकरण्येन साध्यविशिष्टाभाववदवृत्तित्वज्ञानोदये बाधकाभावात् तादृशज्ञानोत्पत्त्या भवति वाच्यत्वसाध्यकानुमितिरिति वाच्यत्वसाध्यकानुमित्यनुत्पाद एव तदानीं न सम्भवति, कुतः केवलान्वयिखण्डनमित्याशयेन समाधत्ते अभावत्वेति स्वरूपत्वमात्रावच्छिन्नसंसर्गताकप्रतियोगित्वसम्बन्धावच्छिन्नवाच्यत्वाभावविषयकेण। तादृशेति वाच्यत्वाभावनिश्चयेऽपीत्यर्थः। अभावेति। अभावत्वसामानाधिकरण्येनाभावधर्मिकप्रतियोगितासंसर्गकवाच्यत्वविशिष्टाभाववदवृत्तित्वज्ञानोत्पत्तिसम्भवादित्यर्थः। तथाच कारणसत्त्वान्न वाच्यत्वसाध्यकानुमितेरनुत्पाद इति भावः।

जागदीशी

असत्त्वात्। वस्तुतस्तु अभावत्वविषयतामनन्तर्भाव्य साध्यतावच्छेदकावच्छिन्नप्रतियोगितासंसर्गेण यः साध्यीयस्तद्वद्वृत्तित्वज्ञानमेव लाघवात् कारणमित्यभावत्वावच्छेदेन तादृशप्रतियोगितासम्बन्धेन

नारायणी

ननु अभावत्वावच्छेदेनैव प्रतियोगितासम्बन्धेन वाच्यत्वाभावावगाहिनिश्चय एवास्माकं केवलान्वयित्वनिश्चयः तत्सत्त्वेऽभावत्वसामानाधिकरण्येनापि वाच्यत्वविशिष्टाभाववदवृत्तित्वज्ञानानुदयात् तदानीमेव वाच्यत्वसाध्यकानुमित्यनुत्पादस्य केवलान्वयिखण्डनशब्दार्थता सम्भवति इति यदि ब्रूयात्तदाप्याह वस्तुतस्त्विति। अभावत्वविषयतेति अभावत्वावच्छिन्नविषयतामनन्तर्भाव्येत्यर्थः। साध्यतेति साध्यतावच्छेदकसम्बन्धादेरप्युपलक्षकम्। तथाच साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगितासम्बन्धेनेत्यर्थः पर्य्यवसितः। तेन समवायावच्छिन्नवह्नित्वावच्छिन्नप्रतियोगितासम्बन्धेन वह्निविशिष्टवदवृत्तित्वस्य धूमादौ दुरुपपादत्वेऽपि न क्षतिः, साध्यतावच्छेदकसंयोगसम्बन्धावच्छिन्नतादृशप्रतियोगितासम्बन्धेन वह्निविशिष्टवदवृत्तित्वस्य धूमादौ सत्त्वादिति ध्येयम्। यः साध्यीयः = यः साध्यविशिष्टः, तद्वदिति तदधिकरणनिरूपितवृत्तित्वाभावनिश्चय एवेत्यर्थः। एवकारात् तादृशप्रतियोगितासम्बन्धेन साध्यविशिष्टाभाववदवृत्तित्वज्ञानस्यानुमितिजनकत्वव्यवच्छेदः। लाघवादिति। अभावत्वावच्छिन्नविषयत्वाप्रवेशेनेत्यादिः। कारणमिति अनुमितीत्यादिः। उपसंहरति अभावत्वेति, अभावत्वव्यापकसाध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगित्वसम्बन्धावच्छिन्नवाच्यत्वाभावप्रतियोगिकस्वरूपसम्बन्धेनेत्यर्थः। तादृशेति साध्यतावच्छेदकावच्छिन्नप्रतियोगित्वसम्ब-

जागदीशी

साध्यीयत्वाभावभ्रमे सत्यपि तादृशज्ञानोत्पत्तौ बाधकाभावः, धर्मितावच्छेदकविशेषान्तर्भावेणैव बाधबुद्धेर्विरोधित्वात् । यत्तु साध्यतावच्छेदकधर्मेण साध्यतावच्छेदसम्बन्धेन च अवच्छिन्नं यत् प्रतियोगित्वमखण्डं तत्सम्बन्धेन अभावे साध्यवैशिष्ट्यावगाहिन एव

नारायणी

न्वेनेत्यर्थः। साध्यीयत्वेति वाच्यत्वाभावभ्रमे सत्यपीत्यर्थः । तादृशेति साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगितासम्बन्धेनवाच्यत्वविशिष्टवदवृत्तित्वज्ञानस्योत्पत्तावित्यर्थः । बाधकाभाव इति अभावत्वावच्छेदेन प्रतियोगितासंसर्गकवाच्यत्वाभावनिश्चयस्याभावत्वावच्छिन्नविशेष्यकप्रतियोगितासंसर्गकवाच्यत्वप्रकारकबुद्धावेव प्रतिबन्धकतया निर्धर्मितावच्छेदकाभावनिष्ठविशेष्यताकप्रतियोगितासम्बन्धेन वाच्यत्वविशिष्टबुद्धौ तस्याप्रतिबन्धकतया तदानीं वाच्यत्वविशिष्टवदवृत्तित्वज्ञानोत्पत्तिर्निराबाधैवेति कारणसत्त्वे अवश्यं वाच्यत्वसाध्यकानुमित्युत्पादो भवतीति भावः। धर्मितेति किञ्चिद्धर्मावच्छिन्नविशेष्यताकबुद्धिं प्रत्येव बाधबुद्धेः=प्रतियोगितासम्बन्धेनाभावत्वावच्छेदेन वाच्यत्वाभावनिश्चयरूपबाधनिश्चयस्य । विरोधित्वात्=प्रतिबन्धकत्वात्, नतु निर्धर्मितावच्छेदकबुद्धौ बाधबुद्धेः विरोधित्वमिति शेषः। प्रकारान्तरेण केवलान्वयिखण्डनपदार्थतां व्याचक्षाणानां केषाञ्चिन्मतं दूषयितुमुपन्यस्यति यत्त्विति। साध्यतेति त्यादि साध्यतावच्छेदकीभूतधर्मावच्छिन्नसाध्यतावच्छेदकसम्बन्धावच्छिन्नत्वविशिष्टं यत्प्रतियोगित्वमखण्डमित्यर्थः। तत्सम्बन्धेनेत्यादि । तादृशाखण्डप्रतियोगित्वसम्बन्धेन साध्यविशिष्टो योऽभावस्तदवगाहिन एवेत्यर्थः। साध्याभावेति तादृशसंसर्गक साध्यविशिष्टाभावाधिकरणनिरूपितवृत्तित्वाभावनि-

दीधिति

साध्याभाववदवृत्तित्वज्ञानस्य अनुमितिहेतुत्वं लाघवात् न तु साध्यतावच्छेदकधर्मावच्छेद्यत्वं प्रतियोगित्वञ्च विशेष्यविशेषणभावापन्नमवगाहमानस्य साध्याभाववदवृत्तित्वज्ञानस्य तथात्वं गौरवात्। तथाच स्वरूपसम्बन्धेन वाच्यत्वत्वाद्यवच्छिन्नप्रतियोगिताव्यक्ते-

नारायणी

श्चयस्येत्यर्थः। अनुमितिहेतुत्वं = साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नविधेयताकानुमितिकारणत्वम्। लाघवादिति अखण्डतादृशप्रतियोगित्वसंसर्गविषयतायाः संसर्गानवच्छिन्नतया संसर्गानवच्छिन्नयास्तस्याः कारणतावच्छेदककोटौ प्रवेशेन लाघवमित्याशयः।

किमपेक्ष्य लाघवमित्याकाङ्क्षायामाह नत्वित्यादि। साध्यतावच्छेदकधर्मावच्छेद्यत्वं विशेषणम्, प्रतियोगित्वञ्च विशेष्यीभूतमिति तादृशविशेषणत्वविशेष्यत्वविशिष्टं तादृशावच्छेद्यत्वं प्रतियोगित्वञ्चावगाहमानस्य साध्याभाववदवृत्तित्वनिश्चयस्येत्यर्थः तथात्वं = तादृशानुमितिजनकत्वम् नत्विति पर्वेण सम्बन्धः। निषेधे हेतुमाह गौरवादिति तथाच साध्यतावच्छेदकधर्मावच्छेद्यत्वस्य प्रतियोगिताविशेषणत्वे विशेषणतायाः सम्बन्धावच्छिन्नतया तादृशावच्छेद्यत्वनिष्ठविषयतायाः स्वरूपसम्बन्धावच्छिन्नायाः कारणतावच्छेदककोटौ प्रवेशनीयतया गौरवात् लाघवात् सम्बन्धानवच्छिन्नाखण्डसाध्यतावच्छेदकधर्मावच्छिन्नसाध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगित्वरूपसंसर्गविषयतायाः कारणतावच्छेदककोटौ निवेशस्यैव युक्तत्वादिति भावः।

उपसंहरति तथा चेति स्वरूपसम्बन्धेनेत्यादि स्वरूपसम्बन्धावच्छिन्नवाच्यत्वत्वावच्छिन्नाखण्डप्रतियोगिताव्यक्तेरित्यर्थः। अलीक-

जागदीशी

रलीकतया तत्सम्बन्धेन अभावे वाच्यत्ववैशिष्ट्यावगाहिवाच्यत्वाद्य-भाववद्वृत्ति ज्ञेयत्वमित्याकारकज्ञानस्यापि अलीकत्वम्, असतः संसर्गस्यापि ख्यातिनिरासात् अतः कारणस्यैव बाधात् केवलान्व-

नारायणी

तथा = कुत्रापि तादृशसम्बन्धस्याप्रसिद्धतया। नच वाच्यत्वभेदीय-प्रतियोगितायां स्वरूपसम्बन्धावच्छिन्नत्वस्य भ्रमप्रसिद्धिरिति वाच्यम्, स्वरूपसम्बन्धावच्छिन्नत्वविशिष्टाया एव तादृशप्रतियोगिताया अप्रसि-द्धेरभिहितत्वात्। सिद्धान्तेऽलीकस्य ज्ञानविषयत्वानभ्युपगमादिति भावः। अभावे = अभावरूपधर्मिणि वाच्यत्ववैशिष्ट्येति तादृशसम्बन्धेन वाच्यत्ववान् योऽभावस्तदधिकरणावृत्तिज्ञेयत्वमित्याकारकनिश्चयस्ये-त्यर्थः। अलीकत्वमिति। सम्बन्धस्यालीकतया तादृशालीकसम्बन्धेन किञ्चित्पदार्थवैशिष्ट्यावगाहिज्ञानस्याप्यलीकत्वादित्याशयः।

नतु असत्यपि वस्तुनि ज्ञानविषयत्वं टीकाकारसम्मतं, तथाच तादृशसम्बन्धेनापि अभावे वाच्यत्ववैशिष्ट्यावगाहिवाच्यत्वविशिष्टा-भाववद्वृत्तित्वज्ञानं प्रसिद्धमित्यत आह असतः इत्यादि। अलीकस्य संसर्गस्येत्यर्थः। ख्यातिनिरासात् = ज्ञानविषयत्वनिरासात्, दीधितिकृतेति शेषः। तथाच ज्ञानविषयतात्वव्यापकत्वस्य सद्वृत्तित्वे व्यवस्थापनात्, असति ज्ञानविषयत्वमभ्युपगच्छतां मते असन्निष्ठज्ञानविषयतायाः पारमार्थिकतया असति अभावाधिकरणताया अपसिद्धान्तत्वेऽपि अस-द्वर्तमानज्ञानविषयतात्ववति सद्वृत्तित्वाभावसत्त्वेन ज्ञानविषयता-त्वव्यापकत्वस्य सद्वृत्तित्वे बाधात् ज्ञानविषयता सत्पदार्थ एव स्वीकरणीया इतितु परमार्थः।

कारणस्यैव = तादृशाखण्डप्रतियोगितासम्बन्धेन वाच्यत्वविशिष्टा-भाववद्वृत्तित्वज्ञानस्यैव। बाधात् = असत्त्वात् तत्सत्ताया एव वक्तुम-शक्यत्वादिति यावत् केवलान्वयीति वाच्यत्वादिविधेयताकानुमिते-

जागदीशी

यिसाध्यकानुमानस्य खण्डनमिति । तन्न । घटादिपक्षकवाच्यत्वाद्यनुमितेरानुभविकत्वेन वाच्यत्वत्वाद्यवच्छिन्नत्वं प्रतियोगित्वे प्रतियोगित्वञ्च अभावांशे संसर्गमर्यादया विषयीकुर्वाणस्यैव वाच्यत्वाभाववदवृत्तित्वज्ञानस्य अन्यथाख्यातिरूपस्य तत्र हेतुत्वसम्भवेन कारणबाधस्य असम्भवात् । साध्यादिभेदेन अनुमिति-

नारायणी

रित्यर्थः । खण्डनमिति कारणाभावात्तादृशानुमित्यनुत्पादस्यैव केवलान्वयिखण्डनशब्दार्थत्वं कल्पनीयमिति भावः ।

निरुक्तं मतं दूषयति तन्नेति घटो वाच्यत्ववानित्यनुमितेरनुव्यवसीयमानतया तस्या आनुभविकत्वेन वाच्यत्वत्वाद्यवच्छिन्नत्वं प्रतियोगित्वञ्च खण्डशः अभावांशे संसर्गतया भानस्यैवावश्यकतया अखण्डवाच्यत्वत्वावच्छिन्नप्रतियोगिताकत्वस्य संसर्गत्वमभ्युपगम्य केवलान्वखण्डनं न युक्तमित्याह घटादिपक्षकेति आदिना पटादिपक्षपरिग्रहः। आनुभविकत्वेन = अनुव्यवसीयमानत्वेन । वाच्यत्वत्वाद्यवच्छिन्नत्वमिति खण्डश इत्यादि । संसर्गेति = संसर्गत्वाभिन्नविषयीकुर्वाणस्येत्यर्थः। वाच्यतेति घटाद्यभावांशे खण्डशः वाच्यत्वत्वाद्यवच्छिन्नत्वप्रतियोगित्वरूपसम्बन्धेन वाच्यत्वाभाववदवृत्तीत्याकारकनिश्चयस्येत्यर्थः । अन्यथेति भ्रमरूपस्येत्यर्थः । तत्र = घटादिपक्षकवाच्यत्वसाध्यकानुमितौ हेतुत्वसम्भवेन = तादृशनिश्चयस्य कारणत्वानपायात्, कारणबाधस्य = तादृशानुमितिपूर्वकारणाभावस्य। असम्भवादिति तथाच घटो वाच्यत्ववानित्याकारकानुमितिर्यद्यवश्यमनुभवसिद्धा तदा तादृशानुमितिपूर्वं भ्रमात्मकस्यापि वाच्यत्वाभाववदवृत्तित्वज्ञानं क्लृप्तकारणीभूतमवश्यं कल्पनीयमिति अखण्डसम्बन्धमभ्युपगम्यानुमितिपूर्वं कारणाभावसम्पादनं न युक्तियुक्तमित्याशयः । कारणबाधासम्भवे युक्तिमाह साध्यादीति वह्न्यादिवाच्यत्वादिसाध्यभेदेनेत्यर्थः। अनुमितीति कार्यीभूतानु-

जागदीशी

व्याप्तिज्ञानयोः कार्य्यकारणभावभेदात् वह्न्याद्यनुमितौ वह्नित्वाद्यवच्छिन्नाखण्डप्रतियोगितासम्बन्धेन वह्न्याद्यभाववदवृत्तित्वज्ञानत्वेनैव हेतुतालाघवस्य वाच्यत्वादिसाध्यकस्थले अकिञ्चित्कर-

नारायणी

मिति कारणीभूतव्याप्तिनिश्चययोरित्यर्थः। कार्य्यकारणेति कार्य्यत्वकारणत्वयोर्भेदादित्यर्थः। वह्न्याद्यनुमितौ = व्यतिरेकिवह्न्यादिसाध्यकानुमितौ। अखण्डसम्बन्धं प्रदर्शयति वह्नित्वेति वह्नित्वाद्यवच्छिन्नसंयोगाद्यवच्छिन्नत्वविशिष्टप्रतियोगिताकत्वसम्बन्धेनेत्यर्थः। वह्नीयेति तादृशसम्बन्धेन वह्निविशिष्टो योऽभावस्तदधिकरणनिरूपितवृत्तित्वाभावनिश्चयत्वेनेत्यर्थः। हेतुता = अनुमितिकारणता। लाघवादिति तत्र वह्निसाध्यकाद्यनुमितौ खण्डशः वह्नित्वावच्छिन्नत्व-प्रतियोगित्वयोः विशेष्यविशेषणभावापन्नयोर्द्वयोः सम्बन्धत्वकल्पनामपेक्ष्याखण्डवह्नित्वाद्यवच्छिन्नप्रतियोगिताव्यक्तेरेकस्याः सम्बन्धत्वकल्पनायां लाघवमिति हृदयम्।

वाच्यत्वादिसाध्यकस्थले तु अखण्डसम्बन्धस्याप्रसिद्ध्या तादृशानुमित्युपपादनाय खण्डशः वाच्यत्वावच्छिन्नत्वप्रतियोगित्वयोः सम्बन्धत्वं स्वीकृत्य भ्रमात्मकवाच्यत्वाभाववदवृत्तित्वज्ञानं तादृशानुमितिजनकं वक्तव्यमित्याह वाच्यत्वादीति आदिना प्रमेयत्वादिपरिग्रहः। वाच्यत्वादिविधेयताकानुमितिस्थले इत्यर्थः। अकिञ्चित्करत्वादिति अखण्डसम्बन्धकल्पनाया इत्यादिः। यद्वा साध्यसाधनभेदेन कार्य्यकारणभावस्य भिन्नताया अवश्यं स्वीकरणीयतया वह्न्यादिविधेयकधूमादिलिङ्गकानुमितौ वह्नित्वाद्यवच्छिन्नत्वविशिष्टाखण्डप्रतियोगिताव्यक्तिसम्बन्धेन वह्निविशिष्टाभाववदवृत्तित्वज्ञानस्य हेतुत्वाभ्युपगमेऽपि वाच्यत्वादिसाध्यकज्ञेयत्वादिलिङ्गकानुमितौ ज्ञेयत्वादिव्यापकवाच्यत्वादिसामानाधिकरण्यज्ञानस्य हेतुत्व सम्भवेन वाच्यत्वसाध्यकानुमितिस्थले कारणबाधस्याकिञ्चित्करत्वमिति वा अकिञ्चित्करत्वादित्यस्य तात्पर्य्यम्।

जागदीशी

त्वात् । तस्मात् केवलान्वयिनो वाच्यत्वादेः साध्यविषयानुमित्यनुभवाभाव एव केवलान्वयिखण्डनपदार्थः । तदुक्तं दीधितिकारैः—न तु ज्ञेयत्वादिहेतुका तदनुमितिरनुभविकीति । एतेन साध्यादिभेदेन व्याप्तिज्ञानानुमित्योः कार्य्यकारणभावभेदात् वह्नि-विधेयकानुमितौ वह्न्यभाववदवृत्तित्वज्ञानस्य हेतुत्वेऽपि ज्ञेयत्वादिलिङ्गकवाच्यत्वादिसाध्यकानुमितौ ज्ञेयत्वादिव्यापकवाच्यत्वादिसामानाधिकरण्यधियः कारणत्वे बाधकाभावः, कार्य्यकारणभावा-

नारायणी

नन्वेवं केवलान्वयिखण्डनशब्दार्थं एव न सम्भवति इत्यत आह तस्मादिति केवलान्वयिनः=सर्वत्र वर्त्तमानस्य । वाच्यत्वादेरिति आदिपदात् प्रमेयत्वाभिधेयत्वादेः परिग्रहः । साध्यविषयेति साध्यनिष्ठविधेयताकानुमित्यनुव्यवसायाभाव एवेत्यर्थः । केवलान्वयीति केवलान्वयिखण्डनशब्दस्यार्थः पर्य्यवसितः, तेन केवलान्वयिखण्डनपर्यन्तस्य वाक्यतया तदर्थस्य पदार्थत्वासम्भवेऽपि न क्षतिः । केवलान्वयिवाच्यत्वसाध्यकानुमित्यनुव्यवसायाभावरूपतादृशानुमित्यनुभवाभावस्य केवलान्वयिखण्डनशब्दार्थत्वे दीधतिकारोक्तिमपि प्रमाणयति तदुक्तमिति केनेत्याकाङ्क्षायामाह दीधितिकारेणेति । ज्ञेयत्वादीति ज्ञेयत्वादिहेतुकानुमितिर्नानुव्यवसायविषयीभूता इति दीधितिकृताऽभिहितम् । एतेनेति केवलान्वयिखण्डनशब्दस्य केवलान्वयिसाध्यकानुमित्यनुभवाभावरूपार्थकत्वविवक्षणेनेत्यर्थः । साध्यादिभेदात्=वह्निवाच्यत्वादिसाध्यभेदात् । कार्य्यकारणेति कार्य्यकारणत्वयोर्भेदेन विभिन्नकार्य्यकारणभावकल्पनमियेत्यर्थः । वह्नीति वह्निमानित्यनुमिताविर्थः । ज्ञेयत्वादीति वाच्यं ज्ञेयत्वादित्यनुमितिस्थले इत्यर्थः।

भागवीशी

न्तरापत्तिभिया तदुपेक्षणे द्रव्यत्वादेरपि अनुमितिर्न स्यात्, द्रव्यत्वादिविधेयकानुमितिं प्रति द्रव्यत्वाद्यभाववदवृत्तित्वज्ञानस्य कारणतान्तरकल्पनाया गौरवात् इत्यस्यापि सुवचत्वात् इत्यपि निरस्तम्। द्रव्यत्वादिविधेयकानुमितेरानुभविकत्वेन तत्र कारणान्तरकल्पनस्य प्रामाणिकत्वात्। वाच्यत्वादिविधेयकानुमितेस्तु निष्प्रामाणिकत्वात् तत्र विशेषतःऽपि व्यापकसामानाधिकरण्याधयः कारणत्वस्य उन्मत्तमात्रकल्प्यत्वात्। अन्यथा निर्वह्निधर्मिकवह्नि-

नारायणी

विभिन्नकारणकल्पने यदि गौरवं तदाऽऽह तदुपेक्षणेति केवलं साध्याभाववदवृत्तित्वज्ञानस्यैवानुमितिहेतुत्वं यद्युच्येत तदा वह्न्यभाववदवृत्तित्वज्ञानस्य वह्निविधेयकानुमितौ हेतुत्वं स्याद्, द्रव्यत्वसाध्यकानुमितौ द्रव्यात्वभाववदवृत्तित्वज्ञानस्य कल्पनागौरवेण हेतुत्वं न स्यादिति द्रव्यत्वविधेयकानुमितिरेव नोत्पद्यते इत्याह द्रव्यत्वादिविधेयकेति। सुवचत्वादिति। द्रव्यत्वसाध्यकानुमितिस्थलेऽपि कारणबाधस्य वक्तुं शक्यत्वात् इति भावः। इत्यपि निरस्तमित्यत्र हेतुमाह द्रव्यत्वादीति। तथाच द्रव्यत्वसाध्यकानुमितिमानहमित्याकारकद्रव्यत्वसाध्यकानुमित्यनुभवस्य सर्ववादिसिद्धतया तत्र कारणान्तरकल्पनं सप्रामाणिकमेव। वाच्यत्वसाध्यकानुमित्यनुभवाभावेन तादृशानुमितौ भ्रमात्मकवाच्यत्वाभाववदवृत्तित्वज्ञानस्य हेतुव्यापकवाच्यत्वसामानाधिकरण्यज्ञानस्य वा हेतुत्वकल्पनं निष्प्रामाणिकमित्याशयवानाह व्यापकेति कारणत्वस्य क्लृप्तकारणत्वान्तरस्य। उन्मत्तेति वाच्यत्वसाध्यकानुमितिरूपफलस्यैव शशविषाणायमानतया तत्र कारणत्वकल्पनमुन्मत्तप्रलपितमिव प्रतिभातीति भावः। अन्यथा = अनुभवाविषयीभूताया अपि अनुमितेः स्वेच्छया कारणत्वकल्पने इत्यर्थः। निर्वह्नीति निर्वह्निर्वह्निमानित्याका-

दीधितिः

एवं साध्याभावव्यापकाभावप्रतियोगित्वमपि नानुमित्यौपयिकं, गौरवात् व्यभिचारज्ञानाविरोधित्वाच्च । वह्न्यु-

जागदीशी

विधेयकानुमितिमपि अङ्गीकृत्य तत्रापि निर्वह्निधर्मिकवह्निव्याप्य-धूमवत्तादिपरामर्शस्य हेतुतायाः कल्पनापत्तेरिति दिक् ।

केवलान्वयिनं निरस्य केवलव्यतिरेकिणं निरस्यति एवमिति । गौरवादित्यस्य साध्याभाववदवृत्तित्वज्ञानापेक्षया इत्यादिः । ननु

नारायणी

रिकामपि अनुमितिं स्वीकृत्येत्यर्थः । तत्रापि = निर्वह्निधर्मिकवह्निविधेयकानुमितावपि । निर्वह्निधर्मिकेति वह्निव्याप्यधूमवान् निर्वह्निरित्याकारकपरामर्शस्यापीत्यर्थः। हेतुतायाः = कारणान्तरतायाः। कल्पनापत्तेरिति। तथाच अनुमित्यनुव्यवसायाभावेऽपि यदि अनुव्यवसायपूर्वोत्पन्नज्ञानस्यानुमितित्वमङ्गीक्रियते तदा निर्वह्निर्वह्निमानित्यपि ज्ञानमनुमित्यात्मकं स्यात्। तादृशज्ञानात्पूर्वमपि अनुमितिकारणीभूतपरामर्शादेः कल्पनीयतत्पत्तेर्वारयितुमशक्यत्वादिति वाच्यत्वसाध्यकानुमित्यनुभवाभावे तादृशानुमितौ न कारणान्तरं कथमपि कल्पनीयमिति भाव इति दिक् । केवलव्यतिरेक्यनुमाननिरासं स्पष्टमति । गौरवादित्यस्येति साध्याभावव्यापकाभावप्रतियोगित्वज्ञानस्यानुमित्यजनकत्वं किमपेक्ष्य गौरवग्रस्तमित्याह साध्याभावेति तथाच साध्याभाववदवृत्तित्वज्ञानस्यानुमितिजनकत्वे जनकतावच्छेदकविषयताया अल्पपदार्थनिष्ठतया साध्याभावव्यापकाभावप्रतियोगित्वज्ञानस्यानुमितिजनकत्वे व्यापकताघटकत्वेनाधिकविषयतायाः कारणतावच्छेदकत्वकल्पनाया गुरुत्वात्। अल्पतरपदार्थनिष्ठविषयतायाः कारणतावच्छेदकत्वकल्पनमेव लघुतया युक्तमि-

दीधितिः

भावसमानाधिकरणाभावप्रतियोगी धूमाभाव इति ज्ञानं धूमा-
भावाभावत्वेन तत्र वह्न्यभावसामानाधिकरण्यबुद्धिं कदा

जागदीशी

साध्यवदन्यावृत्तित्वज्ञानस्येव व्यतिरेकव्याप्तिग्रहस्यापि व्यभि-
चारधीविरोधित्वेन अनुमितिहेतुत्वं साधनीयम् अत आह व्यभि-
चारेति । अविरोधं व्युत्पादयति वह्न्यभावेति । वह्न्यभाववति
धूमाभावो नास्तीति धीः अभावे धूमाभावप्रतियोगिकत्वावगाहिनी
धूमाभावेऽपि वह्न्यभाववदवृत्त्यभावप्रतियोगित्वमवगाहते इति

नारायणी

त्याशयः । व्यभिचारज्ञानाविरोधित्वादिति दीधितिमवतारयति साध्य-
वदन्येति साध्याभाववदवृत्तित्वज्ञानापेक्षया साध्याभाववदन्यावृत्ति-
त्वज्ञानस्य साध्यधर्मिविषयताकत्वेन गुरुत्वेऽपि साध्यवदन्यावृत्तित्व-
ज्ञानमवश्यमनुमितिजनकं व्यभिचारधीप्रतिबन्धकतावच्छेदकविषय-
ताकज्ञानत्वात् इत्याकारकानुमानाद् यथा साध्यवदन्यावृत्तित्व-
ग्रहस्यापि अनुमितिजनकत्वं सेत्स्यति तथा साध्याभावव्यापका-
भावप्रतियोगित्वज्ञानमनुमितिजनकं व्यभिचारधीप्रतिबन्धकत्वात्
साध्यवदन्यावृत्तित्वज्ञानवत् इत्याकारकानुमानाद् व्यतिरेकव्याप्ति-
ज्ञानेऽपि अनुमितिजनकत्वं साधनीयम् इत्येवमाशङ्क्य व्यतिरेकव्याप्ति-
ज्ञानस्य व्यभिचारधीविरोधित्वं दीधितिकृता निरसितं प्रदर्शयति
वह्न्यभाववतीति वह्न्यभावाधिकरणे इत्यर्थः। धूमेति धूमत्वावच्छिन्नप्र-
तियोगिताकाभावो नास्तीत्याकारकं ज्ञानमित्यर्थः । अभावे = धूमाभावा-
भावे । धूमाभावे तु धूमाभावत्वावच्छिन्नप्रतियोगिकत्वावगाहिनीत्यर्थः।
वह्न्यभावेति वह्न्यभावाधिकरणावृत्त्यभावप्रतियोगित्वं विषयीकरोती-
त्यर्थः। इति = इतिहेतोः, तस्या एव = वह्न्यभाववति धूमाभावो नास्तीत्या-

दीधितिः

चिद्विरुन्ध्यात् न तु धूमत्वेन, भिन्नप्रकारकत्वात् । व्यतिरेकव्याप्तिग्रहाधीना च धीर्नानुमितिस्तत्त्वेनाननुभवात्, क्लृप्त-

जागदीशी

तस्या एव विरोधिविषयकत्वमात्रेण व्यतिरेकव्याप्तिग्रहे कदाचित् प्रतिबन्धकत्वमुचितम् । वस्तुतस्तु तदप्ययुक्तम्, संसर्गविधया

नारायणी

कारकधिय एव । विरोधिविषयकत्वमात्रेण = प्रतिबन्धकतावच्छेदकविषयताकत्वमात्रेण, मात्रपदाद् व्यभिचारधीप्रतिबन्धकतानवच्छेदकविषयतान्यवच्छेदः। व्यतिरेकेति (वह्न्यभावव्यापकाभावप्रतियोगित्वरूपव्याप्तिग्रहे इत्यर्थः। कदाचिदित्यभिधानप्रयोजनं स्वयमेवाग्रे वस्तुतस्त्वित्यादिना प्रदर्शितमादरणीयम् । प्रतिबन्धकत्वमुचितमिति । अयंभावः = धूमाभावे वह्न्यभावव्यापकत्वंहि वह्न्यभावाधिकरणनिष्ठाभावाप्रतियोगित्वरूपम्, तादृशाप्रतियोगित्वनिश्चयस्तु धूमाभावे वह्न्यभाववद्वृत्तिधूमाभावाभावः इत्याकारकबुद्धिं प्रति कथञ्चित्प्रतिबन्धकः सम्भवति, वह्न्यभाववद्वृत्तिर्धूमाभावाभावः इत्याकारकव्यभिचारग्रहस्य धूमाभावे प्रतियोगित्वमवगाहमानतया तादृशप्रतियोगिताशालिबुद्धौ धूमाभावनिष्ठवह्न्यभाववद्वृत्त्यभावाप्रतियोगित्वग्रहस्य तदभावनिश्चयविधया प्रतिबन्धकत्वं कथञ्चिद् युक्तम्, व्यभिचारग्रहस्तु वह्न्यभाववद्वृत्तिधूम इत्याकारक एव, तत्र धूमाभावे वह्न्यभाववद्वृत्त्यभावप्रतियोगित्वस्यानवगाहनात् हेत्वभावे साध्याभावव्यापकताघटितव्यतिरेकव्याप्तिग्रहस्य व्यभिचारधीविरोधित्वं कथमपि न सम्भवतीति ।

ननु धूमाभावाभावो वह्न्यभाववद्वृत्तिरित्याकारकव्यभिचारग्रहस्योपादानेऽपि व्यतिरेकव्याप्तिग्रहस्य तादृशव्यभिचारधीविरोधित्वं

जागदीशी

प्रतियोगित्वग्रहे प्रतियोगित्वाभावप्रकारिकाया व्यतिरेकव्याप्तिधियो विरोधित्वासम्भवात् । वह्न्यभाववति धूम इत्येवं व्यभिचारग्रहे तु व्यतिरेकव्याप्तिग्रहस्य विरोधित्वं सुदूरपराहतम् । वस्तु-

नारायणी

कथमपि न सम्भवति धूमाभावाभावः वह्न्यभाववद्वृत्तिरित्याकारकग्रहे धूमाभावस्य प्रतियोगितासंसर्गेणैव धूमाभावाभावे विशेषणतया तत्प्रकारकबुद्धिं प्रत्येव तदभावनिश्चयस्य प्रतिबन्धकतया वह्न्यभाववद्वृत्त्यभावप्रतियोगित्वाभावप्रकारकधूमाभावविशेष्यकनिश्चयस्य धूमाभावनिष्ठप्रतियोगित्वसंसर्गावगाहिबुद्ध्यप्रतिबन्धकत्वात् इत्याह वस्तुतस्त्वति । तदप्ययुक्तमिति । धूमाभावाभावः वह्न्यभाववद्वृत्तिरित्याकारकव्यभिचारग्रहं प्रति वह्न्यभावव्यापकाभावप्रतियोगित्वग्रहस्य वह्न्यभावाधिकरणनिष्ठाभावप्रतियोगित्वाभावप्रकारकधूमाभावविशेष्यकनिश्चयरूपस्य प्रतिबन्धकत्वव्यवस्थापनमप्ययुक्तमित्यर्थः । संसर्गविधयेति धूमत्वावच्छिन्नाभावत्वावच्छिन्नप्रतियोगित्वसंसर्गात्मकप्रतियोगित्वविषयकधूमाभावाभावो वह्न्यभाववद्वृत्तिरित्याकारकव्यभिचारग्रहे इत्यर्थः। प्रतियोगित्वेति वह्न्यभावाधिकरणवृत्त्यभावप्रतियोगितात्वावच्छिन्नाभावप्रकारिकाया वह्न्यभावव्यापकाभावप्रतियोगित्वरूपव्यतिरेकव्याप्तिनिश्चयस्येत्यर्थः । विरोधित्वासम्भवादिति । प्रतियोगित्वसंसर्गग्रहे प्रतियोगित्वाभावप्रकारकनिश्चयस्य प्रतिबन्धकत्वे मानाभावादिति हृदयम् ।

ननु वह्न्यभाववद्वृत्तिर्धूमः इत्याकारकव्यभिचारग्रहप्रतिबन्धकत्वेनैव व्यतिरेकव्याप्तिनिश्चयस्यानुमितिहेतुत्वं साधनीयमित्यत आह-वह्न्यभाववतीत्यादि वह्न्यभावाधिकरणवृत्तिधूम इत्येवं व्यभिचारग्रहस्योपादानेत्वित्यर्थः। व्यतिरेकेति वह्न्यभावव्यापकाभावप्रतियोगित्वग्रहस्य । विरोधित्वंप्रतिबन्धकत्वम् । सुदूरपराहतमिति । अधिकमभिहितं प्राक् ।

### जागदीशी

गत्या धूमाभावाभावात्मकस्य धूमस्य विषयत्वेऽपि धूमाभावाभावत्वेन अप्रकारत्वादित्यखण्डनार्थः। ननु व्यतिरेकव्याप्तिग्रहोत्तरं जायमानबुद्धेः प्रत्यक्षादिभिन्नानुभवत्वेन अनुमितित्वसिद्धौ अनायत्या व्यतिरेकव्याप्तिज्ञानस्य हेतुत्वं सेत्स्यतीति अतस्तत्रैव बाधकमाह

### नारायणी

ननु धूमस्यापि धूमाभावाभावात्मकतया निरुक्तधूमधर्मिकव्यभिचारग्रहस्यापि धूमाभावनिष्ठप्रतियोगित्वावगाहित्वात् निरुक्तव्यभिचारग्रहं प्रत्यपि धूमाभावे वह्न्यभाववन्निष्ठाभावाप्रतियोगित्वावगाहिव्यतिरेकव्याप्तिग्रहस्य प्रतिबन्धकत्वं सुवचं स्यात्, न स्यात् इत्याह धूमाभावेति धूमाभावाभावरूपस्येत्यर्थः। धूमस्येति व्यभिचारग्रहविशेष्यीभूतस्य धूमत्वावच्छिन्नस्येत्यर्थः। तत्र = वह्न्यभाववद्वृत्तिर्धूम इत्याकारकव्यभिचारग्रहविषयत्वेऽपि = विषयितया विशेषणत्वेऽपि। धूमाभावत्वावच्छिन्नप्रतियोगिताकाभावत्वेन अप्रकारत्वात् = अविषयत्वात्। इत्यखण्डनार्थः = इति सम्पूर्णग्रन्थतात्पर्य्यम्। नन्विति। व्यतिरेकेति साध्याभावव्यापकाभावप्रतियोगी हेतुरित्याकारकव्यतिरेकव्याप्तिग्रहोत्तरजायमानाया बुद्धेरित्यर्थः। प्रत्यक्षादिभिन्नत्वेन = प्रत्यक्षोपमितिशाब्दबोधादिभिन्नत्वेन। अनुमितित्वसिद्धेति तथाच व्यतिरेकव्याप्तिग्रहोत्तरजायमाना धीरवश्यमनुमितिर्भवितुमर्हति, प्रत्यक्षादिभिन्नत्वादित्यनुमानात्तादृशव्याप्तिग्रहोत्तरजायमानज्ञानस्यानुमितित्वसिद्धेरावश्यकत्वात्तादृशानुमितिं प्रति व्यतिरेकव्याप्तिज्ञानस्यैवानुमितिजनकत्वं निराबाधमिति भावः। तत्रैव = व्यतिरेकव्याप्तिग्रहोत्तरजायमानबुद्धेरनुमितित्वे एव। बाधकम = तादृशबुद्धावनुमितित्वाभावसाधकम्। आहेति दीधितिकार इति शेषः। तथाच व्यतिरेकव्याप्तिग्रहोत्तरजायमाना धीः नानुमितिः तत्त्वेनाननुव्यवसीयमानत्वात्, इत्याकारकानुमानादेव व्यतिरेकव्याप्ति-

दीधितिः

कारणाभावात्,सामग्रीभेदकल्पनायाश्चानुभवैकाधीनत्वात् ।

जागदीशी

व्यतिरेकेत्यादि । तत्त्वेन अनुमितित्वेन । क्रमिकानुमितिव्यक्तिपूर्वपूर्वानुमितौ परमते स्वमतेऽपि प्रवृत्तिजनकानुमितौ च व्यभिचारात् हेत्वन्तरमाह क्लृप्तेति । सामग्रीति । क्वचित् साध्याभावव-

नारायणी

ग्रहोत्तरजायमानायां बुद्धौ अनुमितित्वाभावः सेत्स्यतीति भावः । तत्त्वेनेत्यस्य व्याख्यामाह अनुमितित्वेनेति ।

ननु अनुमितिधारामङ्गीकुर्वतां प्रभाकराणां मतेऽनुमितित्रयस्थले पूर्वपूर्वानुमितौ अनुमितित्वेनाननुव्यवसीयमानत्वहेतोः सत्त्वात् तत्रानुमितित्वाभावरूपसाध्यस्यासत्त्वेन व्यभिचारः, एवं दीधितिकारमतेऽपि यादृश्या अनुमितिव्यक्तेरुत्तरकालं प्रवृत्तिरेवोत्पद्यते नतु अनुमितित्वेनानुव्यवसायः तादृशानुमितिव्यक्तावपि अनुमितित्वेनाननुव्यवसीयमानत्वरूपहेतोः सत्त्वात्तत्रानुमितित्वाभावरूपसाध्यविरहेण व्यभिचारो दुर्वार इत्याशङ्क्य दीधितिकारस्य हेत्वन्तराभिधानप्रयोजनं प्रदर्शयति क्रमिकानुमितीति । क्रमादुत्पद्यमानानुमितिव्यक्तिषु मध्ये पूर्वपूर्वानुमितावित्यर्थः । परमते = प्रभाकराणां मते पक्षताया अनुमितिहेतुत्वमनङ्गीकुर्वतां नव्यनैयायिकानां मतेऽपिवा, स्वमतेऽपि = दीधितिकारमतेऽपि प्रवृत्तिजनकेति यस्या अनुमितिव्यक्तेरुत्तरकालं प्रवृत्तिरेवोत्पद्यते नतु अनुमितित्वेनानुव्यवसायस्तादृश्यामनुमितिव्यक्तावित्यर्थः । व्यभिचारात् = व्यभिचारस्य वारयितुमशक्यत्वात् । हेत्वन्तरेति क्लृप्तकारणाभावादित्याकारकहेत्वन्तरादित्यर्थः । तथाच व्यतिरेकव्याप्तिज्ञानजन्यं ज्ञानं नानुमितिः, क्लृप्तानुमितिकारणीभूतसाध्याभाववृत्तित्वरूपव्याप्तिज्ञानानुत्तरत्वादित्यनुमानेनैव व्यतिरेकव्याप्तिज्ञानोत्तरज्ञानेऽनुमितित्वाभावः साधनीयः । दीधितौ सामग्रीति । साध्याभाववदवृत्तित्वज्ञानातिरिक्तव्यतिरेक-

दीधितिः

किन्तु विजातीया। तत्करणमपि प्रमाणान्तरमर्थापत्तिरेव।

जागदीशी

दवृत्तित्वज्ञानं क्वचित् व्यतिरेकव्याप्तेर्ज्ञानं हेतुरित्येवं कल्पनायाः फलीभूतज्ञाने अनुमितित्वानुभवाधीनत्वात् तस्य च प्रकृते अभावादिति भावः। विजातीयेति। धीरित्यनुषज्यते। वैजात्यम्—अर्थापयामि नानुमिनोमि इत्यनुभवादेव सिद्धम्। व्यतिरेक-

नारायणी

व्याप्तिज्ञानस्यानुमितिकारणत्वकल्पनायाश्चेत्यर्थः। अनुभवैकाधीनत्वात् = व्यतिरेकव्याप्तिज्ञानोत्तरजायमानज्ञानेऽनुमितित्वेनानुव्यवसायाधीनत्वादित्यर्थः। निरुक्तग्रन्थस्य भावमाह टीकायां क्वचिदिति कुत्रचित् स्थले व्यतिरेकेति साध्याभावव्यापकाभावप्रतियोगित्वरूपव्याप्तेरित्यर्थः। ज्ञानं निश्चयः। हेतुरिति अनुमितीत्यादिः। फलीभूतेति व्यतिरेकव्याप्तिज्ञानोत्तरजायमानज्ञानेऽनुमितित्वेनानुव्यवसायाधीनत्वादित्यर्थः। तस्य चेति तादृशानुव्यवसायस्य चेत्यर्थः। प्रकृते = व्यतिरेकव्याप्तिज्ञानोत्तरजायमानज्ञाने। अभावात् = अनुमितित्वेनानुव्यवसीयमानत्वस्यासत्वात् इति दिक्।

विजातीयेति दीधितिं व्याचष्टे इत्यनुषज्यत इति। तथाच व्यतिरेकव्याप्तिज्ञानोत्तरजायमानं ज्ञानमनुमितिविजातीयार्थापत्तिरेवेति भावः। ननु तादृशज्ञानस्यार्थापत्तित्वे किं मानमित्यत आह अर्थापयामीति व्यतिरेकव्याप्तिज्ञानोत्तरजायमानज्ञानाधीनः अर्थापयामीत्यनुव्यवसाय एव भवति नत्वनुमिनोमीत्याह नानुमिनोमीति नानुमिनोमीत्याकारकानुव्यवसायादेरसिद्धत्वमित्याशयः।

ननु व्यतिरेकव्याप्तिग्रहजन्यतावच्छेदकं प्रत्यक्षाभिन्नानुभवत्वमेव स्यात् न स्यात् इत्याह व्यतिरेकेति साध्याभावव्यापकाभावप्रतियोगित्व-

दीधितिः

क्लृप्तप्रमाणद्वयसमाहारसमशीलञ्च युगपदन्वयव्यतिरेकिधर्म-

जागदीशी

व्याप्तिग्रहस्य जन्यतावच्छेदकत्वेनैव तत्सिद्धिः प्रत्यक्षादि-भिन्नानुभवत्वस्य तथात्वे गौरवादित्यपि वदन्ति। नन्वेवं

नारायणी

ग्रहजन्यतावच्छेदकत्वेनैव तद्ग्रहोत्तरजायमानज्ञानस्यार्थापत्तित्वसिद्धि-रित्यर्थः। प्रत्यक्षादिभिन्नानुभवत्वस्य तज्जन्यतावच्छेदकत्वं तु गौरवज्ञान-प्रतिबन्धकतयैव न कल्पनीयमित्याह तथात्वे इति तादृशग्रहजन्यता-वच्छेदकत्वे इत्यर्थः। गौरवात् = जन्यतावच्छेदकस्य गुरुशरीरत्वात्। वदन्तीति। अर्थापत्तित्वस्यानुपपत्तिज्ञानजन्यज्ञानत्व रूपस्य प्रत्य-क्षादिभिन्नानुभवत्वापेक्षया लघुशरीरत्वासम्भवात् वदन्तीत्युक्तमिति ध्येयम्।

अथ यादृशस्थले वह्न्यभाववदवृत्तिमान् पक्षः वह्न्यभावव्यापका-भावप्रतियोगिधूमवांश्च पक्षः इत्याकारकक्रमिकपरामर्शयोः समूहा-लम्बनपरामर्शस्य वा सत्त्वदशायामुत्तरकालं जायमानवह्निज्ञानेऽनुमि-तित्वार्थापत्तित्वयोर्द्वयोरभ्युपगमेऽर्थापत्तित्वानुमितित्वयोः सङ्करप्रसङ्ग इत्यत आह दीधितौ क्लृप्तप्रमाणेति क्लृप्तयोः शब्दानुमानप्रमाणयो-र्द्वयोः समाहारस्य = मेलनस्य। समशीलं = समानस्वभावं। किमित्याकां-क्षायामाह युगपदिति एककालावच्छेदेनान्वयिहेतुव्यतिरेकिहेतुद्वयोः परामर्शात्मकप्रतिसन्धानं निश्चयरूपं ज्ञातव्यमिति शेषः।

अयमाशयः; यथा प्रत्यक्षानुमितिसामग्र्योः शाब्दबोधानुमितिसाम-ग्र्यो र्वा युगपत्सत्त्वदशायां एकस्या एव सामग्र्याः फलमुत्पद्यते इति अ-परसामग्र्याः फलं प्रति यत्सामग्र्याः फलमुत्पद्यते तस्याः प्रतिबन्धकत्वं तथाऽर्थापत्तिसामग्री–अनुमितिसामग्र्योः समवधानदशायामेकस्या एव

जागदीशी

साध्याभाववदवृत्तित्वस्य व्यतिरेकव्याप्तेश्च युगपत् परामर्शे अनुमित्यर्थापत्त्योः सङ्करः स्यात् अत आह क्लृप्तप्रमाणेति । तथाच प्रत्यक्षानुमित्योर्युगपत् सामग्रीसमवधाने यथानुभवसिद्धं तदेकतरसामग्र्या अपरप्रतिबन्धकत्वं तथैव प्रकृतेऽपि वाच्यम् । यद्वा परैः

नारायणी

फलं तत्सामग्र्या एवापरसामग्रीफलप्रतिबन्धकत्वं कल्पनीयम्, फलसन्देहे यस्य फलस्य सामग्री गुरुशरीरा तस्या एव फलमुत्पद्यते तथा च तदानीमर्थापत्तिरेव भवति न त्वनुमितिः, भिन्नविषयक एवानुमितिसामग्र्याः सर्वतो बलवत्त्वात् इति ।

टीकायां साध्याभावेति क्लृप्तानुमितिकारणीभूतवह्न्यभाववदवृत्तिमान् पर्वत इत्याकारकस्य वह्न्यभावव्यापकाभावप्रतियोगिधूमवाँश्च पर्वत इत्याकारकयुगपत्परामर्शे इत्यर्थः । सङ्कर इति अनुमितित्वाभाववति केवलव्यतिरेकपरामर्शाधीनार्थापत्तौ अर्थापत्तित्वम्, अर्थापत्तित्वाभाववति च केवलसाध्याभाववदवृत्तिमत्पक्षनिश्चयोत्तरजायमानानुमितौ अनुमितित्वं, द्वयोः समावेशस्तु अन्वयव्यतिरेकपरामर्शोत्तरजायमानज्ञाने इति सङ्कर इत्यर्थः । तथाच साङ्कर्यादर्थापत्तित्वानुमितित्वयोर्जातित्वं न स्यादिति भावः । क्लृप्तेत्यादेर्भावमाह तथा चेति समवधाने = प्रत्यक्षानुमितिसामग्र्योः युगपत्सत्त्वदशायां । अनुभवसिद्धमिति सर्वेषामित्यादिः । एकतरसामग्र्याः = प्रत्यक्षादिसामग्र्याः अपरप्रतिबन्धकत्वम् = अनुमितिप्रतिबन्धकत्वम् । समानविषयकप्रत्यक्षसामग्र्याः सर्वतो बलवत्त्वादिति हृदयम् । प्रकृतेऽपि । वाच्यमिति । अनुमितीच्छाविरहविशिष्टाया अर्थापत्तिसामग्र्याः समानविषयकानुमितिप्रतिबन्धकत्वमिति युगपत्समानविषयकार्थापत्ति-अनुमितिसामग्र्योः सत्त्वदशायामनुमित्साया असत्त्वेऽर्थापत्तिरेव भवति-नत्वनुमितिरिति नार्थापत्तित्वानुमितित्वयोः सङ्करप्रसङ्ग इति भावः ।

भागवीशी

ज्ञानद्वययौगपद्यस्य अङ्गीकारात् विजातीयज्ञानद्वयमेव तत्र उत्पद्यते इत्याशयः । नातः प्रतिबन्धकभावान्तरकल्पनागौरवमपीति भावः ।

नारायणी

ननु युगपदन्वयव्यतिरेकपरामर्शसत्त्वदशायामनुमितिस्थानापन्नाया अर्थापत्तेरुत्पादः सन्दिग्धः, अनुमितिसामग्र्या अपि फलजननसम्भवात्, सामग्र्या लघुत्वगुरुत्वस्यापि सन्दिग्धत्वादित्यत आह–यद्वेति । परैः मीमांसकैः नव्यनैयायिकैर्वा, ज्ञानयौगपद्यस्य = युगपज्ज्ञानद्वयोत्पादस्य । अङ्गीकारात् = स्वीकरणीयत्वात् । विजातीयमर्थापत्त्यनुमितिरूपज्ञानद्वयमेव, एवकारात्केवलार्थापत्त्युत्पत्तेः केवलानुमित्युत्पत्तेर्व्यवच्छेदः । तत्र = युगपदन्वयव्यतिरेकपरामर्शद्वयसमवधानकाले, उत्पद्यत इति ज्ञानद्वयमिति पूर्वेण सम्बन्धः। नातः = निरुक्तज्ञानद्वयोत्पादात्। नेति प्रतिबध्यप्रतिबन्धकभावेन सह सम्बन्धः, तथाच युगपदन्वयव्यतिरेकपरामर्शसत्त्वदशायां यदि युगपदेवार्थापत्तिरनुमितिश्चोत्पद्यते तदाऽर्थापत्तीच्छाविरहविशिष्टानुमितिसामग्र्या अर्थापत्तौ अनुमितीच्छाविरहविशिष्टार्थापत्तिसामग्र्याश्चानुमितौ प्रतिबन्धकत्वकल्पनं कदापि न सम्भवतीत्याशयः ।

अथ यदा पीनोऽयं बटुर्दिवा न भुङ्क्ते इत्यादिवाक्यश्रवणकाले बटौ भोजनप्रकारकनिश्चयो वर्त्तते तदा भोजनाभावव्यापकाभावप्रतियोगिपीनत्वरूपानुपपद्यज्ञानसत्त्वेऽपि रात्रिभोजनकल्पनारूपार्थापत्तिर्न सम्भवति, भोजननिश्चयस्यैव सिद्धिरूपतया तस्यापि अर्थापत्तिप्रतिबन्धकत्वात् । रात्रिभोजनकल्पना जायतामितीच्छासत्त्वे तु पुनरर्थापत्तिरुत्पद्यते इति इच्छाविरहविशिष्टसिद्ध्यभावस्य पक्षतारूपस्यार्थापत्तौ जनकतया व्यतिरेकव्याप्तिज्ञानजन्यज्ञानमनुमितिः पक्षताजन्यत्वात् अन्वयव्याप्तिज्ञानजन्यानुमितिवत् इत्यनुमानाद् यथोक्तकल्पनायाः पक्षताजन्यत्वेनानुमितित्वसिद्धौ कुतः अर्थापत्तेः प्रमाणान्तरत्वमित्याशङ्कते

दीधितिः

द्वयप्रतिसन्धानम् । अथ निर्णीते विना सिद्धीच्छामर्थापत्ते-रनुत्पादात् पक्षताजन्यत्वात् साप्यनुमितिर्लाघवेन पक्षताजन्यत्वस्यैवानुमितित्वे प्रयोजकत्वात् । न चैवं पक्षताप्रत्यक्ष-

जागदीशी

तत्रानुमितित्वमाशङ्कते अथेति । निर्णीत इति सिद्धिसत्त्व इत्यर्थः । अनुत्पादादिति पक्षताजन्यत्वे हेतुः । सापि अर्थापत्तिरपि । लाघवेनेति । अन्वयपरामर्शसहितपक्षताजन्यत्वापेक्षया इत्या-

नारायणी

दीधितौ अथ निर्णीते इति बटौ भोजनादिनिर्णयसत्त्वदशायामित्यर्थः। विना सिद्धीच्छां = भोजननिश्चयो जायतामित्याकारकेच्छां विना अर्थापत्तेः = अनुपपद्यज्ञानाधीनोपपादककल्पनाया अनुत्पादात् = उत्पत्तेरदर्शनात् पक्षताजन्यत्वात् = तादृशकल्पनेच्छाविरहविशिष्टसिद्ध्यभावजन्यत्वात् । साऽपि = अर्थापत्तिरपि। अनुमितिः = अनुमितित्वजातिमती। लाघवेन = लघुशरीरीभूतहेतुना पक्षताजन्यत्वस्यैव = तादृशसिद्ध्यभावजन्यत्वस्यैव। अनुमितित्वेत अनुमितित्वसाधकत्वादित्यर्थः।

अनुत्पादादिति। पञ्चम्यन्ताभिधानप्रयोजनमाह टीकायां पक्षतेति अर्थापत्तित्वेनाभिमतं ज्ञानमवश्यं पक्षताजन्यम् सिद्धिसहकृतानुपपद्यज्ञानोत्तरकालीनोत्पत्तिसंसर्गावच्छिन्नाभावप्रतियोगित्वात् इत्याकारकानुत्पादहेतुकपक्षताजन्यत्वमर्थापत्तौ साधनीयमित्याह अनुत्पादादिति। पक्षताजन्यत्वे हेतुरिति पक्षताजन्यत्वस्यानुमितित्वसाधकत्वे लाघवं प्रदर्शयति अन्वयेति तथाच इदं ज्ञानमनुमितिः = अन्वयपरामर्शजन्यत्वात् इत्यादिरीत्याऽन्वयपरामर्शजन्यत्वस्यानुमितित्वसाधकत्वाभ्युपगमे हेतोर्गुरुशरीरतया पक्षताजन्यत्वमेवानुमितित्वसाधकं वक्तव्यमित्या-

जागदीशी

दिः। एवं पक्षताजन्यत्वमात्रस्य प्रयोजकत्वे। समवायसम्बन्धावच्छिन्नस्यैव पक्षताजन्यत्वस्य प्रयोजकत्वोक्त्या पक्षताजन्यत्वस्य वार-

नारायणी

शयः। न चैवमित्यादिदीधितिघटक–एवमित्यस्यार्थमाह पक्षताजन्यत्वमात्रस्येति व्यतिरेकव्याप्तिज्ञानाधीनज्ञानेऽनुमितित्वसाधकताया पक्षताजन्यत्वेऽभ्युपगमे इत्यर्थः। तथाच पक्षताजन्यत्वस्य पक्षताप्रत्यक्षेऽपि सत्त्वात् तत्रानुमितित्वविरहेण व्यभिचारात्पक्षताजन्यत्वं कुतोऽनुमितित्वसाधकमिति दीधितिकारस्य शङ्काभिप्रायः।

ननु पक्षतायाः प्रत्यक्षत्वमेवासम्भवि इत्यभिधाय निरुक्तव्यभिचारवारणं दीधितिकृतामसङ्गतं पक्षतानिष्ठजनकतानिरूपितसमवायसम्बन्धावच्छिन्नजन्यत्वस्यानुमितित्वसाधकतास्वीकारेणैव पक्षताप्रत्यक्षे व्यभिचारवारणसम्भवाद् विषयतया पक्षताप्रत्यक्षं प्रति तादात्म्येनैव विषयस्य जनकतायाः सर्ववादिसम्मततया पक्षताप्रत्यक्षनिष्ठजन्यतायाः विषयत्वसंसर्गावच्छिन्नतया समवायसम्बन्धावच्छिन्नजन्यतायास्तत्र विरहात् इत्याह। समवायेति जन्यतायाः समवायसम्बन्धावच्छिन्नत्वविशेषणत्वमभ्युपेत्य असमासेन लिखनम प्रयोजकत्वोक्त्या=अनुमितित्वरूपसाध्यसाधकत्वोक्त्या। पक्षताप्रत्यक्षस्येति विषयत्वसम्बन्धावच्छिन्नजन्यतावत इत्यादिः। वारणसम्भवेऽपि=तत्र व्यभिचारस्य वारयितुं शक्यत्वेऽपि।

इदमुपलक्षणम्—पक्षतात्वावच्छिन्नजनकतानिरूपितजन्यत्वस्यानुमितित्वसाधकत्वाभ्युपगमेऽपि पक्षताप्रत्यक्षे व्यभिचारवारणं सम्भवति,

दीधितिः

स्यापि तथात्वापत्तिः, इच्छासत्त्वेऽपि कालान्तरे देशान्तरे वा तद्विरहसत्त्वेनैककालीनत्वाद्यतीन्द्रियघटितप्रतियोगित्वेन

जागदीशी

णासम्भवेऽपि वस्तुगतिमनुरुध्य समाधत्ते इच्छासत्त्वेऽपीति । देशान्तरे इच्छाशून्यात्मनि । तस्याः पक्षतायाः। निरस्तत्वादिति ।

नारायणी

तादृशप्रत्यक्षं प्रति विषयत्वेनैव पक्षताया जनकत्वात् पक्षतात्वावच्छिन्न-जनकतानिरूपितजन्यतायास्तत्र विरहादित्यपि द्रष्टव्यमिति ध्येयम् ।

वस्तुगतिमनुरुध्य=वास्तविकन्यायसिद्धान्तमभ्युपेत्य । समाधत्ते इति दीधितिकार इति शेषः। दीधितौ इच्छासत्त्वेऽपीति आत्मनि इच्छा-सत्त्वदशायामित्यर्थः। कालान्तरे=अतीतभविष्यत्कालादौ। प्रदेशान्तरे =घटादिदेशावच्छेदेन। तद्विरहेति इच्छाविरहसत्त्वस्यावश्यकत्वेनेत्यर्थः। एककालीनत्वेति एककालावच्छिन्नैकात्मवृत्तित्वरूपेच्छाविरहाधिकरणवृ-त्तित्वविशिष्टसिद्ध्यभावस्य हेतुत्वेन कालादेरतीन्द्रियतया तद्घटितप्रति-योगिकत्वेनेत्यर्थः। तस्याः=पक्षतायाः। अतीन्द्रियत्वादिति एककालाव-च्छिन्नैकात्मवृत्तित्वरूपसामानाधिकरण्यसम्बन्धेन इच्छाविरहविशिष्ट-सिद्ध्यभावस्यैव पक्षतास्वरूपतया तादृशपक्षतायाश्च कालादिप्रतियो-गितावच्छेदकघटिततया कालस्याप्रत्यक्षत्वे तस्या अपि प्रत्यक्षत्वमस-म्भवीति तत्र पक्षताजन्यत्वस्यासत्त्वात् कुतो व्यभिचार इति भावः । नचैवमित्यादेरुत्तरमनुमितावेवेति एवकारात् अर्थापत्तावेव पक्षताया हेतुत्वव्यवच्छेदः। तथाचानुमितिधारावदर्थापत्तिधाराऽपीष्टैवेति भावः। निरस्तत्वादित्यादेर्हेतुमाह टीकायां प्रमाणेति पक्षताया अनुमितिहेतुत्वे न किञ्चिदपि प्रमाणमस्तीति भावः ।

दीधितिः

तस्या अतीन्द्रियत्वादिति चेन्न। अनुमितावेव पक्षताया हेतु-

जागदीशी

प्रमाणाभावेनेत्यादिः। तथा च दृष्टान्तासिद्धिरिति भावः। ननु-सिद्धिकालीनायाः प्रत्यक्षादिसामग्र्यास्तत्तद्व्यक्तित्वेन अनुमितौ-प्रतिबन्धकत्वकल्पनापेक्षया लाघवादेव सिद्ध्यभावरूपपक्षतायास्त-

नारायणी

ननु पक्षताया अनुमितिहेतुत्वाभावस्य प्रभाकराणामिव नव्यनैयायिकानामप्यनुमतत्वेऽपि अर्थापत्तौ तस्या हेतुत्वं स्यात्, न स्यादित्याह तथाचेति दृष्टान्तासिद्धिरिति। तथाच व्यतिरेकव्याप्तिज्ञानजन्यं ज्ञानमनुमितिः पक्षताजन्यत्वात्, साध्याभाववदवृत्तित्वज्ञानजन्यानुमितिवदित्यादिप्रयोगेऽनुमितौ पक्षताया जनकत्वाभावे दृष्टान्तासिद्धिर्दुर्वारा स्यात् अनुमितावेव पक्षताया हेतुत्वासम्भवादिति हृदयम्। साध्यादिभेदेनेत्यादिदीधितेरवतरणमाह नन्वित्यादि वह्न्यादिप्रत्यक्षसामग्रीदशायां वह्निविशेषणज्ञानघटितायां सत्त्वे सिद्धिसत्त्वेऽपि अनुमितेरनुत्पादात् पक्षताया अनुमितिहेतुत्वमनभ्युपगच्छतां मते सिद्धिकालीनतत्तत्प्रत्यक्षसामग्र्यास्तत्तद्व्यक्तित्वेन प्रतिबन्धकत्वकल्पने गौरवं, तदपेक्षया सिद्ध्यभावरूपपक्षताया अनुमितिहेतुत्वकल्पनमेव युक्तमिति पक्षताया अनुमितिहेतुत्ववादिनामभिप्रायमवलम्ब्याह सिद्धिकालीनाया इति—सिद्धिकाले वर्त्तमानाया इत्यर्थः। प्रत्यक्षादीति समानविषयकप्रत्यक्षादिसामग्र्या इत्यर्थः आदिना शाब्दसामग्रीपरिग्रहः। तत्तद्व्यक्तित्वेनेति। कालादिघटितप्रत्यक्षादिसामग्र्या अनुगततया वक्तुमशक्यत्वादिति हृदयम्। प्रतिबन्धकत्वेति समानविषयकप्रत्यक्षशाब्दसामग्रीदशायामनुमितेरनुत्पादस्य सर्वानुभवसिद्धत्वादिति भावः। सिद्ध्यभावेति—अनुमित्साविरहसहकृतसिद्ध्यभावरूपपक्षताया इत्यर्थः। तद्धेतु-

दीधितिः

त्वस्य निरस्तत्वात्, साध्यादिभेदेनाननुगतत्वात् तज्जन्यत्व-

जागदीशी

द्धेतुत्वं सेत्स्यतीति अत आह साध्यादीति । आदिना सिषाधयिषोपग्रहः । तथाच साध्यादिभेदादिव अनुमितित्वार्थापत्तित्वादि-प्रकारकसिषाधयिषाया भेदादपि पक्षताभेदात् अनुमितित्वादिप्रका-

नारायणी

त्वम् = अनुमितिहेतुत्वम् । सेत्स्यतीति । तत्तत्सामग्र्यभावस्यानुमितिकारणत्वेऽनन्तकारणताकल्पनेन गौरवज्ञानादेव तादृशसामग्र्यभावस्य कारणत्वं न सेत्स्यति इति अनन्यगतिकतया यथोक्तपक्षताया एव हेतुत्वमवश्यं सेत्स्यतीति तात्पर्यम् । साध्यादिभेदेनेत्यत्र आदिपदग्राह्यमाह सिषाधयिषोपग्रह इति । तथाच सिषाधयिषाभेदेन साध्यादिभेदेन च सिद्धेरभावस्यानन्त्यात्पक्षताया अनुमितिहेतुत्वेऽपि लाघवासम्भवेन तत्तत्सामग्र्यभावस्यानुमितिहेतुत्वमेव क्लृप्ततया कल्पनीयम् । उभयोर्मध्ये कुत्रापि लाघवगौरवस्य वक्तुमशक्यत्वात् इति पक्षताया अनुमितिहेतुत्वं कथमपि न कल्पनीयमित्याशयः । सिषाधयिषाभेदेनापि पक्षताया भेदं प्रदर्शयितुं भावमाह तथाचेति साध्यादिभेदादिवेति दृष्टान्तानुसरणं, सिद्धेः साध्यनिश्चयरूपतया साध्यादिभेदेन तादृशनिश्चयस्य भिन्नत्वात् तदभावरूपपक्षताया अपि भिन्नत्वमपि युक्तमिति बोध्यम् । अनुमितित्वेति तत्तदनुमितित्वतत्तदर्थापत्तित्वादिप्रकारकसिषाधयिषाया इत्यर्थः । पक्षतायाः = तादृश–तादृश–इच्छाविरहविशिष्टसिद्ध्यभावरूपायाः । नानात्वात् = अनुगतायास्तस्या वक्तुमशक्यत्वात् ।

ननु पक्षताया नानात्वेऽपि तत्तत्पक्षताजन्यत्वमेवानुमितित्वसाधमस्तु, इत्यत आह अनुमितित्वादीति । तथा च व्यतिरेकव्याप्तिज्ञान-

नागवीची

रकेच्छाविरहघटितपक्षताजन्यत्वं यदि प्रयोजकं तदा हेत्वभावाद-र्थापत्तौ स्वरूपासिद्धिः, अर्थापत्तित्वादिप्रकारकेच्छाविरहघटितज-न्यत्वस्य प्रयोजकत्वे च अनुमितौ दृष्टान्तासिद्धिरिति भावः। ननु प्रत्यक्षाद्यतिरिक्तसाध्यज्ञानत्वप्रकारकेच्छाविरहविशिष्टसिद्धित्वघटि-तधर्मावच्छिन्नाभावत्वेन निरुक्तपक्षताद्वयमनुगमय्य तज्जन्यत्व-

नारायणी

जन्यं ज्ञानमनुमितिः, अनुमितित्वप्रकारकेच्छाविरहविशिष्टसिद्ध्यभाव-रूपपक्षताजन्यत्वात्—इत्याकारकानुमानप्रयोगाभ्युपगमे अर्थापत्तौ स्वरूपासिद्धिः स्यात्, तादृशव्याप्तिज्ञानोत्तरजायमानज्ञानस्य परैरर्था-पत्तित्वेनाभ्युपगम्यमानतया तत्रानुमितित्वप्रकारकेच्छाविरहविशिष्टसि-द्ध्यभावरूपपक्षताजन्यत्वरूपहेतोरसत्त्वात्। यदि च व्यतिरेकव्याप्ति-ज्ञानोत्तरजायमानं ज्ञानमनुमितिः अर्थापत्तित्वप्रकारकेच्छाविरहविशि-ष्टसिद्ध्यभारूपपक्षताजन्यत्वादित्याकारकानुमानप्रयोगः स्यात्तदाऽनु-मितौ दृष्टान्तासिद्धिः,निरुक्तपक्षताजन्यत्वस्यानुमितावसत्त्वात् इति भावः, यदि प्रयोजकं=यद्यनुमितित्वसाधकम्। स्वरूपासिद्धिरिति निरुक्त-पक्षताजन्यत्वस्य भवन्मतसिद्धानुमितित्वसाधकस्यार्थापत्तावसत्त्वात्, अर्थापत्तीत्यादि अर्थापत्तित्वप्रकारकेच्छाविरहविशिष्टसिद्ध्यभावरूपप-क्षताजन्यत्वस्येत्यर्थः। प्रयोजकत्वे = अनुमितित्वसाधकत्वे। दृष्टान्तासि-द्धिरिति निरुक्तपक्षताजन्यत्वस्यानुमितावसत्त्वादिति हृदयम्। प्रयोज-कत्वस्येत्यादिदीधितिमवतारयति प्रत्यक्षाद्यतिरिक्तेति प्रत्यक्षशाब्दा-द्यतिरिक्तसाध्यप्रकारकनिश्चयत्वप्रकारकेच्छाविरहविशिष्टसिद्धित्वाव-च्छिन्नाभावत्वेनेत्यर्थः। निरुक्तपक्षताद्वयम् = अर्थापत्तित्वप्रकारकेच्छा-विरहविशिष्टसिद्ध्यभाव-अनुमितित्वप्रकारकेच्छाविरहविशिष्टसिद्धि-त्वावच्छिन्नाभावरूपपक्षताद्वयम्। अनुगमय्य = प्रत्यक्षाद्यतिरिक्तसा-

जागदीशी

मेव अनुमितित्वे प्रयोजकं वाच्यम् अतो नोक्तदोष इत्यतः प्रयोजकत्वपदार्थं वितर्क्य दूषयति प्रयोजकत्वञ्चेति । वस्तुतोऽर्थापत्तित्वावच्छेदेन तत्सामानाधिकरण्येन वा अनुमितित्वस्य साधने पक्षताजन्यत्वं प्रयोजकम्, तत्र नाद्य इत्याह साध्यादीति,

नारायणी

ध्यज्ञानत्वप्रकारकेच्छाविरहविशिष्टसिद्ध्यभावत्वेन पक्षतामनुगतीकृत्य । तज्जन्यत्वमेव = निरुक्तानुगतपक्षताजन्यत्वमेव । प्रयोजकं वाच्यमिति । तथाच व्यतिरेकव्याप्तिज्ञानोत्तरं जायमानं ज्ञानमनुमितिः, प्रत्यक्षाद्यतिरिक्तसाध्यज्ञानत्वप्रकारकेच्छाविरहविशिष्टसिद्धित्वावच्छिन्नाभावरूपपक्षताजन्यत्वात् इत्यनुमानप्रयोगे न स्वरूपासिद्धिः । नवा सिद्धसाधनमिति भावः । नोक्तदोषः = न दृष्टान्तासिद्ध्यादिदोषः । प्रयोजकत्वेति अनुमितित्वप्रयोजकत्वपदार्थं वितर्क्य दूषयति = प्रयोजकत्वस्य विचारासहत्वं प्रदर्शयति ।

ननु प्रत्यक्षाद्यतिरिक्तसाध्यज्ञानस्यापि साध्यादिभेदेन भिन्नतया तत्तत्साध्यज्ञानत्वप्रकारकेच्छाविरहविशिष्टसिद्ध्यभावस्य पक्षतात्वे पक्षताया अननुगतत्वं दुर्वारं स्यादित्यतः प्रयोजकत्वञ्चेत्यस्यावतरणान्तरमाह— वस्तुत इति । अर्थापत्तीति अर्थापत्तित्वव्यापकपक्षताजन्यत्वप्रतियोगिकस्वरूपसम्बन्धेनेत्यर्थः । तत्सामानाधिकरण्येनेति स्वरूपत्वावच्छिन्नशुद्धस्वरूपसम्बन्धेन वा इत्यर्थः अनुमितित्वस्य = अनुमितित्वरूपसाध्यस्य पक्षताजन्यत्वं प्रयोजकमिति । हेतुविधयेत्यादिः । आद्ये = अर्थापत्तित्वावच्छेदेन पक्षताजन्यत्वस्य हेतुत्वे । साध्यादीति साध्यादिभेदेनाननुगतत्वादित्यादिदीधितिः ।

दीधितिः

स्याऽप्रयोजकत्वाच्च । प्रयोजकत्वञ्च न जनकत्वमसम्भवात् न व्याप्यत्वं मानाभावादित्यादेरसकृदावेदितत्वाच्च ।

जागदीशी

तथा च भागासिद्धिरिति, द्वितीये तु आह प्रयोजकत्वञ्चेत्यादीति, शुक्रमुत्पश्यामः । प्राञ्चस्तु साध्यादीत्यादिपदेन पक्षाद्युपग्रहः । तेन साध्यपक्षभेदात् पक्षताया नानात्वात् न तज्जन्यता अनुमितित्वप्र-

नारायणी

ननु साध्यादिभेदेन पक्षताया नानात्वेऽपि तत्तत्पक्षताजन्यत्वमेवानुमितित्वसाधकं वक्तव्यमित्यत आह तथाचेति भागासिद्धिरिति। तथाच एकविधतत्पक्षताजन्यत्वस्यानुमितित्वसाधकत्वे अर्थापत्त्यन्तरे तत्पक्षताजन्यत्वविरहेण पक्षैकदेशे हेतोरसत्त्वाद् भवति भागासिद्धिरिति भावः। द्वितीये = अर्थापत्तित्वसामानाधिकरण्येन पक्षताजन्यत्वस्यानुमितित्वसाधकत्वपक्षे । आहेति दीधितिकार इति शेषः। तथाच प्रयोजकत्वस्यैव पक्षताजन्यत्वनिष्ठस्य वक्तुमशक्यत्वात् न पक्षताजन्यत्वमनुमितिसाधकं भवितुमर्हतीति हृदयम् । दीधितौ प्रयोजकत्वमिति—अनुमितित्वप्रयोजकत्वं चेत्यर्थः। न जनकत्वमित्यत्र हेतुमाह असम्भवादिति अनुमितित्वस्य जातितया नित्यत्वात् तज्जनकत्वं न सम्भवतीति भावः। न व्याप्यत्वमित्यत्र हेतुमाह मानाभावादिति। अनुमितित्वाभाववत्यपि अर्थापत्तौ पक्षताजन्यत्वस्य सत्त्वेन व्यभिचारात् पक्षताजन्यत्वं नानुमितित्वव्याप्यमित्याशयः। असकृदावेदितत्वादित्यनेन बहुशः पक्षताजन्यत्वस्यानुमितित्वप्रयोजकताया निरस्तीकृतत्वादिति सूचितम् ।

साध्यादित्यादिदीधितिग्रन्थं प्रकारान्तरेण व्याचक्षाणानां मतं प्रदर्शयितुमाह टीकायां प्राञ्चस्तु इति साध्यादीत्यत्रादिपदग्राह्यमाह पक्षाद्युपग्रह इति तेन = आदिना पक्षाद्युपग्रहेण नानात्वादिति तत्साध्यतत्पक्ष-

जागदीशी

योजिका समव्याप्तस्यैव प्रयोजकत्वस्थितेरित्याशयः । ननु व्याप्य-मात्रे प्रयोजकत्वमास्थेयं तत्तत्पक्षसाध्यकानुमितित्वे वा तत्तत्प-क्षसाध्यकपक्षताजन्यत्वं प्रयोजकं वाच्यम् इत्यत उक्तं प्रयोज-कत्वञ्चेतीत्यप्याहुः । असम्भवादिति । अनुमितित्वजातेर्नित्यत्वा-

नारायणी

कानुमितीच्छाविरहविशिष्टसिद्ध्यभावस्य पक्षसाध्यभेदेन भिन्नत्वस्या-नुभवसिद्धत्वादित्याशयः। न तज्जन्यत्वं = न पक्षताजन्यत्वम् , अनुमिति-त्वप्रयोजकं कुतो न इत्याशयेनाह समव्याप्तस्यैवेति अनुमितित्वव्या-प्यानुमितित्वव्यापकस्यैवेत्यर्थः । तथाच तत्पक्षताजन्यत्वस्यानुमितित्व-व्याप्यत्वेऽपि तस्यानुमितित्वाव्यापकत्वात् अनुमितित्वस्य सर्वास्वेवानु-मितिषु वर्त्तमानत्वेन सर्वत्र पक्षताजन्यत्वस्य विरहात् व्याप्यमात्रस्यैव यदि प्रयोजकत्वं स्यात्तदा तत्पक्षताजन्यत्वमपि अनुमितित्वव्याप्यतया अनुमितित्वप्रयोजकत्वं सम्भवत्येवेत्याह व्याप्यमात्र इति अनुमितित्वे-त्यादिः । मात्रपदेनानुमितित्वव्यापकस्यानुमितित्वप्रयोजकत्वव्यवच्छेदः। यदि च तद्व्याप्यतद्व्यापकस्यैव तत्प्रयोजकत्वं प्राचीनमतसिद्धमित्यु-च्यते तदाऽप्याह- तत्तत्पक्षेति । तथा चेयं तत्पक्षतत्साध्यकानुमितिः तत्पक्षतत्साध्यकपक्षताजन्यत्वान इत्युक्तौ तत्पक्षताजन्यत्वस्य तत्पक्षसाध्य-कानुमितित्वव्याप्यतया व्यापकतया च अनुमितित्वप्रयोजकत्वं तत्राक्षत-तमेवेति भावः । वाच्यमिति । तत्त पक्षसाध्यकपक्षताजन्यत्वमेव तत्ता-त्पक्षसाध्यकानुमितित्वप्रयोजकं कल्पनीयमिति भावः । उक्तमिति । दीधितिकृतेति शेषः । पक्षताजन्यत्वस्य अनुमितित्वप्रयोजकत्वाभिधाने दोषमाह असम्भवादिति । कुतः असम्भव इत्यत आह अनुमितित्वेति तथाच अनुमितित्वप्रयोजकत्वं यद्यनुमितित्वजनकत्वं तदा अनुमितित्व-

दीधितिः

एतेन व्याप्तिज्ञानादिजन्यत्वमनुमितित्वे प्रयोजकमित्यपि परा-

जागदीशी

दिति भावः । इत्यादेरित्यादिपदेन व्यापकत्वमित्यादेः सूचनम् । एतेन उक्तदिशा प्रयोजकत्वस्य निरस्तत्वेन । व्याप्तिज्ञानेति । अन्वयव्यतिरेकान्यतरव्याप्त्यवगाहिज्ञानजन्यत्वमित्यर्थः । तेन न व्याप्त्यननुगमनिबन्धनः सिद्धसाधनादिः ( स्वरूपासिद्ध्यादिः । )

नारायणी

जातेर्नित्यतया तज्जनकत्वमेव न सम्भवतीति हृदयम् । व्यापकत्वं चेति यापकत्वंच न प्रयोजकत्वस्वरूपं भवितुमर्हति । सामान्यतः पक्षताजन्यत्वस्यानुमितित्वाव्यापकत्वात् इत्यभिहितं प्राक् ।

ननु अर्थापत्तित्वेनाभिमतं ज्ञानमनुमितिरेव, व्याप्तिज्ञानजन्यत्वात्, इत्यनुमानेन परमतसिद्धार्थापत्तावनुमितित्वं सेत्स्यतीत्यत आह दीधितौ एतेनेति । प्रयोजकत्वस्य वक्तुमशक्यत्वेनेत्यर्थः । पराास्तमिति तथाच व्याप्तेरपि साध्यादिभेदेन भिन्नतया तत्तद्व्याप्तिज्ञानजन्यत्वस्यार्थापत्तौ भागासिद्धतयाऽनुमितित्वाप्रयोजकत्वात्, अनुमितित्वस्य नित्यतया तज्जनकत्वस्यापि अनुमितित्वप्रयोजकत्वरूपत्वासम्भवात् । व्याप्तिज्ञानजन्यत्वेनाप्यनुमितित्वसिद्धेर्वक्तुमशक्यत्वादित्याशयः ।

एतेनेत्यादेरर्थं व्याचष्टे उक्तदिशेति पक्षताजन्यत्वस्यानुमितित्वप्रयोजकत्वनिरासदिशेत्यर्थः। एकविधव्याप्तिज्ञानजन्यत्वस्य हेतुत्वाभ्युपगमे व्याप्त्यन्तरप्रयोज्यानुमितावनुमितित्वासम्भवमाशङ्क्याह टीकायां अन्वयेति अन्वयव्यतिरेकान्यतरावगाहीत्यर्थकम् । तथाच इदं ज्ञानमवश्यमनुमितिः साध्याभाववदवृत्तित्वसाध्याभावव्यापकाभावप्रतियोगित्वान्यतरावगाहिज्ञानजन्यत्वादित्यनुमानं पर्यवसितम् । तेनेति अन्यतराव-

दीधितिः

स्तम् । साध्याभावव्यापकाभावप्रतियोगिधर्मत्वेन साध्यव्या-

जागदीशी

अर्थापयामीत्यनुभवस्य व्यतिरेकिपरामर्शप्रयोज्यानुमितित्वावगाहित्वमङ्गीकुर्वतां व्यतिरेकव्याप्तिस्थलेऽपि अनुमितिमेव क्षणविलम्बेन कल्पयतां सिद्धान्तिनां मतमाह साध्यभावेत्यादि । साध्य-

नारायणी

गाहिज्ञानजन्यत्वस्य विवक्षणेनेत्यर्थः । व्याप्त्यैति अन्वयव्याप्तिभेदेन साध्यादिभेदेन च यो व्याप्तेरननुगमस्तन्निबन्धन इत्यर्थः। सिद्धसाधनादिरिति । तथाचान्वयव्याप्तिज्ञानजन्यत्वस्यानुमितित्वप्रयोजकत्वे सिद्धसाधनं व्यतिरेकव्याप्तिज्ञानजन्यत्वस्यानुमितित्वप्रयोजकत्वे तु साध्यादिभेदेन तस्या अपि भिन्नतया सिद्धसाधनमेवेति भावः ।

अनुभवस्य अर्थापयामीत्याकारकानुव्यवसायस्य व्यतिरेकेति साध्याभावव्यापकाभावप्रतियोगिहेतुमान् पक्षः इत्याकारकपरामर्शप्रयोज्यानुमितित्वावगाहित्वं स्वीकुर्वतां प्राचीनानामित्यर्थः। व्यतिरेकव्याप्तिज्ञानस्थलेऽपि व्यतिरेकव्याप्तिज्ञानोत्तरमन्वयव्याप्तिमनुमाय तादृशव्याप्तिज्ञानोत्तरमेवानुमितिर्भवतीति मतमवलम्ब्याह क्षणविलम्बेनेति, व्यतिरेकव्याप्तिज्ञानतृतीयक्षणरूपक्षणविलम्बेनेत्यर्थः । सिद्धान्तिनाम्=अर्थापत्तिमनङ्गीकुर्वताम्, मतमाहेति दीधितिकृदिति शेषः। तथाच प्रथमं यदा भोजनाभावव्यापकाभावप्रतियोगित्वं पीनत्वे जातं तदुत्तरं पीनत्वमवश्यं भोजनाभाववदवृत्ति भोजनाभावव्यापकाभावप्रतियोगिधर्मत्वात् इत्यनुमानेनान्वयव्याप्तिनिश्चयात् तदुत्तरं वटौ भोजनानुमितिरिति अर्थापत्तिरनुमितिरेव तत्प्रमाणमप्यनुमानान्नातिरिच्यते इति तात्पर्य्यम् । अत्र यदि अन्वयव्याप्तिसाधकव्यतिरेकव्याप्तौ धर्मत्वपर्य्यन्तं न दीयते तदा भोजनाभावव्यापकाभावप्रतियोगित्वस्य व्यतिरेकव्याप्तेः गगनेऽपि

दीधितिः

प्यत्वानुमानात् प्रसिद्धसाध्यकैवानुमितिरित्यपि केचित् ।

जागदीशी

व्याप्यत्वस्य वृत्तिमत्त्वगर्भत्वे गगनादौ व्यभिचारवारणार्थं धर्मपदम्, अन्यथा तु उपरञ्जकं तद् बोध्यम् । जलादौ धूमव्यापकाभावप्रतियोगिजलत्वादिपरामर्शात् अप्रसिद्धस्य धूमाद्यभावस्य अर्था-

नारायणी

सत्त्वात् तत्र वृत्तिमत्त्वे सति साध्याभाववदवृत्तित्वरूपान्वयव्याप्तिविरहेण व्यभिचारः स्यात्, अतः अन्वयव्याप्तिसाधकव्यतिरेकव्याप्तौ साध्यभावव्यापकाभावप्रतियोगित्वरूपायां धर्मत्वपर्यन्तानुसरणं कृतं दीधितिकृता–इत्याह। साध्यव्याप्यत्वस्येति साध्यान्वयव्याप्यत्वस्येत्यर्थः। वृत्तिमत्त्वगर्भत्वेन=वृत्तिमत्त्वे सति साध्याभाववदवृत्तित्वस्वरूपत्वेन । गगनादाविति आदिना आत्मादिपरिग्रहः, व्यभिचारवारणार्थं = अन्वयव्याप्तिमत्त्वस्य साध्यस्य धर्मत्वाघटितव्यतिरेकव्याप्तिमत्त्वस्य यथोक्तस्य गगने सत्त्वेन व्यभिचारनिरासार्थमित्यर्थः । धर्मपदमिति वृत्तिमत्त्वार्थकम् । वृत्तिमत्त्वमपि हेतुतावच्छेदकसम्बन्धेन बोध्यं, तेन समवायेन वृत्तिमतोऽपि घटत्वस्य भोजनाभावव्यापकसंयोगावच्छिन्नघटत्वाभावप्रतियोगित्वेऽपि न तत्र संयोगावच्छिन्नाभावप्रतियोगिनि घटत्वे व्यभिचार इति ध्येयम । अन्यथा तु = अन्वयव्याप्तेवृत्तिमत्त्वागर्भत्वे, उपरञ्जकम् = वाक्यालङ्कारीभूतम् ,तत् = धर्मपदम्,प्रथमतो धूमव्यापकाभावप्रतियोगिजलत्ववज्जलमित्याकारकपरामर्शोत्तरकालेऽन्वयव्याप्तिमननुमायैव धूमाभावस्यार्थापत्तिः सम्भवति,अतः अन्वयव्याप्तिमनुमायानुमितिरेव भवति इत्युक्तिर्न सङ्गच्छते इत्याशङ्क्य प्रसिद्धसाध्यकेत्याद्यभिधानं सङ्गमयति जलादाविति । अप्रसिद्धस्य अज्ञातस्य कस्येत्याशङ्कायामाह धूमाद्यभावस्येति। तथाचाप्रसिद्धसाध्यकानुमितौ साध्यज्ञानस्यैव प्रतिबन्धकतया

दीधितिः

अथ वह्न्याद्यभाववति धूमादेः समवायेन तन्त्वाद्यभाववति

जागदीशी

पत्तौ उक्तगत्यसम्भवात् प्रसिद्धसाध्यकैव इत्युक्तम् । स एव क्षणा-विलम्ब एव। केचिदित्यत्र अस्वरसः। समवायेनेति। वर्त्तमानत्वादि-

नारायणी

साध्याभाववदवृत्तिहेतुमानित्याकारकपरामर्शोत्तरम् अप्रसिद्धसाध्यकानु-मितिर्न संभवति, परामर्शस्यैव साध्यज्ञानस्वरूपतया तादृशानुमितिप्रति-बन्धकत्वात्,अतः अन्वयव्याप्त्यनुमानानन्तरं प्रसिद्धसाध्यक इवानुमिति-रिति तात्पर्य्येण प्रसिद्धसाध्यक इवेत्यभिहितं दीधितिकृतेति भावः। सर्वत्र व्यतिरेकव्याप्त्याऽन्वयव्याप्त्यनुमानं न सम्भवति, व्यतिरेकव्याप्तिविशि-ष्टस्य परामर्शादप्रसिद्धसाध्यकार्थापत्तेरुदयस्य बाधकाभावात् । यत्रतु व्यतिरेकपरामर्शोत्तरं बाधकसद्भावेनार्थापत्तिस्तत्रैव व्यतिरेकव्याप्त्याऽ-न्वयव्याप्तिमनुमायान्वयपरामर्शोत्तरकालं प्रसिद्धसाध्यकानुमितिर्भवति इति क्वचिदेव, नतु सर्वत्र—इत्येव अस्वरसबीजमाह सएव क्वचिदिति कुत्रचित् स्थले. स एव = प्रसिद्धसाध्यकस्थलेऽनुमित्युत्पाद एव-इत्यस्वरसः केचिदित्युक्त्या सूचित इति शेषः ।

साध्याभाववदवृत्तित्वघटकवृत्तित्वं विशिनष्टि दीधितौ अथ वह्न्य-भाववतीति धूमावयवे इति शेषः । टीकायां समवायेनेत्यस्यान्वयमाह वर्त्तमानत्वादित्यत्र। अन्वयीति । तथाच वह्न्यभाववति धूमावयवे सम-वायेनैव वृत्तित्वस्य सत्त्वाद् वह्निसाध्यकस्थले व्याप्तिज्ञानाप्रसिद्धयाऽनु-मितिर्न स्यादिति भावः ।

ननु साध्याभावाधिकरणनिरूपितसंयोगसम्बन्धावच्छिन्नवृत्तित्वा-भाव एव प्रवेश्यतां, तथाच वह्न्यभाववन्निरूपितसंयोगसम्बन्धावच्छिन्न-वृत्तित्वाभावस्य धूमे सत्त्वान्न दोष इत्यत आह दीधितौ तन्तुत्वेति ।

दीधितिः

च पटादेः संयोगेन वर्तमानत्वात् साध्याभाववति संयोगेन समवायादिना वर्त्तमानत्वस्य विशिष्यैवाभावो वाच्यः, तथा च जलं जातिमत् गुणवत्त्वात् गुणवच्च घटादेरित्यादिकं

जागदीशी

त्यन्वयि । गुणवदिति । यद्यपि जातिसाध्यक एव संयोगेन घटादिहेतौ अप्रसिद्धिः सम्भवति, तथापि सम्बन्धविशेषेण वृत्तिमत्त्वमात्राप्रसिद्धिनिबन्धनानुमानविलयप्रदर्शनाय गुणवदिति साध्या-

नारायणी

तथाच अयं तन्तुत्ववान् पटादित्यादौ समवायेन पटादिहेतुकस्थले तन्तुत्वाभाववति भूतलादौ संयोगेन पटस्य वृत्तित्वात्तादृशसंयोगावृत्तित्वाभावज्ञानं पटादौ न स्याद् । विशिष्येति येन सम्बन्धेन हेतुः=तेन सम्बन्धेन वृत्तित्वाभावो वक्तव्य इत्याशयः। सम्बन्धविशेषेण वृत्तित्वप्रवेशेऽपि न निस्तार इत्याह तथाचेति जलादौ जातिमत्त्वस्य गुणवत्त्वस्य च द्वयोः साध्यत्वानुसरणप्रयोजनं प्रदर्शयितुमाह टीकायां यद्यपीति । जातिसाध्यकेति। जातिमान् घटादित्यत्रापीत्यर्थः, संयोगेन घटस्य हेतुत्वस्थले जात्यभाववति सामान्यादौ संयोगावच्छिन्नवृत्तित्वाप्रसिद्धिरित्याह अप्रसिद्धिरिति । तथाच समवायेन जातिसाध्यकसंयोगेन घटहेतुकस्थलेऽपि जात्यभाववति सामान्यादिनिरूपितसंयोगावच्छिन्नवृत्तित्वाप्रसिद्धया एकस्मिञ्जातिसाध्यकेऽपि अप्रसिद्धिनिबन्धनानुमानविलयसम्भवे गुणवत्त्वसाध्यान्तरस्यानुसरणं निरर्थकमित्येवमाक्षेपतात्पर्य्यम् । यद्यपीत्यादेरुत्तरमाह तथापीति । सम्बन्धविशेषेण=हेतुतावच्छेदकसम्बन्धेन वृत्तित्वमात्रस्याप्रसिद्धिनिबन्धनो योऽनुमानविलयस्तत्प्रदर्शनायेत्यर्थः। साध्यान्तरमिति जातिमत्त्वातिरिक्तगुणवत्त्वस्य

दीधितिः

विलीयेत, जातिगुणाभाववतोः समवेतत्वसंयोगित्वयोरप्रसि-द्धेरिति चेत् उपदर्शयैनामपि केवलान्वयिनः सरणिं, स्वीकुरु वा।

जागदीशी

न्तरमित्युक्तम्। पूर्वत्र तु समवेतत्वापेक्षया जातित्वस्य गुरुतया तदवच्छिन्नाभावस्य अप्रसिद्ध्यापि विलयसम्भवादिति द्रष्टव्यम्।

नारायणी

साध्यत्वानुसरणं, तथाच हेतुतावच्छेदकसम्बन्धेन वृत्तित्वविवक्षणेऽपि समवायेन हेतुकस्थले यथा जातिमत्त्वसाध्यकस्थलेऽप्रसिद्धिस्तथा गुण-वत्त्वसाध्यकसंयोगेन घटादिहेतुकस्थलेऽपि तादृशवृत्तित्वाप्रसिद्धिरिति अनुमानद्वयविलोपप्रदर्शनार्थं विभिन्नसाध्यानुसरणं दीधितिकृता कृतमिति भावः। स्वयं साध्यान्तरानुसरणप्रयोजनमाह **पूर्वत्रतु इति** जातेः साध्यतास्थले इत्यर्थः। **समवेतत्वेति** :समवायसम्बन्धावच्छिन्न-वृत्तित्वापेक्षयेत्यर्थः। **गुरुतयेति** नित्यत्वे सति अनेकसमवेतत्वस्य जातित्वस्वरूपत्वात्समवेतत्वापेक्षया जातित्वस्य गुरुत्वमवसेयम्। **तदवच्छिन्नेति** जातित्वावच्छिन्नप्रतियोगिताकाभावस्येत्यर्थः। **अप्रसि-द्ध्यापीति** गुरुधर्मावच्छिन्नप्रतियोगिताकाभावस्यानभ्युपगन्तृमते इत्यादिः। विलयसम्भवादिति। जातिसाध्यकानुमानस्येत्यादिः। **द्रष्टव्य-मिति** तथाच जातिसाध्यकस्थले जातित्वस्य समवेतत्वापेक्षया गुरुतया साध्याभावाप्रसिद्ध्याऽपि अनुमानविलयः, गुणवत्त्वसाध्यकस्थलेतु केवलं हेतुतावच्छेदकसम्बन्धावच्छिन्नवृत्तित्वाप्रसिद्ध्यैवानुमानविलय इति विभिन्नसाध्यानुसरणं दीधितिकृता कृतमित्याशयः।

दीधितिः

स्वाधिकरणावृत्तिसाध्याभावादिकत्वमेव व्याप्तिम्, स्वत्वा-

जागदीशी

उपदर्शयेति तथाच तत्र जात्यादौ जलादिवृत्तित्वानुमानमेव प्रमात्मकव्याप्तिज्ञानादिति भावः। स्वाधिकरणेति। तथा च जात्यादिसामान्याभावस्य हेतुभूतगुणादिमदवृत्तित्वात् नोक्तदोष इति भावः। ननु स्वाधिकरणावृत्तिसाध्याभावकत्वव्याप्तौ स्वाधि-

नारायणी

उपदर्शयेत्यादेर्भावमाह तथाचेति तथाच यथा घटो वाच्यत्ववानित्याकारकानुमितिविलोपो दीधितिकारमते इष्ट एव, किन्तु वाच्यत्वं घटवृत्ति इत्याकारकैवानुमितिः प्रमात्मिका सम्भवति तथा जलं जातिमत् गुणवद् वा इत्याकारकानुमित्योरपि विलोपोऽवश्यमभ्युपगन्तव्यः। किन्तु जातिः जलवृत्तिः गुणवत्त्वं वा जलवृत्ति इत्याकारिकैव प्रमात्मकानुमितिः स्वीकरणीया इति तु समुदितग्रन्थतात्पर्य्यम्।

जलं जातिमदित्याकारकानुमितिमप्यभ्युपगच्छतां मतं दीधितिकृदुक्तं व्याख्यातुमाह तथाचेति तथाच स्वाधिकरणावृत्तिसाध्याभावकत्वमेव स्वस्मिन् व्याप्तिरिति। न जलं जातिमद् गुणवद्वेत्याद्यनुमानविलोपः। गुणवत्त्वाधिकरणे द्रव्ये जात्यभावरूपसाध्याभावस्यावर्त्तमानतया संयोगेन घटाधिकरणेऽपि गुणाभावस्य साध्याभावस्यावर्त्तमानतया च स्वपदेन गुणवत्त्वहेतोर्घटस्य च धर्त्तुं शक्यत्वात् इति भावः। जात्यादीति आदिना गुणवत्त्वसाध्यस्य परिग्रहः। हेतुभूतगुणादीति। आदिना घटहेतोः परिग्रहः। नोक्तदोषः=न तत्तदनुमानविलोपो दोषः।

शङ्कते नन्विति। स्वाधिकरणेति स्वं हेतुः तदधिकरणनिरूपितवृत्तित्वाभाववान् साध्याभावो यस्य स्वस्य तत्त्वं व्याप्तिरित्यर्थः। वह्निमान्

जागदीशी

करणवृत्तित्वं न सम्ब॰ ामान्येन वक्तव्यम्, जातिमान् द्रव्यत्वात् इत्यादौ अव्याप्तेः, व्यत्ववति काले जात्यभावस्य कालिकसम्बन्धेन वृत्तेः। नापि विशेषणतया, घटभिन्नं द्रव्यत्वात् इत्यादौ

नारायणी

धूमादित्यादौ धूमाधिकरणपर्वताद्यवृत्तिवह्न्यभावकत्वस्य धूमे सत्त्वात् लक्षणसमन्वयः। एवं जलं जातिमत् गुणादित्यादौ गुणाधिकरणवृत्तिजात्यभावकत्वस्य हेतौ ज्ञानादेव जातिसाध्यकानुमितिरपि निष्प्रत्यूहैव। धूमवान् वह्नेरित्यादौ धूमाभावे वह्न्यधिकरणवृत्तित्वसामान्याभावस्य धूमाभावे विरहात् न तादृशव्याप्तिज्ञानाद् धूमसाध्यकानुमितिः, वह्न्यधिकरणायोगोलकवृत्तित्वस्यैव धूमाभावे सत्त्वात्।

अत्र स्वाधिकरणनिरूपितवृत्तित्वं यदि सम्बन्धसामान्यावच्छिन्नमर्थात् संयोगसमवायाद्यन्यतमसम्बन्धावच्छिन्नं वाच्यं तदा दोषमाह जातिमानिति अव्याप्तिमुपपादयति द्रव्यत्ववतीति द्रव्यत्वरूपहेत्वधिकरणे इत्यर्थः। काले = महाकाले, तेन क्रियात्मककालादौ द्रव्यत्वस्य समवायेनासत्त्वेऽपि न क्षतिः। जात्यभावस्य = जातिरूपसाध्याभावस्य कालिकेति तादृशान्यतमसम्बन्धान्तर्गतकालिकसम्बन्धावच्छिन्नवृत्तित्वस्यैव सत्त्वादित्यर्थः। तथाच सम्बन्धसामान्येन स्वाधिकरणवृत्तित्वविवक्षणे जातिमान् द्रव्यत्वादित्यत्राव्याप्तिः, द्रव्यत्वाधिकरणे महाकाले कालिकसम्बन्धेन जात्यभावस्य वर्त्तमानतया द्रव्यत्ववद्वृत्तित्वसामान्याभावस्य जात्यभावे विरहात् स्वपदेन द्रव्यत्वस्योपादानासम्भवादिति भावः।

ननु स्वाधिकरणवृत्तित्वं स्वरूपसम्बन्धावच्छिन्नमेव विवक्षणीयमिति नोक्ताव्याप्तिः, जात्यभावस्य स्वरूपसम्बन्धेन द्रव्यत्ववति कुत्राप्यवर्त्तमानत्वात् इत्यत आह नापि विशेषणतयेति अभावीयविशेषणता-

जागदीशी

अतिव्याप्तेः। साध्याभावस्य घटत्वादेर्विशेषणतया वृत्तित्वविरहात्, अभावीयस्वरूपसम्बन्धेन भावस्य वृत्तौ मानाभावात्। घटत्वाभावो घटे नास्ति इति बुद्धेः क्लृप्तसमवायेनैव सम्भवात्। न चाभावत्व-

नारायणी

रूपस्वरूपसम्बन्धेनेत्यर्थः। अतिव्याप्तौ हेतुमाह साध्याभावस्येति घटभेदाभावरूपस्येत्यर्थः। कस्येत्याकाङ्क्षायामाह घटत्वादेरिति आदिपदाद् घटभिन्नत्वप्रकारकप्रमाविशेष्यत्वाभावस्यापि घटत्वस्वरूपत्वपरिग्रहः। तेन घटभिन्नत्वप्रकारकप्रमाविशेष्यत्वाभावाभावमादायापि नातिव्याप्तिवारणमिति सूचितम्। विशेषणतया = स्वरूपसम्बन्धेन। तथाच स्वरूपसम्बन्धेन स्वाधिकरणवृत्तित्वरूपहेत्वधिकरणवृत्तित्वविवक्षणे घटभिन्नं द्रव्यत्वादित्यत्रातिव्याप्तिः, घटभेदाभावस्य घटत्वस्य समवायेन वर्त्तमानतया हेत्वधिकरणे घटेऽपि तस्य स्वरूपसम्बन्धेन वृत्तित्वविरहात् इति भावः।

ननु घटत्वाभावो घटे नास्ति इत्याकारकबुद्धिविषयत्वं स्वरूपेण एवाङ्गीकरणीयं, तथाच नातिव्याप्तिः, इत्यत आह अभावीयेति अभावप्रतियोगिकस्वरूपसम्बन्धेनेत्यर्थः। भावस्य = घटत्वादेः, वृत्तौ = वृत्तित्वाभ्युपगमे मानाभावादिति। भावस्य घटत्वादेः स्वरूपेण वृत्तित्वविवक्षामपेक्ष्य समवायेन तथात्वकल्पनाया लघीयस्त्वादिति हृदयम्।

नन्वेवं घटत्वाभावो घटे नास्तीति बुद्धेः का गतिरित्यत आह घटत्वाभाव इत्यादि घटनिरूपितवृत्तितावान् घटत्वाभावाभावः इत्याकारकज्ञानस्येत्यर्थः। क्लृप्तेति एकत्वेनेत्यादिः,समवायेनैव = समवायावच्छिन्नवृत्तित्वस्यैव सम्भवादिति विषयत्वेनेत्यादिः। तादृशबुद्धिविषयताया अनन्तस्वरूपसम्बन्धे कल्पनामपेक्ष्य क्लृप्तैकसमवायसम्बन्धे तथात्वकल्पनाया एव युक्तत्वादिति भावः।

जागदीशी

प्रतीतेः प्रमात्वानुरोधेन स्वमते अभावाभावस्य अतिरिक्तत्वात् न दोष इति वाच्यम्, तथापि घटत्वाभावस्य कालिकसम्बन्धावच्छिन्नाभावे साध्ये गगनत्वादिहेतौ अव्याप्तिप्रसङ्गात्। घटत्वाभावरूपस्य साध्याभावस्य विशेषणतया गगनवृत्तित्वात्।

नारायणी

ननु घटत्वाभावाभावोऽभावः इत्याकारकप्रतीतेः प्रमात्वरक्षायै घटत्वाभावाभावस्य घटत्वस्वरूपत्वं न युक्तिसहं तथा सति अभावत्वाभाववति घटत्वे अभावत्वप्रकारकोक्तप्रतीतेः भ्रमत्वापत्तिर्दुर्वारा स्यात्, तथाच नोक्तातिव्याप्तिः, घटत्वाभावाभावस्य घटत्वातिरिक्तस्य साध्याभावस्य द्रव्यत्ववति घटे स्वरूपसम्बन्धेन वर्तमानत्वादित्याशङ्कते नचेति वाच्यमिति परेणान्वयः। अभावत्वप्रतीतेः = घटत्वाभावाभावोऽभाव इत्याकारकप्रतीतेः। प्रमात्वानुरोधेन = अभावत्ववति अभावत्वप्रकारकज्ञानत्वानुरोधेन। स्वमते = दीधितिकारमते अभावाभावस्य = घटत्वाद्यभावाभावस्य अतिरिक्तत्वादिति घटत्वेत्यादिः, नैष दोषः = नोक्तातिव्याप्तिरूपो दोषः। समाधानमाह तथापीति तथा चाभावाभावस्यातिरिक्तत्वाभ्युपगमेऽपि घटत्वाभावनिष्ठकालिकसम्बन्धावच्छिन्नप्रतियोगिताकाभावस्य स्वरूपसम्बन्धेन साध्यतायां गगनत्वहेतावव्याप्त्यापत्तिः, तृतीयाभावस्य प्रथमाभावस्वरूपतया कालिकसम्बन्धावच्छिन्नघटत्वाभावप्रतियोगिताकाभावाभावस्य साध्याभावस्य घटत्वाभावरूपस्य अभावत्वप्रतीतिप्रमाविषयीभूतस्य गगनत्वरूपहेत्वधिकरणे गगने, स्वरूपसम्बन्धेन वर्त्तमानतया गगनावृत्तित्वस्य साध्याभावेऽसत्त्वात्, स्वपदेन गगनत्वस्योपादातुमशक्यत्वात् इत्याशयः। अव्याप्तिमुपपादयति घटत्वेति साध्याभावस्य = कालिकसम्बन्धावच्छिन्नघटत्वाभावनिष्ठप्रतियोगिताकाभावाभावस्य विशेषणतया = अभावीयस्वरूपसम्बन्धेन। गगनेति स्वाधिकरणीभूतगगननिरूपितवृत्तित्ववत्त्वात्।

जागदीशी

अत एव न प्रकृतसाध्यवत्ता बोधविरोधिताघटकसम्बन्धेनापि अधिकरणवृत्तित्वनिवेशो युक्तः। कालिकसम्बन्धेन गगनवृत्तित्वाप्रसिद्ध्या कथितस्थल एव अव्याप्तितादवस्थ्यात्, सत्त्वाभाववत्तावुद्धिविरो-

नारायणी

अतएवेति निरुक्ताव्याप्तिभयत इत्यर्थः। प्रकृतेति साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रकारताशालिबुद्धित्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकप्रकारतावच्छेदकसम्बन्धेनापीत्यर्थः। स्वाधिकरणेति हेत्वधिकरणवृत्तित्वनिवेश इत्यर्थः। युक्त इति नेति पूर्वेण सम्बन्धः। निरुक्तसम्बन्धेन वृत्तित्वविवक्षणे दोषमाह कालिकसम्बन्धेनेति तृतीयार्थोऽग्रिमगगनान्वय्यवच्छिन्नत्वम् इति तु न युक्तम्, कालिकसम्बन्धावच्छिन्नगगनवृत्तित्वाभावस्यैवालीकत्वात्, किन्तु कालिकसम्बन्धावच्छिन्नवृत्तितायां गगनीयत्वमप्रसिद्धमित्येव तात्पर्य्यमिति ध्येयम्। क्वचित्स्थले = कालिकसम्बन्धावच्छिन्नप्रतियोगिताकघटत्वाभावाभाववान् गगनत्वादित्यादिस्थले अव्याप्तितादवस्थ्यादिति। तथाच साध्यतावच्छेदकसम्बन्धेन प्रकृतसाध्यप्रकारकबुद्धिप्रतिबन्धकतावच्छेदकप्रकारतावच्छेदकसम्बन्धेन स्वाधिकरणवृत्तित्वविवक्षणेऽपि कालिकसम्बन्धावच्छिन्नघटत्वाभावत्वावच्छिन्नप्रतियोगिताकाभावस्य स्वरूपसम्बन्धेन साध्यतायां गगनत्वहेतावव्याप्तिवारणं न सम्भवति। स्वरूपेण तादृशघटत्वाभावाभावरूपसाध्यप्रकारकबुद्धौ कालिकेन घटत्वाभावप्रकारकनिश्चयस्यैव प्रतिबन्धकतया निरुक्तप्रतिबन्धकतावच्छेदकप्रकारतावच्छेदकसम्बन्धतायाः कालिकसम्बन्ध एव वर्त्तमानतया तादृशकालिकसम्बन्धेन गगनवृत्तित्वस्याप्रसिद्धत्वात स्वपदेन गगनत्वस्योपादानासम्भवादिति भावः। निरुक्तसम्बन्धेन वृत्तित्वविवक्षायामव्याप्त्यन्तरमप्याह सत्त्वाऽभावेति। तथाच इदं सत्त्वाभाववत् जातित्वात् इत्यादावपि निरुक्तसम्बन्धेन वृत्तित्वविवक्षणेऽव्याप्तिवारणमशक्यं

जागदीशी

धिताघटकसमवायसम्बन्धेन जातिवृत्तित्वाप्रसिद्ध्या इदं सत्ताशून्यं जातित्वात् इत्यादौ अव्याप्तेश्च। किञ्च द्रव्यसामान्याभाववान्

नारायणी

स्यात्, साध्यीभूतस्वरूपेण सत्ताभावप्रकारकबुद्धौ समवायेन सत्ताप्रकारकनिश्चयस्यैव प्रतिबन्धकतया तादृशप्रतिबन्धकतावच्छेदकप्रकारतावच्छेदकसमवायसम्बन्धेन जातित्वाधिकरणजातिवृत्तित्वस्याप्रसिद्धतया स्वपदेन हेतुभूतजातित्वस्योपादातुमशक्यत्वात् इत्याशयः। सत्ताभावेति साध्यीभूतेत्यादिः। समवायसम्बन्धेनेत्यादिः। समवायावच्छिन्नवृत्तितायां जातिनिरूपितत्वस्याप्रसिद्धेरित्यर्थः।

ननु स्वाधिकरणावृत्तियत्किञ्चित्साध्याभावकत्वविवक्षणे नोक्ताव्याप्तिः सत्ताभावाभावस्य सत्ताऽभावत्वप्रकारकप्रमाविशेष्यत्वाभावस्वरूपतया तत्र स्वरूपसम्बन्धेन हेत्वधिकरणजातिवृत्तित्वानपायात् इत्यत आह किञ्चेति तथाच यत्किञ्चित्साध्याभावे हेत्वधिकरणावृत्तित्वविवक्षणे द्रव्यसामान्याभाववान् घटसत्त्वान्यतरत्वादित्यत्रातिव्याप्त्यापत्तिः स्यात्, द्रव्यसामान्याभावाभावस्य यत्किञ्चित्साध्याभावस्य गगनस्य द्रव्यरूपस्य हेत्वधिकरणेऽवर्त्तमानत्वात् घटसत्त्वान्यतरत्वस्य घटेऽपि वर्तमानतया तत्र संयोगसम्बन्धावच्छिन्नप्रतियोगिताकद्रव्यसामान्याभावरूपसाध्यस्यासत्त्वेन उक्तहेतोर्व्यभिचारित्वमवगन्तव्यम्। अत एव सत्तात्वस्य हेतुत्वमुपेक्ष्यान्यतरत्वस्य हेतुत्वानुसरणम्। सत्तात्वमात्रस्य हेतुत्वे तत्र संयोगेन द्रव्यसामान्याभावस्याक्षततया तस्य हेतोः सद्धेतुत्वापत्त्याऽतिव्याप्तिदानस्यानौचित्यापत्तेः, नापि समवायावच्छिन्नद्रव्यसामान्याभावस्य साध्यत्वं संभवति, तस्य घटे सत्तायामपि सत्त्वेन सद्धेतुत्ववारणासम्भवात्।

ननु वृत्तिमद्यत्किञ्चित्साध्याभावस्यैव स्वाधिकरणावृत्तित्वं विवक्षणीयं, तथाच वृत्तिमति यत्किञ्चित्साध्याभावे द्रव्ये हेत्वधिकरणघटवृत्तित्वसत्त्वे-

जागदीशी

जातिसामान्याभाववान् वा घटसत्तान्यतरत्वात् इत्यादौ अतिव्याप्तिः। गगनाद्यात्मकस्य साध्याभावस्य हेत्वधिकरणावृत्तित्वात्। न च साध्याभावत्वावच्छेदेन स्वाधिकरणावृत्तित्वाभावो विवक्षितः। स्वाधिकरणत्वावच्छेदेन साध्यवत्त्वलक्षणव्यापकसाध्यासामानाधिकरण्यमपेक्ष्यापि गुरुत्वादिति चेन्न, उक्तास्वरसेनैव

नारायणी

नैवातिव्याप्तिवारणं सम्भवति इत्यतः साध्यान्तरमाह जातीति तथाच जातिसामान्याभाववान् घटसत्त्वान्यतरत्वात् इत्यत्रातिव्याप्तिः स्यात्। यदि स्वाधिकरणवृत्तित्वं साध्यवत्ताग्रहविरोधिताघटकसम्बन्धावच्छिन्नं स्यात् जात्यभावाभावस्य जातिस्वरूपस्य यत्किञ्चिदात्मत्वादेः हेत्वधिकरणघटावृत्तित्वात्।

ननु साध्याभावत्वावच्छेदेन स्वाधिकरणावृत्तित्वविवक्षणे नोक्तातिव्याप्तिः, जातिसामान्याभावाभावत्वस्य घटत्वेऽपि सत्त्वात् तत्र घटसत्त्वान्यतरत्वरूपहेत्वधिकरणघटावृत्तित्वविरहात्, द्रव्यसामान्याभावाभावत्वस्यापि घटसंयुक्तद्रव्यान्तरे सत्त्वात् तत्रापि हेत्वधिकरणघटावृत्तित्वासत्त्वात् इत्याशङ्कते नचेति विवक्षित इति परेणान्वयः। साध्येति साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताकसाध्याभावत्वव्यापकस्वाधिकरणनिरूपितवृत्तित्वाभावकत्वस्य व्याप्तित्वस्वरूपं विवक्षितमित्यर्थः। निषेधे हेतुमाह स्वाधिकरणत्वेति स्वाधिकरणत्वव्यापकं यत्साध्यवत्त्वं तत्स्वरूपस्य स्वव्यापकसाध्यसम्बन्धित्वरूपव्याप्तिमपेक्ष्यापीत्यर्थः। गुरुत्वादिति निरुक्तव्याप्तेरित्यादिः। तथाच स्वव्यापकसाध्यसामानाधिकरण्यरूपाया व्याप्तेः स्वाधिकरणत्वव्यापकसाध्यवत्त्वघटितत्वस्यावश्यकतया तदपेक्षया यथोक्तसाध्याभावत्वव्यापकस्वाधिकरणवृत्तित्वाभावकत्वरूपाया व्याप्तेरतीव गुरुशरीरतया केव-

जागदीशी

साध्याभावकत्वादीत्यादिपदस्य उपन्यस्तत्वात्। तेन (साध्यवत्त्व-

नारायणी

लान्वयिसाधारणस्वव्यापकसाध्यसामानाधिकरण्यरूपव्याप्तेरुपेक्षाया निर्बीजत्वापत्तिः। केवलान्वयिसाध्यकानुमितिखण्डनार्थं निरुक्तव्याप्तिज्ञानस्य लाघवेनानुमितिहेतुत्वाभिधानमत्यन्तानुचितं प्रतिभातीति भावः।

नन्वित्यादेरुत्तरमाह उक्तास्वरसेनैवेति निरुक्ताव्याप्त्यतिव्याप्तिभयेनैवेत्यर्थः। साध्याभावादीत्यत्रादिपदोपन्यासेन यादृशलक्षणार्थः सम्भवति तादृशलक्षणार्थं प्रदर्शयितुमाह— तेनेति आदिपदोपादानेनेत्यर्थः। साध्यवत्त्वेति तथाच स्वाधिकरणनिरूपितसाध्यवत्त्वप्रकारकप्रमाविशेष्यत्वसामान्याभावकत्वं व्याप्तिः आदिपदेन ग्राह्या—इति न घटभिन्नं द्रव्यत्वादित्यादौ कुत्रापि दोषः, घटभिन्नत्वप्रकारकप्रमाविशेष्यत्वाभावस्य हेत्वधिकरणघटादौ स्वरूपसम्बन्धेनावर्त्तमानत्वात् हेत्वधिकरणावृत्तित्वप्रतियोगिवृत्तित्वस्यात्र लक्षणे स्वरूपसम्बन्धेनैव विवक्षितत्वात्। नवा कालिकसम्बन्धेन घटत्वाभावाभावस्य साध्यतायां गगनत्वहेतावव्याप्तिः, कालिकेन घटत्वाभावाभाववत्त्वप्रकारकप्रमाविशेष्यत्वाभावस्य स्वरूपसम्बन्धेन गगने वर्त्तमानत्वात्। नवा द्रव्यसामान्याभाववान् घटसत्त्वान्यतरत्त्वादित्यत्रातिव्याप्तिः, द्रव्यसामान्याभाववत्त्वप्रकारकप्रमाविशेष्यत्वाभावस्य हेत्वधिकरणघटे स्वरूपेण वर्त्तमानत्वात्। जातिसामान्याभाववत्त्वप्रकारकप्रमाविशेष्यत्वाभावस्यापि स्वरूपेण घटवृत्तित्वात्। तादृशप्रमाविशेष्यत्वसामान्याभावपर्यन्ताविवक्षणे वह्निमान् धूमादित्यत्रैवाव्याप्तिः, वह्निमत्त्वप्रकारकप्रमाविशेष्यत्वघटोभयाभावस्य धूमाधिकरणे स्वरूपेण वर्त्तमानत्वाद्, अतस्तादृशप्रमाविशेष्यत्वसामान्याभावपर्यन्तानुसरणम्, यद्वा विशेष्यताया विशेष्यभेदेन भिन्नतया पर्वतनिष्ठस्य वह्निमत्त्वप्रकारकप्रमाविशेष्यत्वस्याभावादेः स्वरूपेण धूमाधिकरणमहानसवृत्तित्वाद् वह्निमान् धूमादित्य-

जागदीशी

प्रकारकप्रमाविशेष्यत्वसामान्याभावस्य साध्याधिकरणत्वसामा-

नारायणी

न्ताऽव्याप्तिः। अतः सामान्याभावनिवेशः। एतेन व्यासज्यवृत्तिधर्मानवच्छि-न्नतादृशविशेष्यत्वनिष्ठप्रतियोगिताकाभावस्य हेत्वधिकरणावृत्तित्वविव-क्षणे नोक्तोभयाभावमादायाऽव्याप्तिरित्यपि समाहितम्। प्रमापदं विहाय साध्यत्वप्रकारकज्ञानविशेष्यत्वाभावस्य हेत्वधिरकणावृत्तित्वविवक्षणे वह्निमान् धूमादित्यत्रैवाऽव्याप्तिः, वह्निमत्त्वप्रकारकभ्रमविशेष्यताया जलह्रदादिनिष्ठाया अभावस्य हेत्वधिकरणपर्वतादिवृत्तित्वात्, अतः प्रमापर्यन्तानुसरणम्।

यद्यपि साध्यवत्त्वं साध्याधिकरणत्वमेव, तत्प्रकारकप्रमाविशेष्य-त्वाभावनिवेशापेक्षया साध्याधिकरणत्वसामान्याभावनिवेशस्यैव लघुत्वमिति विभाव्यते तदाप्याह साध्याधिकरणत्वेति। यत्तु विशे-ष्यताया ज्ञानसमानकालीनतया तस्या अव्याप्यवृत्तित्वेन तदभावस्य सर्वत्र सत्त्वादसम्भवः स्यात्, तत्र कुत्रापि हेत्वधिकरणावृत्तित्वस्य उपपादयितुमशक्यत्वादित्यत आह साध्याधिकरणत्वेत्यवतरणं—तन्म-न्दम्, साध्यवत्त्वप्रकारकप्रमाविशेष्यत्वस्य ईश्वरज्ञानीयतया तस्य अव्या-प्यवृत्तित्वासम्भवात्। स्वाधिकरणनिरूपितस्वरूपसम्बन्धावच्छिन्नवृत्ति-त्वाभाववत्साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्ना-धिकरणत्वसामान्याभावकत्वं व्याप्तिरित्येवं रीत्या व्याख्येयम्। तेन सम-वायावच्छिन्नवह्न्यधिकरणत्वाभावस्य धूमाधिकरणवृत्तित्वेऽपि वह्निमान् धूमादित्यादौ नाव्याप्तिः, नवा महानसीयवह्न्यधिकरणत्वाभावस्य हेत्व-धिकरणपर्वतादिवृत्तित्वेऽपि तत्राव्याप्तिः, अधिकरणत्वसामान्याभावा-विवक्षणेऽधिकरणताया अपि स्वरूपसम्बन्धात्मिकायाः प्रत्येकवृत्तिभिन्न-त्वाद् यत्किञ्चिन्महानसनिष्ठवह्न्यधिकरणतान्यक्तेरभावस्य धूमाधिकरण-पर्वतवृत्तित्वाद् वह्निमान् धूमादित्यत्राव्याप्तिः स्यात्, स्वाधिकरणवृत्ति-

जागदीशी

न्याभावस्य साध्यसमानाधिकरणसामान्याभावस्य वा लाभः। तथा च स्वाधिकरणावृत्तिसाध्यवत्त्वप्रकारकप्रमाविशेष्यत्वसामान्या-

नारायणी

त्वाभावोऽपि वृत्तित्वसामान्याभावो विवक्षणीयः, तेन धूमवान् वह्नेरित्यादौ धूमाधिकरणत्वसामान्याभावस्य वह्न्यधिकरणयत्किञ्चित्पर्वतवृत्तित्वाभाववत्त्वेऽपि नातिव्याप्तिः—इत्यास्तां विस्तरः।

साध्याधिकरणत्वत्वेन रूपेण साध्याधिकरणत्वसामान्याभावविवक्षणे साध्यवः पर्वताद्यन्यतमस्वाभावादेरुपादानासम्भवादाह-साध्यसमानाधिकरणेति साध्याधिकरणे वर्त्तमानो यस्तत्सामान्याभावस्य वेत्यर्थः। तथाच स्वाधिकरणनिरूपितवृत्तित्वाभाववत्साध्याधिकरणवृत्तित्वावच्छिन्नसामान्याभावकत्वं व्याप्तिरित्यर्थः।

अत्र साध्यसामानाधिकरण्यं नाभावविशेषणं, तथासति सर्वत्रैव साध्यसमानाधिकरणाभावपदेन गगनाभावस्यैव धर्त्तुं शक्यत्वात्तस्य च सर्वत्र हेत्वधिकरणे वर्त्तमानतया सर्वत्रासम्भवः स्यात्। अतः स्वरूपेण साध्याधिकरणे वर्त्तते यस्तत्सामान्याभावे स्वरूपेण स्वाधिकरणवृत्तित्वाभावो विवक्षणीयः।

अथ साध्यसमानाधिकरणो यः अयोगोलकघटान्यतरत्स्वरूपो धर्मस्तदभावस्य धूमाधिकरणवृत्तित्वाद् वह्निमान् धूमादित्यत्राव्याप्तिः, साध्याधिकरणताव्यापकीभूतानामभावे स्वाधिकरणावृत्तित्वविवक्षणे तु स्वव्यापकसाध्यसामानाधिकरण्यरूपव्याप्त्यपेक्षया निरुक्ताया व्याप्तेर्गुरुत्वादित्यस्य पूर्वमभिहितत्वादिति चेदेतदस्वरसेनैवात्र लक्षणे वाकारेणानास्थायाः सूचितत्वादिति ध्येयम्। साध्याधिकरणत्वादौ साध्यसामानाधिकरण्यादेः स्वरूपसम्बन्धावच्छिन्नतया सम्बन्धसामान्येन हेत्वधिकरणवृत्तित्वविवक्षणे पूर्वोक्तदोषाणां जागरूकतया तादृशवृत्तित्वादिकं स्वरूपसम्बन्धावच्छिन्नमेव वक्तव्यमित्याह स्वाधिकरणावृत्तित्व-

जागदीशी

भावकत्वं स्वाधिकरणावृत्तिसाध्याधिकरणतासामान्याभावकत्वं स्वाधिकरणावृत्तिसाध्यसमानाधिकरणसामान्याभावकत्वं वा पर्य्यवसितम्। तत्र स्वाधिकरणवृत्तित्वं साध्यासामानाधिकरण्यं तदवच्छिन्नाभावश्च विशेषणताविशेषेणैव वाच्यम्। अतो न कश्चिद्दोषः। साध्याभाववदवृत्त्याधिकरणतानिरूपकतावच्छेदकधर्मवत्त्वे

नारायणी

मित्यादि तथाच स्वाधिकरणनिरूपितवृत्तित्वं साध्यसामानाधिकरण्यं तदवच्छिन्नसामान्याभावश्च एकेनैव स्वरूपसम्बन्धेन विवक्षणीयमिति भावः। न कश्चिद्दोष इति। घटभिन्नं द्रव्यत्वादित्यादौ कुत्रापि नातिव्याप्त्यव्याप्तिरूपो दोषः इत्यर्थः। घटभिन्नत्वाधिकरणत्वसामान्याभावस्य घटवृत्तित्वान्नातिव्याप्तिः। कालिकेन घटत्वाभावाभावाधिकरणत्वसामान्याभावस्य महाकालादिनिष्ठस्य गगनाद्यवृत्तित्वात् सत्ताभावाधिकरणत्वसामान्याभावस्यापि स्वरूपेण जातिवृत्तित्वात्कुत्रापि नातिव्याप्त्यव्याप्तिः। द्रव्यसामान्याभावाधिकरणत्वसामान्याभावस्य जातिसामान्याभावाधिकरणत्वसामान्याभावस्य च हेत्वधिकरणघटादिवृत्तित्वान्न द्रव्यसामान्याभाववान् जातिसामान्याभाववान् वा घटसत्त्वान्यतरत्त्वादित्यादावतिव्याप्तिरिति तात्पर्य्यम्।

निरुक्तातिव्याप्त्यव्याप्तिं वारयतः कस्यचिन्मतमाह साध्येति साध्यतावच्छेदकसम्बन्धेन साध्यतावच्छेदकावच्छिन्नप्रतियोगिताकाभावाधिकरणनिरूपितस्वरूपसम्बन्धावच्छिन्नवृत्तित्वाभाववती याऽधिकरणता तन्निरूपितनिरूपकतावच्छेदकधर्मवत्त्वं व्याप्तिरित्यर्थे तात्पर्य्यमित्यर्थः। वह्निमान् धूमादित्यादौ वह्न्यभाववति स्वरूपेणावर्त्तमानाया धूमाधिकरणताया अवच्छेदकीभूतधूमत्वमादाय लक्षणसमन्वयः। धूमवान् वह्ने-

जागदीशी

तात्पर्य्यम् इत्यपि कश्चिदिति कृतं पल्लवितेन । यत्तु सत्ताभाववान् जातित्वादित्यादौ साध्याभाववदवृत्तित्वज्ञानमेव हेतुः साधनभेदेन व्याप्त्यननुगमात् अत एव दीधितिकृता स्वीकुरु वा तत्रेत्युक्तम्, यत्र साध्याभाववदवृत्तित्वं अप्रसिद्धं तत्रेत्यर्थात्,

नारायणी

रित्यादौ धूमाभाववति तप्तायःपिण्डे वह्न्यधिकरणताया वर्त्तमानत्वान्नातिव्याप्तिः ।

अत्र लक्षणे धूमवान् वह्नेरित्यादौ पर्वतनिष्ठवह्न्यधिकरणताया धूमाभावाधिकरणावृत्तित्वादतिव्याप्तिः, नच यद्रूपावच्छिन्नाधिकरणतासामान्ये साध्याभाववदवृत्तित्वाभावविवक्षणान्नेयमतिव्याप्तिरिति वाच्यम्, तथा सति यद्रूपावच्छिन्नाधिकरणतात्वव्यापकः साध्याभाववदवृत्तित्वाभावस्तद्रूपवत्त्वमित्यस्यैव पर्य्यवसिततया स्वव्यापकसाध्यसामानाधिकरण्यरूपव्याप्त्यपेक्षया निरुक्ताया व्याप्तेर्गुरुत्वात् केवलान्वयिसाधारणव्याप्त्यनभ्युपगमस्य निर्बीजतापत्तेरित्यस्वरसः कश्चिदित्युसूचितः ।

यत्र साध्याभाववदवृत्तित्वं प्रसिद्धं तत्र साध्याभाववदवृत्तित्वज्ञानमेवानुमितौ हेतुः, यत्रत्वप्रसिद्धं साध्याभाववदवृत्तित्वं तत्र केवलान्वयिनः सरणिरेवाभ्युपगन्तव्या इति दीधितिकृतामाशयं वर्णयतां मतं दूषयितुमुपन्यस्यति यत्त्विति । सत्ताभाववान् जातित्वादित्यादौ तु सत्तावदवृत्तित्वस्य प्रसिद्धत्वात्तादृशसाध्यकानुमितौ साध्याभाववदवृत्तित्वज्ञानस्य हेतुत्वमाह साध्याभावेति । नन्वेवं व्याप्तेरननुगम इत्यतस्तत्रेष्टापत्तिमाह साध्यसाधनेति । व्याप्तेरननुगमे दीधितिकारसम्मतिमाह अत एवेति । तथाच स्वाधिकरणावृत्तिसाध्याभावकत्वज्ञानं यत्र साध्याभाववदवृत्तित्वमप्रसिद्धं तत्रैव हेतुरिति भावः । यत्र=यादृश-

जागदीशी

तथा च यत्र तत्प्रसिद्धं तत्र तदभाव एव हेतुरिति । तन्न । एवमपि यत्राभावत्वविशिष्टघटाभावस्य कालिकसम्बन्धेनाभावे साध्ये आत्मत्वादिकं हेतुस्तत्राभावत्वविशिष्टघटाभावस्य साध्यवत्ताग्रहविरोधितानियामकेन कालिकसम्बन्धेनाधिकरणे ध्वंसे हेतुतावच्छेदकसमवायेन वृत्तित्वस्य हेत्वधिकरणे कालिकसम्बन्धेन वृत्तित्वस्य चाऽप्रसिद्ध्या उभयथाप्यव्याप्तेः । ननु एवं स्वत्वप्रवेशे हेतुभेदात्

नारायणी

स्थले । तत्प्रसिद्धं = साध्याभावाधिकरणनिरूपितवृत्तित्वं प्रसिद्धं । तत्र = तादृशस्थले । तदभाव एव = तादृशवृत्तित्वाभाव एव । हेतुः = अनुमितिप्रयोजकः । निरुक्तं मतं दूषयति तन्नेति । तथाच अभावत्वावच्छिन्नघटाभावस्य कालिकसम्बन्धावच्छिन्नप्रतियोगिताकाभावे स्वरूपसम्बन्धेन साध्ये आत्मत्वहेतौ साध्याभाववदवृत्तित्वलक्षणस्य स्वाधिकरणावृत्तिसाध्याभावकत्वलक्षणस्यच निरुक्तमतेऽव्याप्तिः साध्यवत्ताबुद्धिविरोधिताघटककालिकसम्बन्धेन साध्याभावात्मकाभावत्वविशिष्टघटाभावस्याधिकरणे ध्वंसे हेतुतावच्छेदकीभूतसमवायसम्बन्धावच्छिन्नवृत्तित्वाप्रसिद्धेः स्वाधिकरणे आत्मनि च कालिकसम्बन्धेन वृत्तित्वस्याप्रसिद्धेरित्याह यत्राभावत्वविशिष्टेति विशिष्टाधिकरणतायाः विलक्षणत्वमितिमते अभावत्वविशिष्टघटाभावस्य कालिकसम्बन्धेन ध्वंसे उपपादयितुं भावत्वविशिष्टस्येत्युक्तम् । अन्यथा घटाभावमात्रस्य कालिकेन महाकाले वर्त्तमानतया तत्र समवायसम्बन्धावच्छिन्नवृत्तित्वस्य प्रसिद्धत्वादव्याप्तिदानासङ्गतिः स्यादिति ध्येयम् । आत्मत्वादिकमिति । आदिना मनस्त्वपरिग्रहः । साध्यवत्वेति पूर्वोक्तार्थकम् । हेत्वधिकरणे = आत्मत्वाधिकरणे, आत्मनि । उभयथेति लक्षणद्वयानुसरणेऽपीत्यादिः ।

दीधितिः

ननुगमस्य प्रागेव स्वहस्तितत्वादिति। एतेन नीलेतररूपवान् नीलासमवेतत्वे सति गोत्वादित्यादिकं विलीयेत, विशेष्यस्य व्यभिचारित्वात् विशिष्टस्य चानतिरिक्तत्वादिति परास्तम्।

जागदीशी

अनन्तकार्य्यकारणभावापत्तिः अत आह स्वत्त्वेति। प्रागेव स्वव्यापकसाध्यसामानाधिकरण्यधियो हेतुत्वस्वीकारदशायामेव। स्वहस्तितत्वादित्यस्य भवद्भिरित्यादिः। अस्माभिस्तु हेतुमनन्तर्भाव्य साध्याभाववदवृत्तित्वज्ञानस्यैव हेतुत्वं स्वीक्रियते इति भावः। एतेन स्वाधिकरणावृत्तीत्यादिक्रमेणैव व्याप्तेर्निर्वचनेन। परास्तमित्यग्रेऽन्वयः। नीलरूपवान् नीलसमवेतत्वे सति गोत्वात् इत्यस्यैव सम्यक्त्वे साध्यसाधनकोटौ अभावप्रवेशो निष्फल इति चिन्तनीयम्। विशेष्यस्य व्यभिचारित्वात् गोत्वस्य नीलगवादौ। विशिष्टहेत्विति

नारायणी

स्वाधिकरणेत्यादिलक्षणे स्वत्वप्रवेशादननुगमं निराकुर्वतो दीधितिकारस्य स्वत्वाननुगमस्येत्यादिग्रन्थमवतारयति नन्वेवमित्यादि स्वत्वप्रवेशेति स्वाधिकरणेत्यादिनेत्यादिः। हेतुभेदात् = धूमाद्यालोकादिभेदात्। अनन्तेति स्वत्वस्यैकस्य वक्तुमशक्यत्वादिति हृदयम्। स्वव्यापकेत्यादिलक्षणे स्वत्वस्यावश्यं निवेशनीयतया तादृशव्याप्तिज्ञानस्य हेतुत्वपक्षे हेतुभेदात्कार्यकारणभावोऽवश्यमस्तीति मन्मते भवतामाक्षेपो निरर्थक इत्याह भवद्भिरित्यादिरिति स्वत्वानन्तर्भावेऽपि अस्माकं मते कार्यकारणभावस्य न नानात्वमित्याह। साध्याभावेति। स्वाधिकरणावृत्तित्वादि, आदिना साध्याभाववदवृत्त्यधिकरणताकत्वरूपव्याप्तिपरिग्रहः। दीधितिकारमाक्षिपति नीलेति। तथाच साध्याभाववदवृत्तित्वं

जागदीशी

परमते । स्वमते तु विशिष्टगोत्वादेः केवलान्वयिनः पथि प्रस्थाप्य-त्वमेव इत्याशयेनाह परम्परेति । विशेष्यविशेषणयोः प्रत्येकाधिकर-णताद्वयमेव विशिष्टवत्त्वप्रतीतेर्विषयः अत एव प्रत्येकाधिकरण-

नारायणी

लक्षणे नीलरूपवान् नीलसमवेतत्वे सति गोत्वादित्यत्राप्यव्याप्तिः सम्भ-वति विशेष्ये गोत्वे नीलरूपाभाववद्वृत्तित्वसत्त्वे विशिष्टेऽपि तादृश-वृत्तित्वस्यानपायादिति दीधितिकृता नीलेतररूपवानित्यादिना नीलेतर-त्वरूपाभावस्य नीलासमवेतत्वे सतीत्यत्रापि नञर्थाभावस्य च प्रवेशः कथं कृतः इत्येवं जगदीशस्याक्षेप इत्यवधेयम् । अत्र किञ्चित् कुत्र विशेष्य-स्य व्यभिचारित्वमित्यत्राह नीलगवादाविति । तथाच नीलेतररूपाभाव-वति नीलगवि गोत्वस्य विशेष्यस्य वृत्तित्वं निराबाधमेवेति भावः। विशि-ष्टस्यानतिरिक्तत्वं न दीधितिकारसम्मतमित्याह स्वमते त्विति दीधिति-कारमते त्वित्यर्थः । विशिष्टगोत्वादेः = नीलासमवेतत्वविशिष्टगोत्वादेः, केवलान्वयिन इत्यादि । तथाच तादृशविशिष्टहेतुकानुमानं नाङ्गीकरणीयम्। नीलेतररूपं तद्गोवृत्ति इत्यनुमानं वाङ्गीकरणीयम् । यदिच नीलेतररू-प्पानुमितिरपि सर्वसम्मता तदाप्याह परम्परेति दीधितिकार इति शेषः। परम्परेत्यादेः केषांचिन्मतसिद्धावतरणान्तरमाह विशेष्यविशेषणयो-रिति विशेषणाधिकरणत्वं विशेष्याधिकरणत्वमित्यधिकरणताद्वयमेवे-त्यर्थः । विशिष्टवत्त्वेति नीलासमवेतत्वविशिष्टगोत्ववानित्याकारकज्ञान-विषय इत्यर्थः ।

ननु तादृशाधिकरणताद्वयस्य विशिष्टवत्त्वज्ञानविषयत्वे किं मानमि-त्यत आह अतएवेति तादृशाधिकरणताद्वयस्य विशिष्टवत्ताप्रतीति-विषयत्वादेवेत्यर्थः । प्रत्येकेति विशेषणाधिकरणत्वाभावनिश्चयदशायां

दीधितिः

साध्याभावस्य विशिष्टहेत्वधिकरणावृत्तित्वात् परम्परासम्बन्धेन विशेषणविशेष्यसम्बन्धस्यैव वा तत्र हेतुत्वादिति ॥

जागदीशी

त्वस्य अभावनिश्चयेऽपि न विशिष्टवत्त्वबुद्धिरिति प्राचां मते विशिष्टनिरूपिताधिकरणत्वाप्रसिद्धौ आह परम्परेत्यादीत्यपि वदन्ति। परम्परा च अत्र स्वाश्रयाधिकरणत्वम् अवच्छेदकत्वाख्य-

नारायणी

विशेष्याधिकरणत्वाभावनिश्चयदशायाञ्चेत्यर्थः। नविशिष्टेति नविशिष्टगोत्ववानित्याकारकबुद्धिरित्यर्थः। तथाच नीलासमवेतत्वविशिष्टगोत्ववानित्याकारकज्ञानविषयत्वमवश्यं नीलासमवेतत्वाधिकरणत्वे गोत्वाधिकरणत्वे चावश्यं स्वीकरणीयम्, अन्यथा नीलासमवेतत्वाधिकरणत्वाद्यभावनिश्चयदशायामपि नीलासमवेतत्वविशिष्टगोत्ववानित्याकारकबुद्ध्यापत्तिः स्यादिति भावः।

उपसंहरति विशिष्टेति तथाच स्वाधिकरणावृत्तित्वादिलक्षणेऽपि नीलेतररूपवान् नीलासमवेतत्वविशिष्टगोत्वादित्यत्र अव्याप्तिरस्त्येव विशिष्टहेतोरधिकरणत्वस्यैवाप्रसिद्धत्वादित्याशयः, विशिष्टवत्ताप्रतीतेः प्रत्येकाधिकरणवाद्वयावगाहित्वं न सर्वसम्मतमित्याशयेन वदन्तीत्युक्तम्।

ननु नीलासमवेतत्वविशिष्टगोत्वस्य हेतुत्वाभावे परम्परया कस्य हेतुत्वमित्यत आह स्वाश्रयेति स्वं नीलासमवेतत्वगोत्वयोः सम्बन्धः सामानाधिकरण्यं तदाश्रयः तादृशविशिष्टगोत्वं तदधिकरणत्वमित्यर्थः तादृशसामानाधिकरण्यसम्बन्धस्य हेतुत्वे तस्य तादृशगोत्व एव सत्त्वेन नीलेतररूपाभावान्निरुक्तपरम्परासम्बन्धस्य व्यभिचारित्वं स्यादतः

जागदीशी

स्वरूपसम्बन्धो वा बोध्यः । तत्रेति । यत्र विशिष्टस्य व्याप्यत्वव्यवहारः तत्र विशेषणविशेष्यसम्बन्धस्यैव व्याप्यत्वग्रहादनुमितिरिति भावः ।

इति श्रीजगदीशतर्कालङ्कारकृता केवलान्वय्यनुमान-
दीधितिटीका समाप्ता ।

नारायणी

स्वाश्रयाधिकरणत्वसम्बन्धेन तादृशपरम्परासम्बन्धस्य सामानाधिकरण्यस्य हेतुत्वानुसरणम् इदमपि विशिष्टस्यानतिरिक्तत्वमतेनैव बोध्यम् , अन्यथा तादृशसामान्याश्रयगोत्वाधिकरणतया नीलगव्यपि सत्त्वेन तत्र नीलरूपाभावेन परम्परासम्बन्धस्यापि निरुक्तसामानाधिकरण्यस्य व्यभिचारित्वं दुर्वारं स्यादिति ध्येयम् । यदि च विशिष्टं शुद्धान्नातिरिच्यते इत्यपि मतमादरणीयं स्यात्तदाप्याह अवच्छेदकत्वाख्येति तथाच नीलासमवेतत्वगोत्वयोः सामानाधिकरण्यं शुक्लादिगव्यवच्छेदेनेति प्रतीतिबलादवच्छेदकतासम्बन्धेन सामानाधिकरण्यस्य शुक्लादिमति गवि वर्त्तमानतया तत्र नीलेतररूपसत्त्वेन न कोऽपि दोष इति हृदयम् ।

विशिष्टस्येति नीलासमवेतत्वविशिष्टगोत्वादेरित्यर्थः । अव्याप्यत्वमिति विशिष्टस्यानतिरिक्तत्वादिः । तत्र = तादृशस्थले । विशेष्येति गोत्वनीलासमवेतत्वयोः सामानाधिकरण्यरूपसम्बन्धस्यैवेत्यर्थः । अनुमितिरिति = प्रकृतसाध्यस्येत्यादिरिति ।

योऽयं धीरवरो नयाब्धिपतितानुद्धर्त्तुकामः स्वयम्  
न्यायग्रन्थगणं निधाय तरणीटीकाख्यकारातुलाम् ।  
यस्याशेषकृपावशादहमहो टीकाद्वयं निर्ममे  
श्रीवामाचरणाय गौड़गुरवे तस्मै नमो धीमते ॥

इति श्रीन्यायाचार्यकेशवद्विवेदिविरचिता केवलान्वयि-
ग्रन्थस्य नारायणीटीका समाप्ता ।

ॐ

# प्रश्नपत्राणि

१९४७

(१) तच्चानुमानं त्रिविधं केवलान्वयि केवलव्यतिरेक्यन्वयव्यतिरेकिभेदादिति मूलम् ।

अत्रानुमानस्य चातुर्विध्याद्यापत्तिवारकविधशब्दार्थः कीदृशो वक्तव्यः ? अत्र केन सम्बन्धेन केन रूपेण हेतु साध्यभावः ?

(२) प्रकृतव्याप्तिग्राहकज्ञानविषयसहचारत्वव्यापकप्रकृतव्याप्तिघटकसहचारत्वकत्वमिति केवलान्वय्यनुमानलक्षणं भट्टाचार्योक्तदिशा परिष्कृत्य लक्षणस्यानुगमः कार्य्यः। साध्याभाववदवृत्तित्वमेव व्याप्तिलाघवात् प्रायशः साधनभेदेऽप्यभेदादिति दीधितिः । अत्र धूमालोकादिपरामर्शानामेकरूपेण हेतुत्वे कारणतावच्छेदकीभूतनिश्चयत्वं तथा विवक्षणीयं यथा वह्निव्याप्यधूमवानयं वह्निव्याप्यालोकवान् नवेति ज्ञानादनुमित्यनुपपत्तिर्न भवेत् इति ।

१९४८

तथापि यज्ज्ञानजनकीभूतज्ञाननिष्ठस्य हेतुधर्मिकसाध्यसामानाधिकरण्यावगाहित्वसाध्याभावधर्मिकहेत्वभावसामानाधिकरण्यावगाहित्वयोरन्यतरस्य तादात्म्येन व्यापकमित्यादि जगदीशः । अत्र स्वरूपसम्बन्धेन व्यापकत्वोक्तौ को दोषः ? प्रकृतहेतुधर्मिकेत्यस्य का व्यावृत्तिः? गुरुतरतादृशान्यतरविषयितात्वव्यापकत्वमपहाय निरुक्तयज्ज्ञानजनकीभूतज्ञानत्वव्यापकत्वनिवेशे का हानिः ?

अथवा

गृहीतव्याप्तिभेदात् केवलान्वय्यादिभेदे केवलव्यतिरेक्यनुमानलक्षणं जगदीशोक्तदिशा तथा परिष्क्रियताम् यथा तद्धूमत्वेन धूमहेतुककेवलान्वय्यात्मके धूमत्वेन धूमहेतुककेवलव्यतिरेकिणि नाव्याप्तिः प्रसज्येत । व्यावृत्तत्वस्यावृत्तत्वे व्यावृत्तत्वमेव केवलान्वयि व्यावृत्तत्वे यतएव व्यावृत्तं व्यावृत्तत्वं तदेव केवलान्वयीति धर्मत्वस्य हेतोरनैकान्तिकत्वादिति मूलं सोपष्टम्भं व्याख्यायताम् ।

१९४९

(१) तच्चानुमानं त्रिविधम् केवलान्वयिकेवलव्यतिरेक्यन्वयव्यतिरेकिभेदादिति मूलम्। अत्र केन रूपेण केन सम्बन्धेन वा हेतुसाध्यभावः? अनुमानस्य चातुर्विध्याद्यापत्तिवारकत्रिधाशब्दार्थो वा कीदृशो वक्तव्यः?

(२) प्रकृतहेतुप्रकारकनिश्चयोत्तरप्रकृतसाध्यविधेयकानुमितित्वघटितधर्मावच्छिन्नस्वनिष्ठजन्यतानिरूपितजनकतावच्छेदकीभूतप्रकारितात्वव्यापकप्रकृतसाध्यान्वयव्याप्तिप्रकारितात्वकानुमितिकरणत्वमिति जगदीशः।

(३) अत्र प्रकृतहेतुसाध्यपदयोः का व्यावृत्तिः, तादृशसाध्यविधेयकत्वघटितधर्मावच्छिन्नजन्यतानिवेशेनैव सामञ्जस्ये अनुमितिपदस्य किं प्रयोजनम्? व्याप्तिघटकपदार्थमात्रप्रकारितायाः निरुक्तजनकतावच्छेदकत्वेन तत्र स्वान्वयव्याप्तिप्रकारितात्वस्यासत्त्वादसम्भवो वा कथं वारणीयः।

(४) वह्न्यभाववान् वह्निव्यापकाभावप्रतियोगिमत्त्वादित्यादावन्वयव्याप्तेरवच्छेदिका व्यतिरेकव्याप्तिर्नतु सैवेति दीधितिग्रन्थस्य जगदीशोक्तदिशाऽऽशयः प्रदर्शनीयः।

१९५०

(१) प्रकृतहेतुकप्रकृतसाध्यकानुमितिहेतुज्ञानविषयव्याप्तित्वव्यापकप्रकृतसाध्यान्वयव्याप्तित्वकत्वमिति दीधितिकृदुक्तलक्षणं जगदीशोक्तदिशा परिष्कृत्य प्रकृतहेतुसाध्यपदयोर्व्यावृत्तिः प्रदर्शनीया।

(२) प्रकृतहेतुकप्रकृतसाध्यकान्वयपरामर्शाजन्यप्रकृतहेतुकप्रकृतसाध्यकव्यतिरेकपरामर्शजन्यप्रकृतसाध्यकानुमितिकरणत्वं वेति जागदीशी। अत्राजन्यान्तदलस्य का व्यावृत्तिः? प्रकृतहेतुकप्रकृतसाध्यकान्वयपरामर्शजन्यप्रकृतसाध्यकानुमितिकरणत्वमिति लघुलक्षणं वा कथं परित्यक्तम्?

१९५१

(१) प्रकृतहेतुधर्मिकप्रकृतसाध्यव्याप्यतावगाहियज्ज्ञानजनकीभूतज्ञाननिष्ठस्य प्रकृतहेतुधर्मिकसाध्यसामानाधिकरण्यावगाहित्वसाध्याभावधर्मिकहेत्वभावसामाधिकरण्यावगाहित्वयोरन्यतरस्य व्यापकं प्रकृतहेतुधर्मिकप्रकृतसाध्यसहचारविषयित्वं तज्ज्ञानत्वमिति जा०टी० । अत्र जनकीभूतेत्यन्तस्य किं प्रयोजनम् ? स्वरूपसम्बन्धेन व्यापकत्वोक्तौ को दोषः?

यज्ज्ञानजनकीभूतज्ञानत्वव्यापकव्यतिरेकसहचारावगाहिताशून्यत्वं तज्ज्ञानत्वमिति लघुलक्षणं वा कथं परित्यक्तम् । (१०)

(२) अन्वयव्यतिरेकित्वं तु प्रकृतहेतुकप्रकृतसाध्यान्वयव्यतिरेकोभयपरामर्शजन्यप्रकृतहेतुकप्रकृतसाध्यकानुमितिकरणत्वमिति जा०टी० । अत्र प्रकृतहेतुसाध्यपदयोः किं प्रयोजनम् ? यत्र वह्निव्याप्यधूमवान् वह्न्यभावव्यापकीभूताभावप्रतियोगिमाँश्च पर्वतः इति ज्ञानाद्वह्न्यनुमितिः, अत्रान्वयव्यतिरेकिणि धूमेऽव्याप्तिर्वा कथं वारणीया ।

अथवा

व्यावृत्तस्याव्यावृत्तत्वे व्यावृत्तत्वमेव केवलान्वयि व्यावृत्तत्वे यत एव व्यावृत्तं व्यावृत्तत्वं तदेव केवलान्वयीति धर्मत्वस्यानैकान्तिकत्वादिति मूलं सोपष्टम्भं व्याख्यायताम् ।

१९५२

(१) आचार्य्यमते केवलान्वय्यनुमानलक्षणं जगदीशोक्तरीत्या निष्कर्षणीयम् ।

(२) अभावाभावस्य प्रतियोगितावच्छेदकसम्बन्धस्वरूपत्वमभ्युपगच्छतां मिश्राणाम्मतं निराक्रियताम् । दीधितिकृतोऽभिमतार्थापत्तेः प्रमाणान्तरत्वं व्यवस्थाप्यताम् ।

१९५३

(१) प्रकृतहेतुधर्मिकसाध्यव्याप्यत्वावगाहिज्ञानजनकीभूतज्ञाननिष्ठस्य प्रकृतहेतुधर्मिकसाध्यासामानाधिकरण्यावगाहित्वेत्यादिलक्षणेन

पूर्वोक्तदोषवारणं कथं सम्भवतीति सम्यगुपपाद्य ज्ञानपदयोः प्रयोजनं वर्ण्यताम्।

(२) वृत्तिमदत्यन्ताभावाप्रतियोगित्वं तथा निर्दुष्टं परिष्करणीयं येन संयोगाभावादौ नाव्याप्तिः प्रसज्येत।

अथवा

साध्याभाववदवृत्तित्वज्ञानस्यैवानुमितिहेतुत्वं न हेतुव्यापकसाध्यसामानाधिकरण्यज्ञानस्येति ग्रन्थोक्तरीतिमनुरुध्य साधु उपपादनीयम्।

१९५४

(१) प्रकृतव्याप्तिग्राहकज्ञानविषयसहचारत्वं घटादिसहचारस्यापि तत्र साध्यान्वयसहचारत्वाभावादव्याप्तिः कथं वारिता जगदीशेन? उक्तदोषवारकलक्षणघटकपदानां च का व्यावृत्तिः?

प्रतियोगिवैयधिकरण्यघटितं केवलान्वयित्वं तथा परिष्करणीयं यथा गगनादौ नातिव्याप्नुयात्, ज्ञानत्वादेः स्ववृत्तिप्रमेयत्ववत्त्वसम्बन्धेन केवलान्वयित्वं च समर्थितं स्यात्।

अथवा

व्यापकताघटितस्य व्याप्तिज्ञानस्य कारणत्वं कथं निराकृतं ग्रन्थकृता? इति।

---

श्रीविश्वनाथतर्कपञ्चानन-विरचित

# न्यायसिद्धान्तमुक्तावली

(हिन्दी अनुवाद, व्याख्या, दार्शनिक आलोचना एवं विवेचना सहित)

## ले०—श्रीधर्मेन्द्रनाथशास्त्री तर्कशिरोमणि एम् ए.

एस्० ओ० एल्० अध्यक्ष सं० वि० मेरठ कालेज

यह ग्रंथ न्याय तथा वैशिषिक मत के प्रतिपादक होने के साथ ही भारतीय समस्त दर्शनों का पथप्रदर्शक है। इसके अध्ययन के विना दर्शनों के गूढ़ तत्त्वों को समझना उतना ही असंभव है जितना कि आँख के विना रूप को जानना। ग्रन्थकार ने गहन दार्शनिक तत्त्वों का विवेचन नव्य न्याय की प्रौढ़ शैली से प्रस्तुत किया है जिसका रस हिन्दी तथा अंग्रेजी के दर्शन के जिज्ञासु छात्र वृन्द नहीं ले पा रहे थे। विद्वान् लेखक ने इस कठिनाई को दूर करने के लिये दार्शनिक विचारों को सरल हिन्दी में साफ साफ खोल दिया है, जिससे अब सभी विद्वान इस प्रौढ तथा परम उपयोगी ग्रंथ का मर्म समझ सकते हैं। मूल्य ५।)

# भारतीय-दर्शनशास्त्र

इस पुस्तक में विद्वान लेखक (श्रीधर्मेन्द्रनाथशास्त्री) ने ऋग्वेद से लेकर बौद्ध जैन सांख्य वेदान्त मीमांसा न्याय आदि सभी दार्शनिक तत्त्वों का आधुनिक शैली से सरल सुबोध हिन्दी में विवेचन किया है, साथ ही उन उन दर्शनों के इतिहास विकास आदि पर भी संक्षिप्त पर स्पष्ट प्रकाश डाला है। अच्छे कागज के संस्करण का मूल्य ३) रुपया, साधारण कागज का संस्करण २॥)

प्रकाशकः—

## मोतीलाल बनारसीदास

पोस्ट बक्स नं० ७५, नेपालीखपरा बनारस।

2100

# न्यायसिद्धान्तमुक्तावली

## हिन्दी अनुवाद और व्याख्या

### दार्शनिक आलोचना और विवेचना सहित

( प्रथम भाग )

लेखक:— अध्यापक धर्मेन्द्रनाथ शास्त्री तर्कशिरोमणि
एम. ए., एम. ओ. एल.

अध्यक्ष संस्कृत विभाग, मेरठ कॉलेज, मेरठ।

न्यायसिद्धान्तमुक्तावली को भारतीय दर्शन के किसी भी सम्प्रदाय की दुरूह, जटिल और पारिभाषिक भाषा और सिद्धान्तों में प्रवेश पाने के लिये द्वार समझा जाता है। परन्तु दर्शन-शास्त्र की प्रथम प्राइमर होने पर भी यह ग्रन्थ नव्य-न्याय की जटिल शब्दावली और प्रक्रिया से युक्त होने के कारण पर्याप्त कठिन है। इसका प्रथम भाग यों तो प्रत्यक्ष खण्ड कहलाता है, परन्तु उसमें प्रत्यक्ष प्रमाण के निरूपण के साथ साथ प्रारम्भ की प्रस्तावना में न्याय-वैशेषिक का लगभग सारा ही विषय संक्षिप्त रूप से आ जाता है। इस प्रकार न्यायसिद्धान्तमुक्तावली के प्रथम खण्ड को भारतीय दर्शन का द्वार समझना चाहिए।

प्राचीन पद्धति से पढ़ने वाले छात्र, विशेष कर प्रारंभ में, दर्शन शास्त्र जैसे विषय का भी अध्ययन रटकर ही करते पाये जाते हैं। परन्तु इस व्याख्या में दार्शनिक तत्त्वों को इस प्रकार सुलझा कर समझाया गया है कि जिससे पढ़ने वालों के अन्दर दार्शनिक बुद्धि का विकास हो।

पुस्तक का मूल्य कपड़े की जिल्द सहित ५।)

मिलने का पता :—

**मोतीलाल बनारसीदास, नेपाली खपरा, बनारस।**

